महाराजाधिराज-कामेश्वरसिंहग्रन्थमालायाः
नवमं पुष्पम्

महामहोपाध्याय माधवकृतः

# अद्भुतदर्पणः




सम्पादकौ
१ विद्यावारिधि प० श्रीरामचन्द्र झा
उपाचार्योऽध्यक्षश्च
स्नातकोत्तर-ज्यौतिष-विभागः
कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयः, दरभङ्गा
२ प० श्रीधर्मनाथ झा

प्रकाशकः—कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयः
कामेश्वरनगरम्, दरभङ्गा

शकाः १९०६, १९८४ ई०    मूल्यम्—४५.०० रू० (पञ्चचत्वारिंशद् रूप्यकाणि)

महाराजाधिराज - कामेश्वरसिंह - ग्रन्थमालायाः

नवमं पुष्पम्

महामहोपाध्यायमाधवकृतः

# अद्भुतदर्पणः


सम्पादकौ

१. विद्यावारिधि प० श्रीरामचन्द्र झा,

उपाचार्योऽध्यक्षश्च

स्नातकोत्तर-ज्यौतिष-विभागः

कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयः,

कामेश्वरनगरम्, दरभङ्गा

२. प० श्रीधर्मनाथ झा



प्रकाशकः

कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयः,

कामेश्वरनगरम्, दरभङ्गा

श्रीहनुमज्जन्मोत्सवः
दि० २३।१०।१९८४ ई०

मूल्यम् - ४५ रूप्यकाणि
(पञ्चचत्वारिंशद्रूप्यकाणि)

# आमुखम्

अथायं प्रकाश्यते मैथिलभूसुरवंशावतंस-दैवज्ञशिरोमणि-महामहोपाध्यायमाधवकृतोऽद्भुतदर्पणाख्यो ज्यौतिषसंहिताग्रन्थः ।

भारतीयपरंपरायां ज्यौतिषसंहितास्कन्धस्य सुविदितमेव महत्त्वं समेषाम् । ग्रन्थेऽस्मिन् ग्रहचारप्रकृतिविकृति-वायुवृष्टि-परिवेषेन्द्रचापभूकम्पोल्कादिग्दाहगन्धर्वनगरसन्ध्याहस्त्यश्वखञ्जरीटादिभिर्जगतः शुभाशुभफलानि सम्यक् प्रतिपादितानि तत्तत्प्रामाणिक-ग्रन्थाननुसृत्य ग्रन्थकृता ।

महतीं समुपयोगितां समवलोक्यास्य ग्रन्थस्य प्रकाश्यतामानीय विदुषां पुरतः समुपस्थाप्यते । दैवज्ञमूर्धन्यविरचितं ग्रन्थरत्नमिदं जायतां जिज्ञासूनां जिज्ञासासमाधानाय विदुषां विनोदाय जगन्मङ्गलाय चेति ।

विदुषां वशंवदः
डॉ० जयमन्त मिश्रः,
कुलपतिः,
कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयः,
कामेश्वरनगरम्, दरभङ्गा

श्रीहनुमज्जन्मोत्सवः
दि. १३।१०।१९८४ ई०

# भूमिका

वेदप्रतिपादितानि सर्वाण्यपि यज्ञादिकर्माणि कालाधीनानि। तस्य कालस्यावबोधो यतो ज्यौतिषशास्त्रादेव सम्पद्यतेऽतो ज्यौतिषस्य वेदाङ्गत्वं युक्तियुक्तमेव। तत्र वेदस्य षडङ्गानि - यथोक्तं **भास्करेण**—

शब्दशास्त्रं मुखं ज्यौतिषं चक्षुषी श्रोत्रमुक्तं निरुक्तं तु कल्पः करौ।
या तु शिक्षाऽस्य वेदस्य सा नासिका पादपद्मद्वयं छन्द आद्यैर्बुधैः॥

इति। तत्रापि यथाऽन्धोऽकिञ्चित्करस्तथैव वेदनयनज्योतिर्ज्ञानविहीनो जनोऽपि। अतएवोक्तं **भास्करेणैव**—

वेदचक्षुः किलेदं स्मृतं ज्यौतिषं मुख्यता चाङ्गमध्येऽस्य तेनोच्यते।
संयुतोऽपीतरैः कर्णनासादिभिश्चक्षुषाङ्गेन हीनो न किञ्चित्करः॥

अपि च—

अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम्।
प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ॥

अन्यानि शास्त्राणि विनोदमात्रं न तेषु किञ्चित् खलु प्रत्ययोऽस्ति।
चिकित्सितज्यौतिषमन्त्रवादाः पदे पदे प्रत्ययमामनन्ति॥

इति। तदेतस्य ज्यौतिषशास्त्रस्य सूर्यादयोऽष्टादशाचार्याः प्रवर्त्तकाः। तथाहि

**काश्यपः**— सूर्यः पितामहो व्यासो वशिष्ठोऽत्रिः पराशरः।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः॥
लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः।
शौनकोऽष्टादशाश्चैते ज्योतिःशास्त्रप्रवर्त्तकाः॥

इति। तदेवं भूतस्य ज्यौतिषस्य त्रयः स्कन्धाः प्रसिद्धाः, **सिद्धान्त - होरा-संहिताख्याः**। यथोक्तं **वराहमिहिरेण** -

ज्योतिःशास्त्रमनेकभेदविततं स्कन्धत्रयाधिष्ठितं
तत्कात्स्न्योंपनयस्य नाम मुनिभिः संकीर्त्यते संहिता ।
स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानन्त्वसौ
होराऽन्योन्यविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः ॥

**नारदेन** – सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम् ।
वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमनुत्तमम् ॥

तत्र सिद्धान्ते त्रुट्यादिप्रलयान्तकालकलनम्, भूग्रहनक्षत्रादिस्थितिवर्णनम्, व्यक्ताव्यक्तगणितनिरूपणम्, वेधादिना ग्रहस्फुटीकरणम् , यन्त्रस्वरूपप्रतिपादनमित्यादयो विषयाः स्फुटतया वर्ण्यन्ते । यथोक्तं **भास्करेण**--

त्रुट्यादिप्रलयान्तकालकलना मानप्रभेदः क्रमाच्
चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः ।
भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते
सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः ॥

**होरायां** मानवादिप्राणिषु ग्रहप्रभावो विविच्यते । तत्र जन्तोर्जन्मकालिकाधानकालिकप्रश्नकालिकवर्षप्रवेशादिकालिकसकलशुभाशुभफलानि सम्यगादिश्यन्ते । एवमेवात्र गर्भाधानचूडाकरणोपनयनविवाहयात्रागृहारंभगृहप्रवेशादिमुहूर्त्तानां विभिन्नानां प्रश्नशकुनताजिकादिविषयाणां हस्तललाटरेखाणां मानवाकृतीनां तच्छरीरान्तर्गततिलादिचिह्नानाञ्चापि शुभाशुभविचारो विधीयते ।

**संहितायां** सूर्यादिग्रहचारप्रकृतिविकृतिप्रमाणवर्णाकृतिकिरणद्युतिसंस्थानोदयास्तमार्गवक्रसमागमयुद्ध - सप्तर्ष्यादिचार - वायुवृष्टिसन्ध्याविद्युद्दिग्दाहगन्धर्वनगरपरिवेषशक्रचापभूकम्परजोनिर्घातवृक्षलतागुल्मवास्तुस्त्रीपुरुषलक्षणशकुन-पिटकलक्षणवस्त्रच्छेदन - हस्त्यश्वश्वानखञ्जरीटगोवृषमहिषमार्जारादिवशेन सांसारिकानां शुभाशुभफलानि प्रतिपाद्यन्त इति ।

प्रकृतग्रन्थप्रणेता बुधवाल - डुमरावंशीयो वत्सगोत्रीयो महामहोपाध्याय**माधवः** । अस्याग्रजो **महोपाध्याय-मतिनाथः**, अनुजश्च महामहोपाध्याय-

गोविन्दः । एतत्पिता महामहोपाध्यायाग्निहोतृकरघुनाथः, पितामहो भवानीनाथः, प्रपितामहो भीरः, वृद्धप्रपितामहो हरिः, अतिवृद्धप्रपितामहो गुणीश्वरः, परमातिवृद्धप्रपितामहो भानुकरोपाध्यायः ।

भानुकरोपाध्यायस्य क्रमेण महेश्वर-गौरीश्वर-सत्कविविश्वेश्वरोपाध्याय गुणेश्वर-गुणीश्वर-गङ्गेश्वर-म० म० रुचिकर-रतिकरा इत्यष्टौ सुताः आसन् । तेषु सत्कविविश्वेश्वरः स्मृतिसमुच्चयकारः, म० म० रुचिकरः प्रबोधचन्द्रोदयनाटकटीकाकारः ओइनवारवंशीय-महाराज-भैरवसिंहसमकालिकश्च । गुणीश्वरस्तु शुद्धिदीपिकाकृन्महामहोपाध्याय कोणेश्वरापरनामक-झोपाख्य-मुरारिमातामहः ।

सत्कविविश्वेश्वरोपाध्यायवंशजो रघुनाथोपाध्यायो महाराजमाधवसिंहेभ्यो ११८२ सालसंज्ञकेऽब्दे (१७७४ ई०) हरिवंशदक्षिणारूपां दशबीघापरिमितभूमिं सम्प्राप्य मधुबनीमण्डलान्तर्गत दीपग्रामे वसतिञ्चकार । इदानीमपि तद्वंशजाः (प० श्रीतेजनाथझा, प० श्रीकञ्जनाथझा, प० श्रीगङ्गानाथझा प्रभृतयः) तद्ग्रामे निवसन्ति । तद्दानपत्रन्तु प० श्रीगङ्गानाथझामहोदयस्य पुत्र-(प० श्रीशशिनाथ झा) सविधे साम्प्रतमपि विद्यते ।

म० म० माधवः गुणीश्वरात्षष्ठपीठिकायाम्, रघुनाथोपाध्यायस्तु सत्कविविश्वेश्वरोपाध्यायात्सप्तमपीठिकायान्तेन म० म० माधवस्यावस्थितिकालः १६५०- ७५० ई० मध्ये निश्शङ्कं वक्तुं शक्यते ।

भारतीयज्यौतिषे संहितास्कन्धस्य विशिष्टं स्थानं विद्यते । वेदेऽपि धूमकेतूल्कादीनां समुल्लेखो दृश्यते । तथाहि अथर्वसंहितायाम् (१९।९) "उत्पाताः पार्थिवान्तरिक्षाशं नो दिविचरा ग्रहाः । शन्नो भूमिर्वेपमाना शमुल्कानिर्हतञ्च यत् । नक्षत्रमुल्काभिहतं शमस्तु । शन्नो ग्रहाश्चान्द्रमसाः शमादित्याश्च राहुणा । शन्नो मृत्युर्धूमकेतुः शं रुद्रास्तिग्मतेजसः" । तथा च वर्षायनमासर्तुमुहूर्त्तदिनग्रहनक्षत्रग्रहणादिज्योतिर्विषयाणां वेदेषु बहुत्र सम्यग्विवेचनं विलोक्यते । अतोऽनुमीयते यत्पुराऽपि यथोक्तविषयैः सांसारिकाणां शुभाशुभफलानि दैवज्ञैरादिश्यन्ते स्म । तदनूपनिषत्पुराणरामायणमहाभारतादिप्राचीनग्रन्थेषु प्राचुर्येणायं संहिताविषयः प्रसङ्गक्रमे समुपलभ्यते । ज्यौतिषे

तुवसन्तराजशाकुन-वाराहसंहिताऽद्भुतसागरादयः संहिताग्रन्थाः प्रसिद्धाः। एषु संहितापदार्थाः विस्तरेण सम्यग्व्यावर्णिताः।

प्रकृतग्रन्थोऽद्भुतसागरादिसंहिताग्रन्थाननुसृत्य विरचितो म० म० माधवेन। यथोक्तं स्वयमेव ग्रन्थादौ-"यथा सागरमालोच्य इह ग्रन्थो विरच्यते"॥ इति। यद्यप्यत्रत्या विषया अद्भत-सागरानुरूपाः प्रायो दृश्यन्ते किन्तु सत्यपि साम्ये वहुत्र वैलक्षण्यमपि स्फुटमेव। तदर्थं समग्रोऽयं ग्रन्थो विलोकनीयो विज्ञैः। विशेषतस्तु स्त्रीप्रथमरजोऽद्भुतकायरिष्टाद्भुतस्वप्नाद्भुतादिप्रकरणानि द्रष्टव्यानि धीरैः। किमत्र विस्तरेण।

दैवज्ञशिरोमणि-महामहोपाध्यायमाधवस्य प्रकृतग्रन्थातिरिक्तग्रन्थविषये न किमपि प्रमाणमुपलभ्यते न वा कश्चिद्ग्रन्थ एव प्राप्यते इदानीम्।

अन्ते च करुणावरुणालयान् सुधीवरान् प्रकाशनाशेषदोषाणां क्षमां विनयावनतोऽभ्यर्थ्य विरम्यते विस्तरादिति शम्।

विनयावनतः

विद्यावारिधि प० श्रीरामचन्द्र झा
उपाचार्योऽध्यक्षश्च
स्नातकोत्तर-ज्यौतिष-विभागस्य
कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयस्य
दरभङ्गास्थस्य

श्रीहनुमज्जन्मोत्सवः
सौरदिनाङ्कः-७-७-१९०६
विक्रम संवत्-२०४१,
कार्त्तिककृष्णचतुर्दशीमंगल
अं० दि० २३-१०-१९८४ ई०

# अथ म० म० माधवीयदद्भुतदर्पणस्य

# विषयानुक्रमणिका

अन्तरिक्षाश्रये



भौमाश्रये

इति म० म० माधवीयाद्भुतदर्पणस्य

★ विषयानुक्रमणिका ★

श्रीगणेशाय नमः

महामहोपाध्याय-श्रीमाधवशर्मकृतः

# अद्भुतदर्पणः

"कन्यादातरि सम्प्रयोक्तरि तयोरन्योन्यवीक्षाविधौ
नम्रे देवपुरोधसा मुखविधौ देव्याः समुद्गीरिते ॥
अन्तस्कन्दलितस्पृहा समुदिता अभ्यर्णमित्याकुलम्
प्रेम्णा पल्लविताः पुनन्तु शिवयो ब्रीडावलीढादृशः ॥१॥
दैतेयेष्वसिवल्लभः स्मररिपोः शृङ्गारपुष्पस्रजा
भक्तानां सुरधेनवो दिविषदामुत्तंसरत्नत्विषः ॥
यज्ञप्राज्ञधियां फलप्रतिभुवोऽनङ्गस्य जीवातवो
विघ्नं घ्नन्त्वघमर्षणा ऋच इव स्वैयाः कटाक्षोर्मयः ॥२॥
सूनुना रघुनाथस्य बुधबालकुलोद्गतेः ।
श्रीकृष्णाराधनस्याग्र—मतिनाथानुजन्मना ॥ ॥
महामहोपदाद्यस्य गोविन्दस्याग्र - जन्मना ।
क्रियते माधवेनासौ सङ्क्षिप्याद्भुतदर्पणः ॥४॥
अप्रमाणस्य शङ्कापि नेह कार्या सुधीजनैः ।
यथा सागरमालोच्य इह ग्रन्थो विलिख्यते ॥५॥
दिव्यानां लिखनं पूर्वमिह सम्यग्वितन्यते ।
नाभसानां ततः पश्चाद्भौमानान्तु ततः परम् ॥६॥
किञ्चित्पौष्टिकमप्यत्र समासेनाभिधास्यते ।
शान्तिके ग्रहपूजादि पद्धतिः प्रथमङ्कृता ॥७॥
मयूरचित्रलिखितं नवग्रहसमाश्रितम् ।
किञ्चिदद्भुतमालिख्य सूर्यादिनान्ततः क्रमात् ॥८॥

अथाद्भुतनिरूपणम्

**वृद्धगर्गः**—'अभूतपूर्वं यत्पूर्वं जायते वा ततोऽन्यथा ।
तमद्भुतमिति प्रोक्तं नैमित्तं स्यान्निमित्तजम्" ॥

**बार्हस्पत्येऽपि** - अभूतपूर्वं यल्लोकस्य पूर्वं भवति पूर्वञ्च यदन्यथा भवति तदद्भुतमिति । तच्च द्विविधम् । नैमित्तिकमनैमित्तञ्च। केतूत्पातादिना निमित्तेन यदद्भुतन्तन्नैमित्तिकम् । तच्च शुभाशुभ सूचकम्। इतरदनैमित्तिकम् , तच्च द्विविधम् शुभसूचकमशुभसूचकञ्च। यदशुभसूचकं स उत्पात: । **यदुक्तं**

**बार्हस्पत्ये** - "प्राग्विनाशाय सम्प्रोक्ता येऽत्रोत्पाना इति स्मृता: ।
उद्वेगकारि मर्त्यानां यत्त्वप्रीतिविवर्द्धनम् ।।
अहितत्वादनिष्टत्वाच्छब्दा: पर्यायवाचका:" ।।

अतोऽन्यान्यशुभसूचकान्युत्पातेष्वन्तर्भवन्ति । अतएव "य: प्रकृति-विपर्यास: प्राय: सङ्क्षेपत: स उत्पात" इति वराहेण प्राय:शब्द: प्रयुक्त इति ।

**पराशर:** प्रकृतेर्भूतविकृतप्रादुर्भावांश्चोत्पातानाचक्षते। एषां द्यौरन्तरिक्षं भूरेताश्चाश्रय: पञ्चमहाभूतानि योनिरिति ।

**गर्ग:**—"प्रकृतेरन्यदुत्पात: संक्षेपस्तावदीदृश: ।
त्रिविध: स तु विज्ञेयो दिव्यनाभसभूमिज:" ।।

**वटकणिकायां वराह:**—

"य: प्रकृतिविपर्यास: प्राय: संक्षेपत: स उत्पात: ।
क्षितिगगनदिव्यजातो यथोत्तरं गुरुतरो भवति" ।।

आथर्वणाद्भुते—प्रकृतिविरुद्धमद्भुत प्राक्प्रबोधाय देवा: सृजन्ति, । उत्पातोत्पत्तिकारणमाह **गर्गसंहितायां बार्हस्पत्ये च**-

"अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्मत: ।
नरापचारान्नियतमुपसर्ग: प्रजायते ।।
जातोऽपचारान्नियतमपरज्यन्ति देवता: ।
ता: सृजन्त्यद्भुतान् भावान् दिव्यनाभसभमिजान् ।।

त एव त्रिविधा लोके उत्पाता देवनिर्मिताः ।
विचरन्ति विनाशाय रूपैः सम्बोधयन्ति च ॥
ये तेषु शान्तिं कुर्वन्ति न ते यान्ति पराभवम् ।
ये च न प्रतिकुर्वन्ति क्रियया श्रद्धयान्विताः ॥
नास्तिक्याद्वा विमोहाद्वा विनश्यन्त्येव तेऽचिरात्" ॥

## अथ त्रिविधाद्भुतविवेकः

वार्हस्पत्ये —"स्वर्भानुकेतु - नक्षत्र—ग्रहताराक्कचन्द्रजम् ।
दिवि चोत्पद्यते यस्मात्तद्दिव्यमिति भाषितम् ॥
वाय्वभ्रसन्ध्या—दिग्दाह - परिवेषादयस्तथा ।
यदन्तरिक्षजातन्तदान्तरीक्षं प्रचक्षते ॥
भूमावुत्पद्यते यत्तु स्थावरे जङ्गमेऽपि च ।
तदैकदेशिकं भौमं भूमिचालाम्बुविक्रिया" ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः—

"दिव्यान्तरिक्षभौमं तत्त्रिविधं परिकीर्त्तितम् ।
ग्रहर्क्षविकृतन्दिव्यमान्तरीक्षं निबोध मे ॥
उल्कापातो दिशान्दाहः परिवेषस्तथैव च ।
गन्धर्वनगरञ्चैव एवं वृष्टिकृता च या ॥
एवमादीनि लोकेस्मिन्नान्तरिक्षं विनिर्द्दिशेत् ।
चरस्थिरभवो भौमो भूकम्पश्चापि भूमिजः ॥
जलाशयानां वैकृत्यं भौमन्तदपि कीर्त्तितम् ॥"

मत्स्यपुराणविष्णुधर्मोत्तरयोः—

"भौमं चाल्पफलं ज्ञेयं चिरेण परिपच्यते ।
नाभसं मध्यफलदं मध्यकालफलप्रदम् ॥
दिव्यन्तीव्रफलं ज्ञेयं शीघ्रकारि तथैव च" ॥

वार्हस्पत्ये—"तत्र भौमान्यरिष्टानि व्यावर्तन्ते प्रजागुणैः ।
सप्तरात्रात्तराहाद्वा वर्जयत्यप्रवर्षणात् ॥

व्रतहोमोपवासैश्च दानैः स्वस्त्ययनैस्तथा ।
अन्तरिक्षाण्यरिष्टानि व्यावर्त्तन्ते कथञ्चन ॥
अव्यावर्त्तान्यरिष्टानि दिव्यान्याहुर्मनीषिणः ।
बह्वन्नदक्षिणादानैः महाहोमान् प्रयोजयेत् ॥
प्रशस्तान्यपि कुर्वीत देवब्राह्मणपूजनम् ।
हिरण्यानां विसर्गाश्च कर्त्तव्या ब्राह्मणेषु च" ॥
गोदोहात्प्रशमं याति दिव्योऽपीति मनीषिणः ॥

महाहोमाः--कोटिहोमादयः। गोदोहश्च शिवायतनभूमौ कर्त्तव्यः ।

मयूरचित्रे— 'दिव्यं चापि शमं याति पठेदेवं व्यवस्थितः ।
भूरिहोमान्नगोभूमिर्दद्यात्कोट्याश्च होमयेत् ॥"

भार्गवीये--"सावित्र्या लक्षहोमन्तु भौमे रिष्टे विशारदाः ।
कुर्युर्वा पञ्चदानानि विप्रेभ्यो यस्य यत्प्रियम् ॥
गोभूमिकाञ्चनादीनामश्वानां रत्नवाससाम् ।
रथानाम्वारणानाञ्च प्रदानं कामतः परम् ॥
तुष्येयुर्येन वा विप्रास्तत्कुर्याच्च प्रयत्नतः ।
तस्य सर्वमुपादेयमेष—दानविधिः स्मृतः ॥
दद्याच्च गुरवे ग्रामं धेनुं वासोयुगन्तथा ।
अलङ्कारैश्च सम्पूज्य प्रीणयेत्प्रीतिमानसः ॥
अनेन विधिना भौममद्भुतस्य प्रशान्तकः ।
एष एव विधिर्ज्ञेयः वियत्यप्यद्भुताश्रये ॥
विशेषे तत्र सावित्र्या दशलक्षन्तु होमयेत् ।
होमञ्च सुमनाः कुर्याद्दद्याच्च घृतकम्बलम् ॥
धेनूनां द्वादशन्देयं शतं निष्कसमायुतम् ।
गुरवे दीयमानन्तच्छमयेदम्वराद्भुतम् ॥
दिव्याद्भुतेषु कर्त्तव्यः क्वचिद्धोमः समाहितैः ।
गोसहस्रन्तु दातव्यं गुरवे दक्षिणाविधौ ॥

एष प्रोक्तो विधिः सम्यग्दिव्यारिष्टविपद्धरः।
सुभिक्षक्षेमसम्पत्त्या प्रजानां पुष्टिबर्द्धनम्"॥

कोटिहोमाशक्तौ तत्फलमुद्दिश्य दिव्योत्पाते चामृताख्या महाशान्तिः कर्त्तव्या। तदुक्तं **गार्गीये**—

प्रयतस्तेषु सर्वेषु दिव्येष्वद्भुतकेषु च।
महाशान्तिं नरः कुर्यादमृतामिवश्वभेषजाम्"॥

**अथर्वस्मृतौ**—"अद्भुतेषु च सर्वेषु त्रिविधेषु न संशयः।
दिव्यान्तरक्षिभौमेषु अमृता शंसिता बुधैः॥
सर्वाद्भुतप्रशमनी सर्वविघ्नविनाशिनीं।
शान्तिमेवामृताङ्कुर्यादायुरारोग्य—वर्द्धिनीम्॥
अमृतायाः प्रसादेन देवाश्चामर्त्यताङ्गताः।
तेनामृतां सदा कुर्याद्येनारोग्यमवाप्यते"॥

त्रिविधोत्पातेषु च चण्डीपाठादिस्वस्त्ययनङ्कर्त्तव्यम्। यदुक्तं **मार्कण्डेयपुराणे**—"तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम"। तत्र फलगुरुलाघवं बुद्ध्वा वहुकृत्व इति। सन्निहितपुष्यनक्षत्रप्राप्तौ पुष्याभिषेको वा कर्त्तव्यः। स्तदुक्तं—

**वराहसंहितायाम्**—"नास्तिलोके स उत्पातो यो ह्यनेन न शाम्यति।
मङ्गल्यञ्चापरं नास्ति यदस्मादतिरिच्यते"।

**पाकस्थानमाह**—"पुरे जनपदे कोषे वाहनेऽथ पुरोहिते।
पुत्रे स्वामिनि भृत्ये च पच्यते दैवमष्टधा"॥

**मात्स्ये**—"राज्ञः शरीरे लोके च पुरे दारपुरोहिते।
पाकमायाति पुत्रेषु तथा वै कोषवाहने॥"

देवस्याष्टत्वाद्दैवम्। नृपादिपदमपि स्वामिपरमेव। **वटकणिकायाम्**—
"दिव्या जगतो देवस्य नाभसाः पार्थिवस्य भूप्रभवाः।
अनुबध्नन्तो भयदास्त्र्यहाधिकश्चानिलश्चण्डः"॥

अनुक्तफलस्याद्भुतस्य कथं शुभाशुभत्वमवगन्तव्यम्, अवगते चानुष्ठानमिति पूर्वपक्षे वहुषु दृश्यलोकवाच्यात्तदभावे अनुभवाच्च फलं ज्ञेय-

मिति सागरः । तथात्र फलगौरवात्प्रथमन्दिव्याद्भुतोक्तेः प्राधान्यादादित्याद्भुतविचारस्तत्र च कञ्चित्प्रथमं मयूरोक्तमेव ततो वराहाद्युक्तमिति ।

सामान्यतो मयूरचित्रे—

''प्रासादतोरणाट्टाल - द्वारप्रासादवेश्मनाम् ।
निर्निमित्तन्तु पतनं दृढानां राजमृत्यवे ॥
रजसा वाथ धूमेन दिशो यत्र समाकुलाः ।
आदित्यचन्द्रताराश्च विवर्णा भयमृत्यवे ।।
राजानश्चैव दृश्यन्ते ब्राह्मणाश्च विधर्मिणः ।
ऋतवश्च विपर्यस्ता अपूज्यः पूज्यते जनैः ॥
नक्षत्राणि वियोगीनि तद्विद्याद्भयलक्षणम् ।
केतुदयोपरागौ च छिद्रता शशिसूर्ययोः ।।
ग्रहर्क्षविकृतिर्यत्र तत्रापि भयमादिशेत् ।
गृध्रश्येनकचिल्लाश्च कपोतोलूकचातकाः ॥
बर्द्धनीवककङ्काश्च पतन्ते यस्य वेश्मनि ।
गृहे रथे महोत्पातं वल्मीके जायते मधु ॥
शुनां प्ररोहणञ्चैव द्वारङ्कूट-- कटायते ।
हसनञ्जातमात्रस्य तत्क्षणाद्दन्तदर्शनम् ॥
जननञ्जातदन्तस्य सुतोत्पत्तिः शिरो विना ।
अवत्सानाङ्गवादीनां क्षीरप्रस्रवणन्तथा ॥
आत्मनस्तनपानञ्च पशूनां हसनन्तथा ।
महिषी गर्भिणी वत्स प्रसूते चन्द्रमस्तकम् ॥
अन्यदेतादृशं सर्वमादित्याद्भुतदर्शनम् ।
निमित्तान्येवमादीनि दृश्यन्ते यस्य वेश्मनि ॥
गृहिणी म्रियते तस्य षड्भिर्मासैर्न संशयः ।
दधिमधुघृताक्तञ्च जुहुयादर्कवासरे ॥
आकृष्णेनेति मन्त्रेण सौर्यञ्च कारयेच्चरुम् ।
जुहुयादविचारेण दद्याद्धेनुञ्च दक्षिणाम् ॥
श्रद्धयादित्यमुद्दिश्य ततः सम्पद्यते शुभम ।

उपविष्टे भवेद्यस्मिन् तस्योत्पातो भवेदसौ ।।
सिंहासनस्य चलनन्तथा कटकटायनम् ।
पिकस्याकालरुदितं भूमौ च पतनन्तथा" ।।

मयूर उवाच—' 'अकस्माच्चलते लिङ्गं प्रतिमा श्वेदस्यन्दिनी ।
सिंहासनध्वजच्छत्र रथचामर-- भेदनम् ।।
अकस्माद्दृश्यते यस्य राज्ञो वाऽन्यस्य कस्यचित् ।
मदयन्ती हास्तिनी चैव स्त्रीपुंसोर्ज्वलनन्तथा ।।
भङ्गो दृढासनस्यैवं तथा कटकटायनम् ।
एवञ्जानीहि सर्वाणि चन्द्राददद्भुतदर्शनम् ।।
भवति प्रभुनाशाय सर्वमेतन्न संशयः ।
दधिमधुघृताक्तञ्च जुहुयादयुतं बुधः ।।
पालाशं सोममुद्दिश्य सोमवारेण श्रद्धया ।
ओषधय इति मन्त्रेण चरुं सौम्यञ्च कारयेत् ।।
शङ्खञ्च दक्षिणान्दद्यात्ततः सम्पद्यते शुभम् ।
उत्पद्यन्ते गृहे यस्य यवमाषाश्च तण्डुलाः ।।
अग्निपक्वाः स्थाल्याञ्च तथा घुटघुटायते ।
दधिक्षीराज्यपाके च रुधिरं दृश्यते यदि ।।
सिद्धान्ने व्यञ्जने वाऽपि रुधिरं दृश्यते यदि ।
राजामात्यविनाशः स्यान्मासमात्रान्न संशयः ।।
ऐन्द्री तत्र प्रकर्त्तव्या दशमी दिव्यचोदिताः ।
दधिसञ्जायते रक्तं राज्ञो मरणकारणम् ।।
आज्यं तैलं जलं वाऽपि वृष्टिरत्यन्तमापयेत् ।
अकस्माद्गृहदाहश्च विनाग्निज्वलनन्तथा ।।
ज्योतिश्च विस्फुलिङ्गञ्च सभाण्डशिवयकम्पनम् ।
योषितां प्रसवो यत्र मासाष्टेषु च दृश्यते ।।
पितृमातृविनाशाय दन्तस्योद्भवमादितः ।
एवमादीनि सर्वाणि भवन्त्यङ्गारके क्रुधि ।।
तथाङ्गारकमुद्दिश्य जुहुयादयुतं पुमान् ।।

दधिमधुघृताक्तञ्च खादिरं कुजवासरे ।
अग्निमूर्द्धेति मन्त्रेण कारयेल्लोहितं चरुम् ॥
शुभार्थी दक्षिणान्दद्याल्लोहितं वृषमुत्तमम् ।
स्त्रियो गावो महिष्यो वा प्रसूयन्ते द्वयं द्वयम् ॥
अन्यानि विकृतरूपाणि सूयन्ते च कदाचन ।
स्त्रियो गर्भविरोधिण्यो भाद्रे गौर्वा प्रसूयते ॥
दन्ताश्चोपरि जायन्ते विकृताः प्रभवन्ति च ।
गर्भपातो यदा स्त्रीणां गवादीनान्तथा पुनः ॥
गच्छन्ति उद्र्ध्वपुच्छास्ता गृहं गावः स्वयं यदि ।
आरोहन्ति गृहं वत्साः सारमेयाश्च शूकराः ॥
गृहे यस्य भवन्त्येते भार्या तस्य विनश्यति ।
उत्क्षिपन्ति यदा गावो नदन्ति च पुनः पुनः ॥
धरणीहननन्तासां प्रभुनाशस्य कारणम् ।
पतन्ति नेजिका वृक्षा दिवा रात्रौ च वेश्मनि ॥
रात्रावाहननं कुर्यात् शृणोति यः स्वयं शिखी ।
मण्डूकसर्पभल्लूक्यः प्रसूयन्ते यदि स्त्रियः ॥
बुधोत्पाता भवन्त्येते शृणु शान्ति शुभावहाम् ।
दधिमधुघृताभ्यक्ताश्चापामार्गस्य काष्ठकाः ॥
अयुतं बुधवारेण जुहुयाच्छ्रद्धयान्वितः ।
उद्बुध्यस्वेति मन्त्रेण बौधञ्च कारयेच्चरुम् ॥
सौवर्णीं बुधमुद्दिश्य मूर्त्तिन्दद्याच्च दक्षिणाम् ।
रक्तस्रावो भवेद्यत्र वृथा प्रस्रवनन्तथा ॥
सिंहे चैव गवादीनां धनक्षयविपत्तिदम् ।
एको वृषस्त्रयो गावः सप्ताश्वा नवदन्तिनः ॥
नृपतेश्चासनं हन्ति गावः सिंहप्रसूतिकाः ।
सद्यस्तु तद्धनन्देयं विद्वद्भिश्च सदक्षिणम् ॥
अथैतस्य भवेदिच्छा मूल्येन गृह्यते द्विजान् ।
कन्यायाः स्फुरितञ्चापि अरिष्टं नेत्रगोत्रे ॥
मूर्च्छा च हृदयाद्यस्य दुःस्वप्नञ्च विचिन्तितम् ।

एवमादिसमुद्दिष्टं जीवस्याद्भुतदर्शनम् ॥
कार्यासिद्धिकरं पुंसां रोगः स्याद्दारुणः पुनः ।
विधियन्त्रं प्रवक्ष्यामि येन सम्पद्यते शुभम् ॥
समिधोऽश्वत्थकाष्ठस्य जुहुयादयुतं द्विजः ।
दधिमधुघृताक्ताश्च मन्त्रेण च बृहस्पतेः ॥
वृहस्पतिदिने सम्यक् स्नात्वोपोष्य यथाविधिः ।
वार्हस्पत्यञ्चरुङ् कुर्यात्पीतवस्त्रञ्च दक्षिणाम् ॥
वृहस्पतिं समुद्दिश्य दद्याद्विप्राय शक्तितः ।
कुर्याच्छान्त्युदकं स्नानं शुभशंसी विचक्षणः ॥
सर्वारिष्टान् समुत्तीर्य प्राप्नोति च समं सुखम् ।
क्षीरलवणकूपानां प्लवनं शोषणन्तथा ॥
अज्वलनेन धूमस्य घटे गर्जनदर्शनम् ।
वापीकूपतडागानां शुक्रस्याद्भुतदर्शनम् ॥
चौरव्याघ्रभयन्तस्य दुर्भिक्षं राष्ट्रविप्लवः ।
अनावृष्टिस्तथा वक्ति शान्तिन्तत्र प्रवक्ष्यते ॥
औदुम्वर्यायुतं काष्ठं जुहुयाच्छुक्रवासरे ।
अन्नात्परीतिमन्त्रेण भार्गवस्य दिने तथा ॥
दद्याद्भार्गवमुद्दिश्य हयं विप्राय भूपतिः ।
एवं कृते भवेच्छान्तिरेवं प्राह भृगोः सुतः ॥
शान्त्युदककृतस्नानस्ततः सम्पद्यते शुभम् ।
मृगगोधा गृहे यस्य फेरुवानरदंष्ट्रिणः ॥
गजगवयचिल्हाश्च शालिकोलूकटिट्टिभाः ।
अन्ये जलचरा ये च ये चान्ये स्थलचारिणः ॥
गोधानकुलसर्पाश्च सर्पन्ति निलय पुनः ।
द्वारञ्चौरसमङ्कृत्वा प्रविशन्ति प्रयान्ति च ॥
ध्रुवमेव भवेत्तस्य गृहिणः प्राणसंशयः ।
हसनं देवतानाञ्च देवस्थाने च गर्जितम् ॥
अकस्माद्देवतापातो देवतानाञ्च कम्पनम् ।
गृहे तु घण्टिकाशब्दो देवस्योपरि जायते ॥

श्रवते प्रतिमा यत्र पुरे राज्ञः कथञ्चन ॥
जायये नगरोत्सादः सौरेरद्भुतदर्शनम् ।
विधिमन्त्रं प्रवक्ष्यामि येन सम्पद्यते शुभम् ॥
जुहुयादयुतं शय्यायुक्तं मध्वादिभिस्तथा ।
शन्नो देवीति मन्त्रेण शनैश्चरदिने बुधः ॥
चरुन्तत्र प्रकुर्वीत यथाशास्त्रविधानतः ।
नीलां गां दक्षिणान्दद्यात् समुद्दिश्य शनैश्चरम् ॥
स्नातः शान्त्युदकेनैव सर्वदा स्वस्तिकर्मणा ।
आचार्यः शुचिभावेन शुभाशंसी विचक्षणः ॥
गृहे यस्याशनेः पातो विद्युत्पातो भवेद्यदि ।
कर्दमाङ्गाररक्तानां वृष्टिः स्याद्यत्र वाससी ॥
मत्स्यकच्छपपातश्च निशीथे चापदर्शनम ।
नगतोरणवृक्षाणां पातः स्यात्पुष्करस्य च ॥
अकस्मात्तूर्णशब्दः स्याद्धनहानिकरं हि तत् ।
दिवा शिवा पुरे रौति पुरोत्सादस्य कारणम् ॥
शवस्यानीयमानस्य प्रमादात्पतनम्भवेत् ।
अपि तस्य तथोत्थानं धूमकेतोश्च दर्शनम् ॥
दिवोल्कादर्शनञ्चापि तारायाश्च ततः पुनः ।
पारक्यङ्कथयन्त्याशु पुरोत्सादकरं त्रयम् ॥
अकाले पुष्पितञ्चापि वृक्षाणां फलदर्शनम् ।
नदीवृद्धिरकाले च कन्दस्य फलदर्शनम् ॥
स्फुरत्यहेतुकं धान्यमकस्मात्पुष्पितं गवाम् ।
निर्घातो भूमिकम्पश्च राहोरद्भुतदर्शनम् ॥
शान्तिन्तत्र प्रवक्ष्यामि शुभमापद्यते यतः ।
दधिमधुघृताक्ताया दूर्वाया अयुतं बुधः ॥
कयान इति मन्त्रेण जुहुयाद्रविवासरे ।
श्रद्धया राहुमुद्दिश्य कारयेद्राहवं चरुम् ॥
खड्गञ्च दक्षिणान्दद्यादात्मनोत्पातशान्तये ।

होमान्ते भोजयेद्विप्रान् मुच्यते ग्रहसंशयात् ॥
भोजनोत्तरकाले च दद्यात्तत्र च दक्षिणाम् ।
प्रणिपत्य तथा विप्रान् विसृजेच्च विधानतः ॥
शाखाभङ्गो भवेद्यत्र वृक्षाद्वा रुधिरं स्रवेत् ।
दृश्यन्ते चाम्रपत्रेन्यऽवस्तूनि रुधिरच्छटाः ॥
काञ्जिकोद्रायते यत्र गृहे छत्री च जायते ।
यदाकस्माद्भवेद्भङ्गः काञ्जिकापूर्णकुम्भयोः ॥
रौति द्वारस्थितः फेरुः केतोरद्भुतदर्शनम् ।
अन्यान्यप्येवमादीनि यत्नेन च मनीषिभिः ॥
सम्वत्सरेण दम्पत्योर्मरणं स्यादवश्यकम् ।
येन चैतत्प्रशाम्यन्ति उत्पाताश्चैवमादयः ॥
विधिन्तत्र प्रवक्ष्यामि नराणां हितहेतवे ।
कुशस्यादित्यवारेण जुहुयादयुतं पुनः ॥
दधिमधुघृतैर्युक्तं कैतवं कारयेच्चरुम् ।
केतुं कृण्वन्निति मन्त्रेण दद्याच्छागञ्च दक्षिणाम् ॥
शक्ते चोत्थाप्यमाने तु यष्टिभङ्गो भवेद्यदि ।
स विज्ञेयो महोत्पातो यष्टेश्च पतनन्तथा ॥
नृपतिर्म्रियते तत्र नगरोत्साद एव च ।
दुर्भिक्षशस्त्रसम्पातौ मरका च भवन्ति च ॥
शान्तिन्तत्र प्रवक्ष्यामि येन सम्पद्यते शुभम् ।
रथं सप्ताश्वयुक्तन्तु हेमच्छत्रविभूषितम् ॥
विप्राय मण्डलन्दद्याज्जुहुयादयुतं शुचिः ।
अक्षुणस्य च वृक्षस्य दृष्टङ्कुर्याद्विचक्षणः ॥
कारयेदैन्द्रमन्त्रेण चरुञ्चैवेन्द्रदैवतम् ।
भोजयित्वा द्विजं पश्चात् स्वीकुर्यान्मण्डलं नृपः ॥
पुंसां मृत्युं प्रवक्ष्यामि यस्य नास्ति प्रतिक्रिया ।
देवमुद्दिश्यमाने च होमेन च तथा पुनः ॥
दक्षिणान्दिशि छायायामात्मनो यः प्रपश्यति ।
छायाद्वयञ्चैव भूमौ स्वञ्च तत्र शिरोद्वयम् ॥

आत्मच्छायां शिरोहीनां सूर्यचन्द्रमसौ द्वयम् ।
उभयोश्चैव छिद्रं च प्रपश्यन्त्युदयास्तयोः ॥
गच्छत्यसौ त्वराङ्कृत्वा गङ्गां नरकतारिणीम् ।
मृत्युस्तस्य महादेव सप्तरात्रेण कस्यचित् ॥
पञ्चाहे कस्यचिज्ज्ञेया कस्यचित्पक्षगोचरः ।
चिन्त्यमेतत्सदा विज्ञैः स्वतोर्थे कालकाङ्क्षिभिः ॥

## इति मयूरचित्रकं समाप्तम् ।

## अथ सूर्याद्भुतम्

**पराशरः**—रविर्महामण्डलकुक्षिमान् घृतमण्डनिभः क्षेमारोग्यकरः विपुलः सुवर्णरजतपद्मप्रभो विमलो विशेषेण शुभकर इति । रविस्वामिकानामेवंविधः शुभकरः । विपरीतस्तु विपरीतकरः । रविस्वामिकानाह—

**यवनेश्वरः**—"नृपाटवीशैलसुवर्णताम्रसिंहासनव्याडविषौणिकानाम् ।
हिंसोग्रवाग्द्रव्यवदुष्णरूक्षद्रव्याकराणां प्रभुरुच्यतेऽर्कः" ॥

**कश्यपः**—"प्रागर्द्धं नर्मदायाश्च शोणां शवरमागधान् ।
यमुनादक्षिणं कूलं कौशाम्बीञ्च कलिङ्गकान् ॥

**गर्गः**—"स्निग्धरश्मिर्विशालश्च प्रकृतिस्थश्च यो ग्रहः ।
ग्रहयुद्धजितो धूमनिर्घातोल्काभिराहतः ॥
न यदा स्वोच्चराशिस्थो मित्रर्क्षे स्वगृहेऽपि वा ।
स्थितः शुभग्रहैर्दृष्टः संपुष्णाति परिग्रहम् ॥
स्वकृतो हन्ति नित्यञ्च निजनाशङ्करोति च ।
नृपाणां भयदोऽपि स्यादवृष्टिभयकारकः" ॥

**वराहः**—"उदयसमये यः स्निग्धांशुर्महान् प्रकृतिस्थितः ।
यदि न वलहतो निर्घातोल्का - रजोग्रहमर्दनैः ॥
स्वभवनगतः स्वोच्चप्राप्तः शुभग्रहवीक्षितः ।
स भवति शुभस्तेषां येषां प्रभुः परिकीर्त्तितः" ॥

अतिविहितविपरीतलक्षणक्षयमुपगच्छति तत्परिग्रहः ।
डमरभयगदातुरा जना नरपतयोऽपि भवन्ति दुःखिताः ।।

प्रकृत्यादिविवेकस्तु गणितेन बोद्धव्यः ।

## अथ वर्णफलम्

**वराहः**---"ग्रीष्मे रक्तो भयकृद्वर्षास्वसितः करोत्यनावृष्टिम् ।
हेमन्ते पीतोऽर्कः करोति न चिरेण रोगभयम् ।।
**तथा**— हितकृद्विप्रादीनां स्निग्धसितरक्तपीतकृष्णोऽर्कः ।
रूक्षः क्षुद्भयकारी विकारमन्यगतो यदि वा" ।।

**वृद्धगर्गः**--"उदये नीलवर्णोऽर्कः मृत्युरोगकरो भवेत् ।
दुर्भिक्षं कृष्णकपिलः कृष्णादीनाञ्च वर्द्धनः ।।

कृष्णादीनाम् —चौरादीनाम् । तथा च -

वैदूर्यवर्णः सलिलं रक्तशस्त्रमुदीरयेत् ।
परुषः कोपयेद्दस्यून् घर्षणञ्चारुणप्रभः ।।
ताम्रः शस्त्रभयङ्कुर्यादग्निवर्णोऽग्निजम्भयम् ।
स्मृतो धूमावृतो रूक्षो विरश्मिर्वृष्टिहा रविः" ।।

उदय इति सर्वत्र सम्बध्यते । उदय एव गर्गेणापि वर्णस्याग्निभयकरत्वप्रतिपादनात् । **तथाच तद्वाक्यम्**—

"उदयेऽग्निशिखाप्रख्यः कुर्यादग्निभयं रविः ।
दृष्ट्वा तं रुधिरप्रख्यं सङ्ग्राममभिनिर्द्दिशेत्" ।।

**गर्ग**—"मयूरचन्द्रिकाभो वा यदा भवति भास्करः ।
पूर्णे तु द्वादशे वर्षे तदा वर्षति वासवः ।।

**वराहः**--"ऊर्ध्वकरो दिनकृत्ताम्रः सेनापतिं विनाशयति ।
पीतो नरेन्द्रपुत्रं श्वेतस्तु पुरोहितं हन्ति ।।
चित्रोऽथ वापि धूम्रो रविरश्मिर्व्याकुलाङ्करोत्युर्वीम् ।
तस्करशस्त्रनिपातैर्यदि न सलिलमाशु पातयति ।।

शशरुधिरनिभे भानौ नभस्थलस्थे भवति सङ्ग्रामः।
शशिसदृशे नृपतिवध क्षिप्रञ्चान्यो नृपो भवति" ॥

नभस्थलस्थ इति मध्याह्नपरम्। तदन्यत्र न भवति नियमात्।

**मयूरचित्रे**—"आदर्श इव दृष्टश्च राज्ञो देशस्य चान्तकृत्।
तत्रैव-आदर्श इव सूर्ये च जनदेशभयम्भवेत्" ॥

**वराहः**—"दिवि भाति यदा तुहिनांशुयुगं द्विजवृद्धिरतीव तदाशु शुभा।
तदनन्तरवर्णरणोऽर्क्कयुगे जगतः प्रलयस्त्रिचतुष्प्रभृति ॥

**वृद्धगर्गः**—"दृष्ट्वा त्रिचतुरः सूर्यानुदितान्सर्वतो दिशम्।
शस्त्रेण निधनन्तत्र तद्युगान्तस्य लक्षणम्" ॥

**वराहः**—"कृष्णारेखा सवितरि यदि हन्ति नृपं सचिवम्॥"

**मयूरचित्रे**—"शङ्खगोक्षीरवर्णे च सूर्ये युद्धं सुदुष्करम्।
कृष्णारेखा रवेर्मध्ये भयाय मरणाय च" ॥

"कृष्णरेखोरविर्देशविभ्रमराजमृत्युसूचक" इति **वृद्धगर्गवचनम्**।

**मयूरचित्रे**—"युवराजबधश्छिद्रे रवौ माण्डलिकस्य च।
दृष्ट्वा तु भास्करे छिद्रं भूपालस्य बधम्वदेत्॥
परचक्रागमञ्चैव यथा गर्गेण भाषितम्" ॥

रविविम्वस्थबुधाच्छादनकृतच्छिद्रस्य प्राथमिकफलम्. भार्गवाच्छादितस्य द्वितीयफलम्, एतच्च यदि नृपतिनक्षत्रे भवति तदा नृपतिबधः। "छिद्रो यस्यर्क्षेऽर्क्कस्तन्नक्षत्रे नृपो नश्येत्" इति वटकणिकासम्वादात्। एवञ्च बुधशुक्राच्छादनं विना रविच्छिद्रे परचक्रागम इति व्यवस्था।

अत्र विशेषमाह—

**गार्ग्यः**—"आदित्ये पाण्डुरश्छिद्रं सन्ध्यायां यदि दृश्यते।
सराष्ट्रः सपुरो राजा क्षिप्रमेव विनश्यति" ॥

**वराहः**—"भानोरुदयेऽपि दिवाऽस्तमये गन्धर्वपुरप्रतिमाध्वजिनी।

विम्बन्निरुणद्धि तदा नृपते: प्राप्तं सनरं सभयं प्रवदेत्" ॥

**भार्गवीये**--"आदित्यस्य रथः श्वेतः सन्ध्यायान्तु यदा भवेत्।
प्रत्यासन्नं भयं विद्यात्तस्मिन्नुत्पातदर्शने" ॥

अत्रानुक्तविशेषशान्तिषु सूर्योत्पातेषु फलगुरुलाघवमवगत्य सूर्यपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका शान्तिः कर्त्तव्या। आदित्योत्पाते तु विशेषेणादित्यः पूजनीयः। **अथर्वणाद्भुते**--

"सूर्यस्योदयकाले तु विकृतिर्यत्र दृश्यते।
मण्डले तत्समीपे वा रश्मीनां वा विपर्ययः ॥
विकारस्तु यदा तेषां सूर्यः पूज्योऽत्र देवताः ॥

इति विहितविशेषशान्तयः सूर्योत्पाताः।

**मयूरचित्रे**--"शशशोणितवर्णेऽर्क्के युद्धं रुधिरकर्दमम्।

**गर्गः**— 'शशशोणितवर्णाभो यदा भवति भास्करः।
तदा भवन्ति सङ्ग्रामा घोरा रुधिरकर्दमाः ॥

मध्याह्ने शशशोणितवर्णे सूर्ये घोरा वहवः सङ्ग्रामाः। अन्यदा त्वेक एवेति वचनद्वयस्य सामञ्जस्यम्।

**वृद्धगर्गः**--"कांस्यपात्रीनिभः सूर्यः शशाङ्क इव लक्ष्यते।
विरश्मिर्नभसो मध्ये महद्भयकरः स्मृतः ॥

अतएव वराहेण शशरुधिरनिभे भानौ इत्यादि लिखितम्।

**मयूरचित्रे**—"कवन्धसदृशे सूर्ये शस्त्रपातभयानि च ।
सेनापतेर्वधश्चैव भयन्तद्देशभूपतेः ॥
विपरीताश्च धर्मिष्ठा जायन्ते निर्धनाः प्रजाः"।

**शान्तिमाह**--"गो ब्राह्मणहितङ्कुर्यात्पुण्यं भूतिसुखावहम्।
त्रिरात्रोपोषितो भूत्वा हविष्याशी पुरोहितः ॥

अपामार्गेण जुहुयात्समिधोष्टोत्तरं शतम् ।
अच्छिन्नदर्विकां कृत्वा ब्राह्मणान् भोजयेदपि ।।
पायसं कृसरञ्चैव यथाकामसमन्वितम् ।
सुवर्णं रजतं कांस्यं दद्याद्भूरि च दक्षिणाम् ।।

शङ्खभेरीवर्णादिषु शान्तिमाह मयूरचित्रे—

"रवेः सम्पूजनङ्कृत्वा जुहुयात्समिधां ततः
अर्क्कस्याथ घृताक्तानामाकृष्णेनेति मन्त्रतः ।।
द्वादशैव सहस्राणि त्वष्टाभिरधिकानि च ।
पायसं मधुसंयुक्तं दध्यौदनगुडोदने ।।
द्वादशाष्टौ द्विजान् षड्वा भोजयेद्दक्षिणान्तथा ।
सुवर्णं रजतं ताम्रं धान्यं वस्त्रं गोस्तिलान्" ।।

द्विजभोजनङ्कर्माङ्गन्तत्र द्वादशादिसङ्ख्या शक्त्यपेक्षया, दक्षिणा तु होमान्त एव, अपेक्षितविधेरिति सागरः ।

मयूरचित्रे – "दृश्यते भास्करस्यार्द्धं गृहीतमिव चापरम् ।
कम्पते यदि वाप्येषस्तदा विद्याज्जनक्षयम् ।।
उदयाऽस्तमये भानोश्चक्रवद् भ्रमणे सति ।
परचक्रागमो व्याधिर्देशस्य च परिक्षयः ।।
व्योममध्यगतं पश्येद्यदि सूर्यद्वयन्ततः ।
चौरव्याघ्रभयावृष्टिदुर्भिक्षं राष्ट्रविप्लवः ।।
दधिमधुघृताक्तानां जुहुयादयुतं शुचिः ।
उपोष्यार्क्कस्य समिधां धेनुं दद्याद् द्विजातये ।।

इति सप्तमीशान्तिः ।

नारदः "आकाशस्थो यदा भानुरुदितो न प्रकाशते ।
व्याघ्रचौरभयं चापि दुर्भिक्षं राष्ट्रविप्लवः ।।

एतच्च मध्याह्न एव, न प्रकाशते - तथाविधप्रकाशवान्न भवति ।

"इमा रुद्रायेति मन्त्रैः जुहुयात्सर्पिषा हुतिम् ।
आहुती द्वे सहस्रे तु होमश्च कथितो भवेत् ।।

वृषभं दक्षिणां दद्यात् ततस्सम्पद्यते शुभम्" ॥

इति विशेषशान्तय आदित्योत्पाताः । अत्रानुक्तफलपाकसमयानां सूर्याद्भुतानां पक्षेण फलपाको बोद्धव्यः । तथाच गार्गीये - पक्षाद्विपाकः सूर्यस्येति ।

## इति सूर्याद्भुतम् ।

अथ सङ्क्रान्त्यद्भुतमाह—अयनविषुवविष्णुपदीषडशीतयः संक्रान्तयः । मकरसङ्क्रान्तितः सङ्क्रान्तिनामानि:-

घोराध्वाङ्क्षीमहोदर्यो सङ्क्रान्ती रविवारतः ।
मन्दा मन्दाकिनी चैव मिश्रिता राक्षसी क्रमात् ॥
भौमार्क्कशनिवारेण यदा सङ्क्रमते रविः ।
तं मासं विप्लुतं विद्यान्नृपाग्निभयतस्करैः ॥
सुभिक्षं क्षेममारोग्यं वारेण बुधसोमयोः ।
शस्यस्य जायते बृद्धिर्गुरुणा भार्गवेण च ॥
मन्दा मन्दाकिनी ध्वाङ्क्षी घोरा चैव महोदरी ।
राक्षसी मिश्रिता चैव सङ्क्रान्तिः सप्तधा नृप ॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रे ध्वाङ्क्षी विजानीयादुग्रे घोरा प्रकीर्त्तिता ॥
चरैर्महोदरी ज्ञेया क्रूरऋक्षैस्तु राक्षसी ।
मिश्रिता चेह विज्ञेया मिश्रितर्क्षे तु संक्रमे ॥"

स्थिराणि ध्रुवाणि रोहिणी उत्तराणि च त्रीणि, मृदूनि चित्रानुराधा-रेवतीमृगशीर्षाणि, क्षिप्रा लघवः हस्ताश्विनीपुष्याभिजितः, उग्राः पूर्वात्रियम् भरणी मघा च, चराः श्रवणाधनिष्ठास्वातीपुनर्वसुशतभिषाः, क्रूरास्तीक्ष्णास्तेश्च मूलाऽऽश्लेषाज्येष्ठार्द्राः, मिश्रितर्क्षं कृत्तिका विशाखा च ।

"त्रिचतुष्पञ्च-सप्ताष्टनव - द्वादश एव च ।
क्रमेण घटिका ह्येताः तत्पुण्यं पारमार्थिकम् ॥

क्रमेणेति मन्दादि सप्तसङ्क्रान्तिषु यथा सङ्ख्यं त्रिचतुरादिनाड्यः सूक्ष्मसङ्क्रान्तिकालीनवसोर्द्धाराजन्यपुण्यहेतव इत्यर्थः । वसोर्द्धारा च देवीपुराणेषु व्यक्ता ।

देवीपुराणे---"ध्वाङ्क्षी वैश्यषु विज्ञेया घोरा शूद्रे सुखप्रदा ।
महोदरी च चौराणां शौण्डिकानाञ्जयावहा ॥
चाण्डालपुल्कशानान्तु ये चान्ये क्रूरकर्मिणः ।
सर्वेषाङ्कारुषानाञ्च मिश्रिता भूतिवर्द्धिनी ॥
नृपाः पीड्यन्ति पूर्वाह्णे मध्याह्ने च द्विजोत्तमाः ।
अपराह्णे तथा वैश्याः शूद्राश्चास्तमये रवौ ॥
पिशाचाश्च प्रदोषे तु अर्द्धरात्रे तु राक्षसाः ।
अर्द्धरात्रे व्यतीते तु पीड्यन्ते नटनर्त्तकाः ॥
उषः काले तु सम्प्राप्ते हस्तिगोस्वामिनो जनाः ।
हन्ति प्रव्रजितान् सर्वान् सन्ध्याकाले न संशयः ॥
दानाध्ययनजप्यादि विशिष्टं वह्निहोमतः ।
वसोर्द्धारासु लभ्येत अन्यथा न कथञ्चन" ॥

तुलादिषट्कसङ्क्रान्तयः प्रायेणैकस्यामेव तिथौ सम्भवति तत्र यदि कदाचिद्व्यभिचारस्तदा अनिष्टम्भवति ।

यदाह-"यान्तिथिं समनुप्राप्य तुलाङ्गच्छति भास्करः ।
तयैव सर्वसङ्क्रान्तिर्यावन्मेषं स गच्छति ॥
यदा वक्रातिचाराभ्यां क्वचित्क्रामति भास्करः ।
क्षत्रियाणामसृग्धारा तदा पिबति मेदिनी ॥
यादृशेन शशाङ्केन ग्रहः सञ्चरते नृणाम् ।
तादृशं फलमाप्नोति शुभं वा यदि वाऽशुभम्" ॥

ग्रहः—सूर्यः । तेनानुकूलचन्द्रे शुभफलमशुभचन्द्रे अशुभञ्च रविसङ्क्रान्त्यादौ बोद्धव्यम् । चन्द्रस्य च ग्रहोपरागकेतवभिधूमितग्रहयुद्धपराजयशनैश्चरादिभेदनविषमशृङ्गत्वरक्तत्वादिकदोषास्तु सर्वदा सामान्या एव, जन्मराश्यवधिकाष्टमस्थानस्थितत्वादिदोषा वैशेषिका अवगन्तव्याः । एतद्विपरीतस्तु चन्द्रः शुभो बोद्धव्य इति । अत्र च सर्वत्र चन्द्रपूजापूर्विका कनकादिदानरूपा सामान्यशान्तिरवगन्तव्येति ।

अथ पुण्यकालादिकमाह

**जावालः**—"सङ्क्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः।
चन्द्रसूर्योपरागे च यावद्दर्शनगोचरः ॥"

षोडशकलाः—षोडशनाड़िकाः। उभयतः-संक्रमणपूर्वापरकालयोः।

**देवीपुराणे**—"अतीतानागता भोगा नाड्यः पञ्चदशस्मृताः।
सान्निध्यन्तु भवेत्तत्र ग्रहाणां सङ्क्रमे रवेः ॥
व्यवहारो भवेल्लोके चन्द्रसूर्योपलक्षितः।
काले विकलते सर्वं ब्रह्माद्यं सचराचरम् ॥
पापपुण्यविभागेन कामं देवी प्रयच्छति।
एकधाऽपि कृतङ्कर्म कोटिकोटिगुणं भवेत् ॥
धर्माद्विवर्द्धते ह्यायू राज्यपुत्रसुखानि च।
अधर्माद्व्याधिशोकादि विषुवायनसन्निधौ ॥
विषुवेषु च यज्जप्तं दत्तं भवति चाक्षयम्।
एवं विष्णुपदे चैव षडशीतिमुखे तथा ॥"

भोगो-भोग्यः। तेनातीतानागतरूपा रविभोग्याः पञ्चदशनाडयः पुण्याः सर्वत्र भवन्तीति कथितम्। एवञ्चैतद्वाक्यैकवाक्यतया उभयत एव पञ्चदश नाडीणां पुण्यत्वमिति बोद्धव्यम्।

**शातातपः**—"अर्वाक् षोडश नाड्यस्तु नाड्यः पश्चात्तु षोडश।
कालः पुण्योऽर्कसङ्क्रान्तेर्विद्वद्भिः परिकीर्त्तितः ॥"

अनेनोभयत एव षोडशनाडीणां पुण्यत्वमभिहितम्।

**देवीपुराणे**—"अयनेषु विकल्पोऽयं तन्मे निगदितः शृणु।
यावद्विंशकला भुक्तास्तत्पुण्यं चोत्तरायणे।
निरंशे भास्करे दृष्टे दिनान्ते दक्षिणायने ॥"

दिनान्त इति दिनं त्रिंशन्नाड्यश्च तदन्ते तत्पर्यन्त इत्यर्थः। अनेन विंश-

तिदण्डपुण्यत्वमुक्तमुत्तरायणे । दक्षिणायने तु त्रिंशद्दण्डपुण्यत्वमुक्तम्। उत्तरायणे सङ्क्रान्तिपूर्वमिति शेषः।

**तदुक्तम्**--"षडशीतिमुखेऽतीते वृत्ते च विषुवद्वये।
भविष्यत्ययने पुण्यमतीते चोत्तरायणे ॥"

एवञ्चोभयवेलापुण्यत्वबोधकानि शातातपादिवचनानि द्वात्रिंशद्दण्ड-बोधकानि दिवातनविष्णुपदीमात्रविषयाणि। तदितरसङ्क्रान्तिषु विशिष्यैव कालोपदेशात् रात्रिसङ्क्रान्तावनाकाङ्क्षितत्वाच्च। तदेवं दिवातन-द्वादशसङ्क्रान्तिषु व्यवस्था सिद्धा। तत्रापि षडशीति विषुवयोः सङ्क्रान्त्यनन्तरं षोडशदण्डानां पुण्यत्वम्। उत्तरायने सङ्क्रान्त्यनन्तरं विंशतिदण्डानां पुण्यत्वम्, दक्षिणायने सङ्क्रान्तिपूर्वं त्रिंशद्दण्डानां पुण्यत्वम्, विष्णुपदीषूभयतः षोडशदण्डानां पुण्यत्वमिति। रात्रिसङ्क्रान्तौ—

**देवीपुराणे** 'मानार्द्धे भास्करे पुण्यमपूर्णे शर्वरीदले ;
सम्पूर्णे तूभयोर्ह्यमतिरेके परेऽहनि ॥"

मानार्द्धं दिनार्द्धम्। भास्करे निरंश इति शेषः। अतिरेके अर्द्धरात्रोपरि। तदयं पर्यवसितोर्थः—अर्द्धरात्राभ्यन्तरसङ्क्रान्तौ पूर्वदिने प्रहरद्वयोपरि-प्रहरद्वयञ्यावत्पुण्यकालः। अर्द्धरात्रोपरि सङ्क्रान्तावग्रिमदिने प्रहर-द्वयञ्यावत्पुण्यकालः। सम्पूर्णार्द्धरात्रसङ्क्रान्तौ पूर्वदिनस्य प्रहरद्वयोपरि-प्रहरद्वयमग्रिमदिनस्य प्रहरद्वयञ्च पुण्यकालः। यदि च उदयादर्द्धरात्र-पर्यन्तमेका तिथिर्भवति तदा पूर्वदिनस्य प्रहरद्वयमेव पुण्यकालः। "आदौ पुण्यम्विजानीयाद्यद्यभिन्ना तिथिर्भवेत्" इति वचनात्। एवञ्च रात्रि सङ्क्रमणेऽपि दिवैव पुण्यत्वाभिधानात्—

"राहुदर्शनसङ्क्रान्तौ विवाहात्यय वृद्धिषु।
स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च ॥"

इति देवलवचने रात्रिपदमजहत्स्वार्थलक्षणया निषिद्धकालोपलक्षकम्, तेन सायाह्नेऽपि न दोष इति लभ्यते। किन्तु "राक्षसीनाम सा वेला गर्हिता सर्वकर्मसु" इत्यादिना तस्य निषेधात्।

व्यासः—'जपयज्ञविवाहेषु सङ्क्रान्तौ ग्रहणेषु च।
शर्वरी स्नानमिच्छन्ति नान्यदा तु विधीयते।।"

तत्रापि शर्वरीपदमुपलक्षणमेव। "तदहः पुण्यमिच्छन्ति गार्ग्य गालव गौतमाः, इतिवचनममूलकमेव, समूलत्वे वा तस्मिन्दिने पुण्यकाल इत्यर्थः।

शातातपः—"सङ्क्रान्तौ यानि दत्तानि हव्यकव्यानि मानवैः।
तानि तस्य ददात्यवर्कः पुनर्ज्जन्मनि जन्मनि।।"

ज्योतिश्शास्त्रे—"रविसङ्क्रमणे पुण्ये न स्नायाद्यस्तु मानवः।
सप्तजन्मन्यसौ रोगी दरिद्रश्चापि जायते" ।।

एतद्दर्शनात् सकलस्त्रीपुरुषसाधारणमत्र स्नानं, निन्दार्थवादात्।

"कन्या भोगो व्यथा चैव मित्राणां दर्शनन्तथा।
फलानि सप्त सङ्क्रान्तौ विद्यावस्त्रं धनागमः।।"

त्रिषट्कर्क्षक्रमेणात्र स्वजन्मनक्षत्रात्सङ्क्रान्तिनक्षत्रान्ता गणना।

"मृते जन्मनि सङ्क्रान्तौ ग्रहणे चन्द्रसूर्ययोः।
अस्पृश्यास्पर्शने चैव न स्नायादुष्णवारिणा।।

यद्यपि सङ्क्रान्तौ विधिनिषेधौ पुण्यकाल एव समुचितौ यतः पुण्यकाल-प्रयोजकीभूतसूर्यकर्मविशेषेऽभिहिते तदवच्छिन्नकालस्य परमदुर्ज्ञेयत्वप्रवृत्यनुपपत्तौ सङ्क्रान्तिपदस्य पुण्यकालपरत्वमेव वाच्यमतो विधिनिषेधयोरेकरूपेणैव वृत्तेरुचितत्वात्पुण्यकालमात्र एव मांसादित्याग उचितः, निषिद्धे कालवर्ज्जनमिति श्रवणात्। अत आचार एव तद्दिने मांसादित्यागे प्रमाणमिति।

इति सङ्क्रान्त्यद्भुतम्।

## अथ चन्द्राद्भुतम्

वराहः—"स्निग्धः स्थलः समश्रृङ्गो विशालस्तुङ्गश्चोदग्विचरन्नागवीथ्याम्।

दृष्ट : सौम्यैरशुभैर्विप्रयुक्तो लोकानन्दङ् कुरुतेतीव चन्द्रः ।।"

नागवीथी अग्रे वक्ष्यते । येषामयं स्वामी तेषामेवम्भूतो विशेषेनाभ्युदयाय, विपरीतो विशेषेण विपरीतकरः । चन्द्रस्वामिकान्याह यवनेश्वरः—

"स्त्रीचित्तनिद्रारतिभक्ष्यपेयः शीतद्रवस्वादुरसौषधीनाम् ।
स्रग्वस्त्रभूषामणिमौक्तिकानां प्रभुः शशाङ्को लवणाम्बुजानाम् ।।"

पराशरः—पर्वता जलदुर्गास्तु कोशलाः पुङ्गला हलाः ।
स्त्रीराज्यं भरुकच्छश्च तुषारा वनवासिनः ।।
मौति.का मणिशङ्खाब्जमौषधीः कुसुमं फलम् ।
द्वीपा महार्णवीयाश्च मधुरा लवणादयः ।।
गोधूमाः शालयः शृङ्गिकर्षकाश्च यवा अपि ।
सोमपा ब्राह्मणा ये च याज्ञिकास्तुरगा रसाः ।।
स्त्रीसौभाग्यविविक्तानि हास्यलास्येक्षितानि च ।
एतेषामधिपश्चन्द्रः हृष्टानाञ्च प्रकीर्त्तितः ।।

अथ शुभलक्षणमाह पराशरः—

"खण्डः स्फुटितो विवर्णो वेपनोऽशशाङ्कश्चन्द्रमाः प्रजानाशाय राज्योपप्लवाय चेति । अशशाङ्क इति लक्ष्मरहितः ।

वराहः- "भस्मनिभः परुषोऽरुणमूर्त्तिः शीतकरः किरणैः परिहीनः ।
श्यावतनुः स्फुटितः स्फुरणो वा क्षुद्डमरामयचौरभयाय" ।।

चन्द्रस्य वर्णफलम्—

वृद्धगर्गः-"दधिशङ्खसवर्णस्तु मुक्ताराशिनिभोऽमलः ।
भ्राजिष्णुरतिसुस्निग्धः क्षेमारोग्यकरः शशी" ।।

भार्गवीये-"शुक्ले शरीरे सोमस्य ब्रह्मवृद्धिं विनिर्दिशेत् ।
रक्ते शरीरे सोमस्य राज्ञाञ्च वधमादिशेत् ।।
पीते शरीरे सोमस्य वैश्यानाम्भयमादिशेत् ।
कृष्णे शरीरे सोमस्य शूद्राणां भयमादिशेत् ।।"

वृद्धगर्गः—"नीले श्यावे च शशिनि रूक्षे धूमतमोवृते ।
अनावृष्टिभयं रोगानग्निवातञ्च निर्द्दिशेत् ॥
पिण्डितस्तस्कराकर्षी रसनाशकरो भवेत् ।
उच्चैः सुभिक्षं नीचैस्तु सोमे दुर्भिक्षलक्षणम्" ॥

अथ प्रथमोदितचन्द्रस्य नीलमेघावरणफलमाह वृद्धगर्गः—

"यदा सोमः प्रतिपदि नीलैराच्छाद्यते घनैः ।
अन्यर्त्तुकाले लोकानां मरणन्तु विनिर्द्दिशेत्" ॥

अन्यर्त्तुकाल इति--प्रावृट्कालातिरिक्तकालपरम् ।

"यदा सोमः प्रतिपदि रजसा तमसाऽथ वा ।
आवृत्तः प्रतिदृश्येत भयन्तत्र समादिशेत्" ॥

प्रतिपद्ग्रहणं--प्रथमदर्शनोपलक्षकम् । अथ **कुजभेदनम्**---

उद्युक्तान् सह वाहनैर्नरपतींस्त्रैगर्तकान् मालवान्
कौलिन्दान् गणपुङ्गवानथ शिवीनायोध्यकान् पार्थिवान् ।
हन्यात्कौरवमत्स्यशुक्त्यधिपतीन् राजन्यमुख्यानपि
प्रालेयांशुरसृग्ग्रहे तनुगते षण्मासमर्यादया ॥

**अथ बुधभेदनम्**

वराहः--मगधान्मथुराञ्च पीडयेद्वेणायाश्च तटं शशाङ्कजः ।
अपरन्तु कृतं युगं वदेद्यदि भित्वा शशिनं विनिर्गतः" ॥

कृतं युगमिति-सत्ययुगस्यैवावतारो भवतीत्यर्थः ।

पराशरः--"बुधभिन्नः सुभिक्षक्षेमवृष्टिकरः ।"

**अथ गुरुभेदनम्**

वराहः--"गान्धारसौवीरकसिन्धुकीरान् धान्यानि शैलान्द्रविडाधिपांश्च ।
द्विजांश्च मासान् दश शीतरश्मिः सन्तापयेद्वाक्पतिना विभिन्नः" ॥

**अथ भार्गवभेदनम्**

वराहः--"भिन्नः सितेन मगधान् यवनान् पुलिन्दान् नेपालभृङ्गिमरुकच्छसुराष्ट्रमद्रान् । पाञ्चालकैकयकुलूतकपूरुषादान् हन्यादुशीनरजनानपि सप्तमासान्" ॥

अथ शनिभेदनम्

पराशरः-अर्कसुतसम्भेदे नृपतिविरोधामात्यभेदयूथेशगणपयौधेयार्जुनायनभयानावृष्टिप्रादुर्भावाश्च दशमासान् ।

अथ केतुभेदनम्

वराहः-क्षेमारोग्यसुभिक्षविनाशी शीतांशुः शिखिना यदि भिन्नः ।
कुर्यादायुधजीविनाशं चौराणामधिकेन च पीडाम् ।।

भार्गवीये-"बुधाङ्गिरोङ्गारकसौरभार्गवान् प्रदक्षिणं याति निशाकरो यदा ।
अनामयत्वं नृपसौख्यमुत्तमं विपर्यये चापि महाजनक्षयम्" ।।

वराहः-"चन्द्रमा यदि कुजस्य यात्युदक् पार्वतीयवलशालिनाञ्जयः ।
क्षत्रियाः प्रमुदिताः सयायिनो भूरिधान्यमुदिता वसुन्धरा" ।।

तथा-"वृद्धिः स्यान्मध्यदेशस्य ब्रह्मक्षत्रञ्च वर्द्धते ।
नागराणां जयञ्चोग्रमागन्तूनां पराजयः ।।

वराहः-भार्गवस्य यदि यात्युदक् शशी कोषयुक्तगजवाजिवृद्धिदः ।
यायिनां विजयो धनुष्मतां सस्यसम्पदपि चोत्तमा तदा ।।
रविजस्य शशी प्रदक्षिणङ्कुरुते चेत्परभूभृताञ्जयः ।
शकवाह्लिकसिन्धुपह्लवा जयभाजो यवनैः समन्विताः" ।।

वृद्धगर्गः—"यदा शनैश्चरं सोमः कुरुते त्रिःप्रदक्षिणम् ।
वर्द्धन्ते नागरा योधा यायिनामजयो ध्रुवम् ।।
ह्रियते चाशु धान्यार्घं सुभिक्षञ्चोपजायते ।
एतदेव विपर्यस्तं याम्येन गमनम्भवेत्" ।।

वराहः-शशिनि फलमुदक्स्थे यद्ग्रहस्योपदिष्टं
भवति तदपसव्ये सर्वमेव प्रतीपम् ।
इति शशिसमवायाः कीर्त्तिता भग्रहाणां
न खलु भवति युद्धं साकमिन्दोर्ग्रहर्क्षैः ।।

## अथाशुभसंस्थानानि

गर्ग:--"दक्षिणं चोन्नतं शृङ्गं न्यूनं तस्य तथोत्तरम् ।
दुष्टलाङ्गलसंस्थानं प्रजाक्षयकरं स्मृतम्" ॥
उन्नतमित्यर्द्धोन्नतम् ।

पराशर:--अर्द्धेन दक्षिणोन्नतशृङ्गो दुष्टलाङ्गलसंस्थानं परसैन्योद्योगनाशकृदिति । परसैन्योद्योगान्नाश:--परसैन्योद्योगनाश: ।

वराह:--दक्षिणविषाणमर्द्धोन्नतं दुष्टलाङ्गलाख्यन्तत् ।
पाण्ड्यनरेश्वरनिधनकृदुद्योगकरं बलानाञ्च ॥

वृद्धगर्ग —"दक्षिणं शृङ्गमुद्यम्य नीचमस्य तथोत्तरम् ।
सेनोद्योगकरं स्थानं कुरुते दुष्टलाङ्गलम् ॥
दक्षिणा: पश्चिमाश्चैव विजयन्ते तथा स्थिते ।
वैश्यशूद्राभिवृद्धिश्च शस्त्रमृत्युश्च जायते ॥
वाह्लीकयवनान् योद्धांस्तुषारांश्च समालवान् ।
शूरसेनांश्च निघ्नन्ति चन्द्रश्चैव तथोत्थित:" ॥

## अथ धनु:संस्थानफलम्

गार्गीये — "धनरूपे चन्द्रमसि युद्धं सर्वत्र जायते ।
अग्रतस्तु जयस्तेषां पृष्ठतस्तु पराजय: ॥
लाक्षारुधिरवर्णाभो धनु: स्थायी यदा भवेत् ।
सङ्ग्रामं योजयेत्सोमो लोके च तुमुलं भयम् ॥
अधोमुखं यदा शृङ्गं शशिनो दृश्यते तदा ।
संस्थानवर्जितकरे गोघ्नं दुर्भिक्षदायकम्" ॥

वराह ।— "अत्युच्छ्रायादेकं यदि शशिनोऽवाङ्मुखं भवेच्छृङ्गम् ।
आवर्ज्जितमित्यसुभिक्षकारि तद्गोधनस्यापि" ॥

**वृद्धगर्गः** :– "सङ्गताभ्यां समाभ्याञ्च तीक्ष्णाग्राभ्यां यदा शशी ।
दृश्यते सङ्कटस्थानं रोगशस्त्रक्षुधाकरम् ॥
अच्छिन्ना मण्डले रेखा शशिनो दृश्यते यदा ।
कुण्डाख्यन्नाम संस्थानं नृपविग्रहदायकम्" ॥

**गर्गवृद्धगर्गौ**- "चन्द्ररेखा यदा चोर्ध्वा भवेद्दण्डवदायता ।
उदक् शृङ्गायता चैव दण्डस्थानं तदुच्यते ॥
उद्युक्तदण्डा राजानो विनिहन्युः समन्ततः ।
चौरा जनपदे चैव ज्वरदाहश्च जायते" ॥

**वराहः**:–'मध्यतनुवज्राख्यः क्षुद्भयकृतसम्भ्रमाय राज्ञाञ्च ।"

**गर्गः**—"चन्द्ररेखा यदा व्यक्ता दक्षिणोत्तरमायता ।
शुक्लादौ प्रतिदृश्येत तद्युगस्थानलक्षणम् ॥"

**गार्गीये**—'सेनोद्योगो भवेत्तात्र दुर्भिक्षं भूमिकम्पनम् ।"

अथ पार्श्वशयनम्—

**वराहः**—"युगमेव याम्यकोट्यां किञ्चित्तुङ्गं स पार्श्वशायीति ।
विनिहन्ति सार्थवाहान् वृष्टेश्च विनिग्रहङ्कुर्यात् ॥"

**गार्गीये**—किञ्चित्तुङ्गं याम्यकोट्यां युगमेव यदा भवेत् ।
अवृष्टिः पार्वतीयानां मरणञ्च तदा भवेत् ॥

**वराहः**--प्रोक्तस्थानाभावादुदगुच्चः क्षेमवृद्धिवृष्टिकरः ।
दक्षिणतुङ्गश्चन्द्रो दुर्भिक्षभयाय निर्दिष्टः ॥

उत्तरश्रृङ्गोन्नतिरपि कदाचिदशुभफला, प्रकृतिविपरीतत्वात् ।

तथा –उत्तर शृङ्गोन्नतता चोत्तरायणे । दक्षिणश्रृङ्गोन्नतता दक्षिणायणे चाशुभफलेति ।

**मार्गवीये**—प्रथमे दर्शने त्विन्दोः समामाद्य यदा ग्रहम् ।
उत्तरं बर्द्धते श्रृङ्गं नीची भवति दक्षिणम् ॥

एवमेव श्रविष्ठाद्ये आश्लेषाद्ये च चन्द्रमाः ।
उद्गच्छेद्दक्षिणं शृङ्गं नीची भवती चोत्तरम् ॥
अत्र नश्येत राष्ट्रञ्च अन्तर्गिरि - महागिरिः ।॥"

इत्यादि ।

वराहः–भानां यथासम्भवमुत्तरेण यातो ग्रहाणां यदि वा शशाङ्कः ।
प्रदक्षिणन्तच्छुभदं प्रजानां याम्येन यातो न शुभः शशाङ्कः ॥

बृद्धगर्गः--नक्षत्राणां ग्रहाणाम्वा यदा तूत्तरगः शशी ।
तत्प्रदक्षिणमित्याहुर्भवेत्क्षेम - सुवृष्टये ॥
नक्षत्राणां ग्रहाणाम्वा यदा दक्षिणतो व्रजेत् ।
अपसव्यन्तदेव स्यादवृष्टिभयलक्षणम् ॥"

वटकणिकायाम्-"दक्षिणपार्श्वेन गतः शशी विशाखानुराधयोः पापः ।
मध्येन तु प्रशस्तः पित्र्येशविशाखयोश्चान्तः ॥
ऐन्द्रस्य शीतकिरणो मूलाषाढाद्वयस्य चायातः ।
याम्येन वीजजलचरकाननहा वह्निभयदश्च ॥"

बृद्धगर्गः--"ज्येष्ठामूलाप्यवैश्वानां दक्षिणेन व्रजेच्छशी ।
वैश्वानरः स्मृतो मार्गो दक्षिणो भयवैरकृत् ॥
देवो न वर्षति तदा शस्यन्नैवोपजायते ।
वाय्वग्निकोपो भवति क्षुधा मृत्युश्च जायते ॥"

मार्गवीये--"वैश्वानरपथं प्राप्तः समुद्रमपि शोषयेत् ।"

गर्गः–त्वष्ट्रैन्द्रस्य मित्रस्य कृत्तिकानाञ्च दक्षिणम् ।
विशाखयोमघानाञ्च अजवीथीन्तु ताम्विदुः ॥
क्षुन्निमित्तञ्च भवति जायते जनमारकः ।
विहन्याद्धनधान्यानि बलवत्त्वञ्च संश्रयम् ॥
क्षुभ्यन्ति चात्र भूतानि देवश्चैव न वर्षति ॥"

पराशरः-ज्येष्ठाऽऽश्लेषामैत्रत्वाष्ट्राणां दक्षिणतश्चरन् क्षुद्भयदः । उपरिष्टाद्वैरोधिको, धान्यानां नाशो मघानुराधयोः । शिशिरग्रीष्मयोर्दक्षिणेनाशुभदो वर्षास्ववर्षकरः । सर्वर्तुषु नैर्ऋताप्यवैश्वदेवानाम् ।

आषाढमासिकरोहिणीयोगे तु विशेषो वराहसंहितायाम्–

वराहः--"प्राजेशमाषाढतमिस्रपक्षे दोषाकरेणोपगतं समीक्ष्य ।
वक्तव्यमिष्टञ्जगतोऽशुभम्वा शास्त्रोपदेशाद्ग्रहचिन्तकेन ॥
स्पृशन्नुदग्याति यदा शशाङ्कस्तदा सुवृष्टिर्बहुलोपसर्गा ।
असंस्पृशन् योगमुदक्समेतः करोति वृष्टिं विपुलां श्रियञ्च ॥"

पराशरः--"रोहिणीनां प्राक्पश्चादनुगमनं चन्द्रमसोर्वर्षाबृद्धये पार्श्वयोर्विपर्ययः । शुक्रवृहस्पतिबुधसंयोगे शुक्रधान्यतिलमाषविनाशः । सौरस्य मध्यदेशाभावाद् भौमस्य शस्त्रकोपः । केतोर्भयदुर्भिक्षप्रादुर्भावः ।"

वराहः— दृश्यते न यदि रोहिणीगतश्चन्द्रमा नभसि तोयदावृते ।
रुग्भयम्महदुपस्थितन्तदा भूश्च भूरिजलशस्यसयुता ॥

## अथ द्विचन्द्रादिफलम्

विष्णुधर्मोत्तरे—'द्विचन्द्रे ब्राह्मणाधिक्यमाधिक्यं प्रलयाय तु ।"
प्रलयायेति लोकस्य नतु ब्राह्मणमात्रस्येति ।

वराहः--"दिवि भाति यदा तुहिनांशुयुगं द्विजबृद्धिरतीव तदा शुभदा ।
तदनन्तरवर्णरणोऽर्कयुगे जगतः प्रलयस्त्रिचतुःप्रभृति ॥"

अतश्च--"द्विचन्द्रं गगनं दृष्ट्वा ब्रूयाद्वह्मबधो महान् ॥"

इति भार्गवीयवचनम्, द्विचन्द्रं गगनं दृष्ट्वा त्र्यहाद्बह्मधम्वदेदिति गार्गीयवचनञ्च रूक्षविरश्मिद्विचन्द्रविषयम् लक्ष्मविकृतिपरम्वेति ।

आश्वमेधिके जरासन्धपराजयनिमित्तम्---
"शशञ्चाशु विनिर्भिद्य मण्डलं शशिनोऽपतत् ।"

बटकणिकायाम्—"उत्पाता व्याख्याता येऽर्क्के चन्द्रेऽपि ते विनिर्द्देश्याः ।
शुक्ले भवन्ति याप्याः कृष्णेऽधिकपापफलदास्ते" ॥

वराहः —शुक्ले पक्षे सम्प्रवृद्धे प्रवृद्धिं ब्रह्मक्षत्रं याति बृद्धिं प्रजाश्च ।
हीने हानिस्तुल्यतायाञ्च तुल्यं कृष्णे सर्वं तत्फलं व्यत्ययेन ॥

अत्रानुक्तविशेषशान्तिषु चन्द्रपूजापूर्विका फलगुरुलाघवमवगम्य प्रभूतकनकान्नगोमहीदानादिका शान्तिः कर्त्तव्या ।

मयूरचित्रे –"चन्द्रो रक्तसमो राज्ञो देशस्य च विनाशनः ।
युवराजस्य सेनान्यो बधमाहुस्तथैव च ॥
अधर्मिष्ठाः प्रजाश्च स्युः शान्तिश्च प्रथमैव तु ।
यदा चन्द्रमसः पार्श्वे दृश्यते प्रतिचन्द्रिका ॥
त्रिरात्रं जायते वृष्टिः मासार्द्धेन महद्भयम् ।
तत्र साधारणी शान्तिः कर्त्तव्या गर्गभाषिता" ॥

गर्गः –"पाकः सोमस्य मासिक" इति ।

## इति चन्द्राद्भुतम् ।

## अथ कुजाद्भुतम्

गर्गः—प्रदक्षिणगतिः कान्तः स्निग्धश्च विपुलोऽमलः ।
तप्तकाञ्चनसङ्काशो भवेल्लोकस्य वृद्धये ॥

प्रदक्षिणगतिः—ग्रहाणामुदग्गामी ।

वराहः—"विपुलविमलमूर्त्तिः किंशुकाशोकवर्णः
स्फुटरुचिरमयूखस्तप्तताम्रप्रभाभः ।
विचरति यदि मार्गञ्चोत्तरं मेदिनीजः
शुभकृदवनिपानां हार्दिदश्च प्रजानाम् ॥

अत्र मध्यचारी मध्यमफदः । दक्षिणमार्गचारीभयद इत्यूहनीयम् ।

गर्गः –"याम्यादि - पित्र्यपर्यन्तं कथितं मार्गमुत्तरम् ।
भाग्यादि नैर्ऋतान्तन्तु मध्यमं मार्गमुच्यते ॥
आषाढाद्याश्विनान्तन्तु दक्षिणं समुदाहृतम् ।
सौम्यमार्गस्थितो भौमः प्रजानां हितकारकः ॥
मध्ये तु मध्यफलदो याम्ये तु भयदः स्मृतः ॥"

येषान्तु स्वामी तेषां वर्णरश्मिप्रभादिशुभलक्षणयुक्तो विशेषेण शुभकरः,

विपरीतस्तु विशेषेण विपरीतकरः। मङ्गलस्वामिकान्याह यवनेश्वरः—

"चमूनृपस्तेनहुताशवृत्तिविषाग्निशस्त्रक्षतजक्षितीनाम्।
प्रवालधात्वाकरपुष्पजातीचामीकराणां क्षितिसूनुरीशः॥"

दूरस्थदेशा न लिखिताः। मन्दाकिनीविदेहौ मङ्गलस्वामिकौ। अथ वर्णफलमाह—

वृद्धगर्गः—"पीतकः कृष्णवर्णो वा विरश्मिर्वाऽपि गर्हितः।
त्रिंशद्भिर्लोहितो मासैर्विचरेद्राशिविंशकम्॥
यदा स पूजितश्चारो न च न्यूनो न चाधिकः॥"

## नक्षत्रविशेषचारफलम्

विष्णुधर्मोत्तरे—"ध्रुवेषु वैष्णवे मूले शाक्रेषु विचरन् कुजः।
घोराङ्करोत्यनावृष्टिं कृत्तिकासु मघासु च॥"

ध्रुवेषु-उत्तरत्रयरोहिणीषु।
भित्वा मघां विशाखां भिन्दन् भौमः करोति दुर्भिक्षम्।
मरकङ्करोति घोरं यदि भित्वा रोहिणीं याति॥

वृद्धगर्गः—"वक्रकाले तु सम्प्राप्ते स्थूलो भवति लोहितः।
हर्षितश्चातिरक्तश्च ज्वलिताग्निशिखोपमः॥"

विष्णुधर्मोत्तरे—"गतागतं यदा कुर्यान्मघामध्येन लोहितः।
तदा भवेदनावृष्टिः पाण्ड्यो राजा विनश्यति॥"

वराहः—"मध्येन यदि मघाया गतागतं लोहितः कुरुते।
पाण्ड्यो नृपो विनश्यति शस्त्रोद्योगाद्भयमवृष्टिश्च॥"

गर्गः—"स्वातीमैत्रेन्द्ररुद्रेषु प्राजापत्योत्तरासु च।
सञ्चरन् जलदान् हन्ति भौमः स्व भर्तृकानपि॥
अङ्गारकहृते मार्गे यदा वहति भास्करः।
तुषारवृष्टिं जानीयात् शालिक्षेत्रे तिलान् वपेत्॥"

पराशरः—"उदितः श्रवणे भौमः पुष्ये वक्रञ्चरेद्यदि।
मूर्द्धाभिषिक्ता राजानो विनश्येयुः परस्परम्॥"

वराहः—"यस्मिन् ऋक्षेऽभ्युदितस्तद्दिग्व्यूहान् जनान् हन्ति।
भीष्मपर्वणि--पाण्डवसैन्यबधनिमित्तम्--

वक्रानुवक्रङ्कृत्वा च श्रवणे आरकप्रभः।
ब्रह्मराशिं समावृत्य लोहितांशे अवस्थितः॥"

ज्योतिःपराशरविष्णुधर्मोत्तरेषु--

"फल्गुन्योरुदयङ्कृत्वा वक्रं स्याद्वैश्वदैवते।
प्राजापत्ये प्रवासः स्यात्त्रैलोक्यं तत्र पीड्यते॥"

प्रवासोऽस्तमयः।

पराशरः—"उदितः श्रवणे भौमः पुष्ये वक्रमियाद्यदि।
प्राजापत्योदितश्चैव नाशाय स्यान्महीक्षिताम्॥"

हरिवंशे कंशबधनिमित्तम्—

"एष घोरो ग्रहः स्वातीमुल्लिखन् खे गभस्तिभिः।
वक्रमङ्गारकश्चक्रे चित्रायां घोरदर्शनः॥"

वाणयुद्धे--"वक्रमङ्गारकश्चक्रे कृत्तिकासु भयङ्करः"। इति।

वृद्धगर्गः—त्रैमासिक क्षद्भयाय भयकृत्पाञ्चमासिकः।
प्रवासो लोहिताङ्गस्य चतुर्मासस्तु पूजितः॥"

अथास्य पञ्चवक्त्रन्तत्र-

वराहः-- "उष्णमश्रमुखं व्यालं लोहिताननमेव च।
निस्त्रिंशमुशलञ्चेति पञ्चवक्त्रैः कुजस्य तु॥"

तत्रोष्णमुखम्--

गर्गः--"उदयात्सप्तमे कुर्यादष्टमे नवमेऽपि वा।
निवृत्तिं लोहिताङ्गस्तु तदुष्णवक्त्रमुच्यते॥
नरोऽग्निजीविनो ये च पचन्ति च दहन्ति च।
तेषामेवोच्यते तापो जायते धनसंक्षयः॥"

विष्णुधर्मोत्तरे--अथ यस्मिन्नक्षत्रे भौमोदयं प्रतिपद्यते तस्मात्सप्ताष्टनव-मर्क्षेषूष्णमुखन्नाम वक्रङ्करोति, येनाग्निमन्तो ब्राह्मणा अग्निजीविनश्च पीड्यन्ते ।

## अथाश्रुमुखम्

गर्गः—"दशमैकादशे चाऽपि निवृत्ते द्वादशेऽपि वा ।
लोहिताङ्गे ग्रहे ज्ञेयं वक्त्रमश्रुमुखन्ततः ॥
तत्र वर्षति पर्जन्ये दूषयन्वै शुभान्रसान् ।
दुष्टास्ते दूषयन्त्याशु नृणां धातुंस्तथा दृशम् ॥
बहवो व्याधयः क्रूरा उत्पद्यन्ते शरीरिणाम् ।
बहुभिः कारणैरेतैस्ततो धातुः प्रलीयते ॥"

दूषयन्वर्षति दुष्टवर्षे रसान् दूषयतीत्यर्थः ।

## अथ व्यालमुखम्

वृद्धगर्गः---"त्रयोदशगतः कुर्याच्चतुर्दशगतोऽपि वा ।
निवृत्तिमुदयाद्भौमो वक्त्रं व्यालन्तदुच्यते ॥
भवेत्तत्र मृगव्यालदंष्ट्रिभ्यः सर्वतो भयम् ।
औदकानि च सत्त्वानि शस्यञ्चोत्तमतां व्रजेत् ॥"

अन्यत्र--"नृपाणान्तु भयम्विद्याच्छस्यसम्पत्तिमादिशेत् ।"

## अथ लोहितमुखम्

गर्गः---"यदि पञ्चदशे भेऽथ भूसुतः षोडशेऽपि वा ।
निवृत्तिङ्कुरुते भौमस्तद्वक्त्रं लोहिताभिधम् ॥
दीप्तिमन्तः पार्थिवाश्च भवन्ति प्रस्थिता भुवि ।
शस्त्रकोपश्च सुमहान्मुखरोगा भवन्ति च ॥"

## अथ निस्त्रिंशमुशलमुखम्--

वृद्धगर्गः—"अष्टादशात्सप्तदशान्निवृत्तिङ्कुरुते यदा ।
निस्त्रिंशमूशलन्नाम तद्वक्त्रं पञ्चमं स्मृतम् ॥

योद्धा युद्धेषु वर्त्तन्ते भिद्यन्ते सौहृदानि च।
दस्युभिर्बध्यमानाश्च वर्णा गच्छन्ति संक्षयम्॥"

अन्यत्र—"पशुपुत्रधनन्धान्य - माहरन्ते च दस्यवः।
प्राणिनां जीवितं नास्ति जायते शस्त्रसम्भ्रमः॥"

अथ वक्त्राणां फलपाकसमयः

बृद्धगर्गः "आदावेव फलम्बिद्याद् दुष्टस्याश्रुमुखस्य च।
व्यालस्य निधनं वक्रेऽनुक्रे शेषयोः फलम्॥"

आदावुदयाद्वक्रारम्भपर्यन्तम्। निधने भबिष्यदस्तमये वक्रे यावद्वक्रम्। अनुवक्र वक्रनिवृतितोस्तारम्भऽपर्यन्तम्। तथा च वराहः—

यद्युदयर्क्षाद्वक्रङ्करोति नवमाष्टसप्तमर्क्षेषु।
तद्वक्त्रमुष्णमुदये पीडाकरमग्निवार्त्तानाम्॥
द्वादशदशमैकादशनक्षत्राद्वक्रिते कुजेऽश्रुमुखम्।
दूषयति रसानुदये करोति रोगानवृष्टिञ्च॥
व्यालन्त्रयोदशर्क्षाच्चतुर्द्दशाद्वाऽपि पच्यतेऽस्तमये।
दंष्ट्रिव्यालमृगेभ्यः करोति पीडां सुभिक्षञ्च॥
रुधिराननमिति वक्त्रं पञ्चदशाच्च षोडशाद्विनिवृत्तो।
तत्कालं मुखरोगं सभयञ्च सुभिक्षमावहति॥
असिमुशलं सप्तदशाष्टादशतोऽपि तदनुवक्रे।
दस्युगणेभ्यः पीडाङ्करोत्यवृष्टिं सशस्त्रभयम्॥
चारोदयाः प्रशस्ताः श्रवणमघादित्यहस्तमूलेषु।
एकपदाश्विविशाखाप्राजापत्येषु च कुजस्य॥

अत्रानुक्तविशेषशान्तिषु कुजाद्भुतेषु कुजपूजापूर्विका फलगुरुलाघवमवगम्य प्रभूतकनकान्नगोमहीदानादि शान्तिः कर्त्तव्या। फलपाकस्तु—

गार्गीये—त्रिभिर्मासैस्तु भौमस्येति।

इति कुजाद्भुतम्।

## अथ बुधाद्भुतम्

पराशरः— बिमलमणिजलरजतस्फटिकाभः प्रशस्यते। तत्र येषामयं स्वामी तेषां विशेषेण हिताय, विपरीतो विशेषेण विपरीताय। बुधस्वामिकान्याह—

यवनेश्वरः —नानागुणद्रव्यविकल्पयुक्तिनैपुण्यशिल्पश्रुतिवेसराणाम्।
माहात्यमन्त्रार्थविदाब्दिकानां प्रभुर्बुधश्चैत्यवनस्पतीनाम्॥

तथा...बुधस्य सौराष्ट्रकभोजवङ्गा गङ्गाश्रिताश्चोत्तरकूलनद्यः।
सिन्धोश्च मध्या मथुरापुरस्ताद्गोमन्तसिन्ध्वद्रिगुहाश्रिताश्च॥

इत्यादि बहुदेशा वटकणिकादावुक्ताः।

काश्यपः —"सुवर्णं रजतं रत्नमातङ्गतुरगादि यत्।
पौरा जनपदाः सौम्याः सोमपुत्रोऽधिपः स्मृतः॥"

वराहः—"गङ्गाकौशिकाद्याः सरितो वैदेहकाम्वोजा" इत्याद्युक्ताः।

अथास्यचारफलम्—

वराहः—विचरन् श्रवणधनिष्ठाप्राजापत्येन्द्रवैश्वदेवानि।
भिन्दन् हिमकरतनयः करोत्यवृष्टिं सरोगभयाम्॥

काश्यपः— "रौद्रादीनि यदा पञ्च भेदितानि समन्ततः।
चन्द्रजेन तदा पीडा शश्वच्छस्त्रभयादिभिः॥
सौम्यं विष्णुं धनिष्ठाञ्च रोहिणीं विश्वमेव च।
शशिजश्च यदा हन्ति प्रजारोगैः प्रपीड्यते॥
हस्तादिषु यदा षट्सु नक्षत्रेष्विन्दुजः स्थितः।
गवामशोभनं प्रोक्तः सुभिक्षं सस्यसम्पदः॥
भरणीकृत्तिकार्यम्णमाहिर्बुध्नञ्च चन्द्रजः।
धातुद्रव्यविनाशाय प्राणिनां परिकीर्त्तितः॥
रेवतीं वारुणं मूलमश्विनीञ्चोपमर्दयन्।
बुधो वणिग्भिषग्वाहान् जलोत्थांश्च विनाशयेत्॥
पूर्वाधिक्षत्रये सौम्यो भेदं कृत्वा यदि व्रजेत्।
क्षुच्छस्त्रतस्करभयैः करोति प्राणिनां वधम्॥

आर्यम्णं हौतभुजं भाद्रपदामुत्तरां यमेशञ्च ।
चन्द्रस्य सुतो निघ्नन् प्राणभृतां संक्षयं कुरुते ।।

वराहः—आश्विनवारुणमूलान्युपमृद्गन् रेवतीञ्चन्द्रसुतः ।
पण्यभिषग्नौजीविक-सलिलजतुरगोपघातकरः ॥
नोत्पातपरिहीनः कदाचिदपि चन्द्रजो व्रजत्युदयम् ।
जलपवनदहनभय - कृद्धान्य र्घक्षय - विवृद्ध्यै ॥

वृद्धगर्गः—स्नेहशस्यरसादीनान्तथाऽर्घ - क्षयवृद्धयोः ।
ग्रहाणामुदयार्थम्वा दृश्यतेऽभ्युदितो बुधः ॥
पुरस्तादुदितः सौम्यो धान्यस्नेहार्घवर्द्धनः ।
अर्घह्रासकरः स्निग्धो भवत्ययनमाश्रितः ॥
अत्युष्णमतिशीतञ्च वर्षं वायुरथोभयम् ।
फलं बुधोदयस्यैतद्रसधान्यविनाशनम् ॥"

वक्रफलमाह--

वृद्धगर्गः--"अवर्षे कुरुते वर्षं वर्षे वर्षं न गच्छति ।
भये च कुरुते क्षेमं सर्वत्र प्रतिलोमगः ॥"

विष्णुधर्मोत्तरे--"कार्त्तिकेऽश्वयुजे पौषे चाषाढे श्रावणे बुध ।
दृष्टो लोकभयाय स्यान्माघवैशाखयोस्तथा ॥"

वृद्धगर्गः--"वैशाखे पौर्णमासे च श्रावणाषाढयोरपि ।
न दृश्यते बुधः प्रायो मासेष्वन्येषु दृश्यते ॥
यदाऽदृश्येषु दृश्यः स्याद्दृश्येषु च न दृश्यते ।
गवां रोगमनावृष्टिं दुर्भिक्षञ्चापि निर्द्दिशेत्" ॥

अत्रानुक्तविशेषशान्तिषु बुधोत्पातेषु फलगुरुलाघवमवगम्य बुध-पूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका सामान्या शान्तिरवगन्त-व्या । फलपाकसमयस्तु गार्गीये बुधे यावत्तद्दर्शनमिति ।

इति बुधाद्भुतम् ।

## अथ वृहस्पत्यद्भुतम्

तत्र शुभसूचकलक्षणमाह वराहसंहितायाम्---

"अकलुषांशुजटिलः पृथुमूर्त्तिः कुमुदकुन्दकुसुमस्फटिकाभः ।
ग्रहहतो न यदि सत्पथवर्त्ती शुभकरोऽमरगुरुर्मनुजानाम् ॥

येषामयं स्वामी तेषामेवम्विधो विशेषेण हितकरः । विपरीतस्तु विपरीतकरः । गुरुस्वामिकान्याह यवनेश्वरः--

माङ्गल्यधर्मद्विजदेवयज्ञधान्याकर - स्थानगुणात्मजानाम् ।
सुवर्णयानासनपौष्टिकानां प्रभुर्गुरुर्मन्त्रिमहत्तराणाम् ॥

कश्यपः--"राजा पुरोहितो मन्त्री माङ्गल्यं पौष्टिकं व्रतम् ।
कारुण्यकर्मसिद्धानां विद्याशौचतपस्विनाम् ।
त्रैगर्त्ताः सिन्धुसौवीराः शतद्रूर्मथुरानदी" ॥
इत्यादिदेशाः ।

पराशरः--"श्वेतरक्तपीतकृष्णवर्णो ब्राह्मणादिवर्णजयाय ।

वराहः--"धूम्राभेऽनावृष्टिस्त्रिदशगुरौ नृपवधो दिवादृष्टे ।
विपुलेऽमले सुतारे रात्रौ दृष्टे नृपाः स्वस्थाः ॥
अनलभयमनलवर्णे व्याधिः पीते रणागमः श्यामे ।
हरिते च तस्करेभ्यः पीडा रक्ते च शस्त्रभयम् ॥

अथ नक्षत्रचारफलमाह वराहः--

उदगारोग्य सुभिक्षक्षेमकरो वाक्पतिश्चरन् भानाम् ।
याम्ये तद्विपरीतो मध्येन तु मध्यफलदायी ॥

पराशरः--"प्रच्छादनेन रोहिण्याः प्रजापीडां विनिर्दिशेत् ।
शकटारोहणे विद्याज्जगतः सम्भ्रमं बुधः" ॥

राशिचारफलं विष्णुधर्मोत्तरे--जीवस्त्रयोदशभिर्मासैः राशिं विचरन् शुभफलो भवति, अन्यथा कष्टफलः ।

वराहः -विचरन् भद्वयमष्टस्तत्साद्धं वत्सरेण मध्यफलः ।
शस्यानां विध्वंसी विचरेदधिकं यदि कदाचित् ॥

वार्हपस्यत्यादिफलं वराहसंहितायाम्--

नक्षत्रेण सहोदयमुपगच्छति येन देवपतिमन्त्री ।
तत्संज्ञं बक्तव्यं वर्षमापक्रमेणैव ॥

कश्यपः—"संवत्सरे युगे चैव षष्टयब्देऽङ्गिरसः सुतः ।
यन्नक्षत्रोदयं कुर्यात्तत्संज्ञं वत्सरं विदुः ॥
कृत्तिकादिसमा ज्ञेया द्विद्विनक्षत्रचारिणः ।
त्रिभं भाद्रपदं ज्ञेयं फाल्गुनाश्वयुजौ तथा" ॥

अथ मासेनफलमुच्यते

पराशरेण त्वभ्युदयादेव फलमुक्तम् । तथाहि—तस्मिन् कृत्तिकारोहिणीषु दिनेषु क्षुच्छस्त्राग्न्याबृष्टिव्याधिप्रावल्यम्, सौम्यरौद्रयोरेतदेव, तिष्यपुनर्वस्वोरुक्तविपर्ययः, पष्यवत्मघाऽऽश्लेषासु राज्ञामुपतापश्च । फाल्गुनीसावित्रेषु क्वचित्सुभिक्षं नारीदौर्भाग्यञ्च । चित्रास्वात्युदितो नृपशस्यक्षेमविवद्धये । एवमैन्द्राग्न्यमैत्रयो । ऐन्द्रनैऋतयोर्वनस्पतिश्रेष्ठनृपतिप्रधानविनाशायेतरवृद्धये । आषाढयोः प्राक्परशस्यानां वृद्धिक्षयौ मध्यक्षेमवर्षणमन्योन्यभेदश्च । श्रवणश्रविष्ठावारुणेषु यज्ञनृपशस्यक्षेमारोग्यविवृद्धये । अजाहिर्बुध्नपौष्णेष्वाषाढवत्फलं प्राक्शस्यविपर्ययः । प्रभूतशस्यविजयक्षेमाण्यश्वयुग्भरण्योः । वर्षन्तु कार्त्तिकादि वोद्धव्यम् । यदाह —

विष्णुधर्मोत्तरे--"आग्नेयकेशगे जीवे वर्षं स्याद्वह्निदैवतम् ।
अहितन्तु विनिर्दिष्टं गोद्विजाग्न्युपजीविनाम् ॥

केशो--रोहिणी । वृद्धगर्गः:--

कृत्तिका रोहिणीञ्चापि चरेद्यदि वृहस्पतिः ।
अव्दः स कार्त्तिको नाम भयव्याधिसमाकुलः ॥

अग्निःकुप्यति शस्त्रञ्च चित्रं वर्षति वासवः ।
अन्नञ्च पुष्कलं विद्यात् पूर्वशस्यमपुष्कलम् ॥
सौम्यं रौद्रञ्च नक्षत्रं चरेद्यदि वृहस्पतिः ।
भवेत्स मार्गशीर्षोऽब्दः सर्वदोषसमन्वित ॥
न वर्षति तदा देवः शुष्यन्ति च जलाशयाः ।
न समृद्ध्यन्ति शस्यानि जातञ्चैव विहन्यते ॥
दुर्भिक्षभयरोगैश्च विविधैश्चाप्युपद्रवैः ।
चराचराणां भतानामनयः सम्प्रवर्त्तते" ॥

विष्णुधर्मोत्तरे--"आदित्य पुष्यगे चाब्दं विज्ञेयं गुरुदैवतम् ।
आतङ्करहिते लोके क्षेमारोग्यसुखप्रदम्" ॥

वृद्धगर्गः--"फल्गुन्यो चैव हस्तञ्च चरेद्यदि वृहस्पतिः ।
स फाल्गुनोऽतिक्रूरः स्यात् धान्यमुत्कर्षतां व्रजेत् ॥
क्वचिन्निष्पद्यते शस्यं क्वचिच्छस्यं विपद्यते ।
क्वचित्सुभिक्षं भवति क्वचित्क्षेमं क्वचिद्‌द्वयम् ॥
चित्रा स्वाती च नक्षत्रे चरेद्यदि वृहस्पतिः ।
चैत्रः सम्वत्सरः सोऽल्पक्षेमारोग्यसुभिक्षकृत् ।
मृदवष्पार्थिवाश्चात्र चित्रञ्च मृदु वर्षति" ॥

विष्णुधर्मोत्तरे--"विशाखामैत्रगे जीवे वर्षमिन्द्राग्निदैवतम् ।
सौभिक्षानन्दजनकं यज्ञधर्मप्रवर्द्धनम् ॥
गर्गः--पुनवसुञ्च पुष्यञ्च चरेद्यदि वृहस्पतिः ।
पौषः सम्वत्सरः स स्यात् सर्वौषधिसमन्वितः ॥
शस्यं सम्पद्यते सर्वं सम्यग्वर्षति वासवः ।
उत्तमं क्षेमसौभिक्ष्यं भवेद्धर्मस्तदा सताम्" ॥

वृद्धगर्गः--अश्लेषाञ्च मघाञ्चैव चरेद्यदि वृहस्पतिः ।
माघः सम्वत्सरः स स्यात् सर्वभूतहितोदयः ॥
सम्यग्वर्षति पर्यन्यः शस्यमुत्तमतां व्रजेत् ।
क्षेमारोग्यसुभिक्षानि प्रजाधर्मकरी तदा" ॥

विष्णुधर्मोत्तरे--फल्गुनीद्वय हस्तस्थेवर्षम्भाग्यमुदाहृतम् ।
चौरप्राबल्यदं घोरं नारीदौर्भाग्यकारकम् ॥
क्वचित्क्षेमसुभिक्षाणि क्वचिदक्षेमकारकः" ॥

वृद्धगर्गः—"ज्येष्ठामूले च नक्षत्रे चरेद्यदि वृहस्पतिः ।
ऐन्द्रः सम्वत्सरः स स्यात्सर्वभूतहितः शुभः ॥
दुर्भिक्षं जायते घोरं वैरञ्चैव प्रवर्त्तते ।
न च वर्षेत्तदा देवो न चापि बिनिवर्त्तते" ॥

विष्णुधर्मोत्तरे--"आषाढद्वयगे जीवे वैश्वदेवमुदाहृतम् ।
नाशुभं न शुभं लोके राजविग्रहकारणम्" ॥

वृद्धगर्गः--"पूर्वोत्तरे तथाषाढे चरेद्यदि वृहस्पतिः ।
आषाढः स तु विज्ञेयः सच सम्वत्सरोऽशुभः ॥
मिथो भेदाः प्रवर्तन्ते वलक्षोभा भवन्ति च ।
शारदं पच्यते धान्यं ग्रीष्मधान्यं न पच्यते" ॥

विष्णुधर्मोत्तरे--"विष्णुवासवसंस्थे च वैष्णवं परिकीर्त्तितम् ।
क्षेमसौभिक्ष्यदं लोके पाखण्डपरिपीडनम्" ।

वृद्धगर्ग--"श्रावणादीनि च त्रीणि चरेद्यदि बृहस्पतिः ।
श्रावणो नाम सोऽब्दः स्यात्क्षेमसौभिक्ष्यपुष्टिदः ॥
वारुणं भाद्रद्वयगं चरेद्यदि वृहस्पतिः ।
प्रौष्ठपाद इति ज्ञेयो मध्यः सम्वत्सरो भवेत् ॥
सम्पद्यते शस्यपूर्वमुत्तरं नोपपद्यते ।
योगक्षेमो भवेन्मध्यो धान्यञ्चैवार्घतां व्रजेत्" ॥

विष्णुधर्मोत्तरे—"पौष्णाश्वियाम्यगे जीवे वर्षं स्यादश्विदैवतम् ।
सुवृष्टिक्षेमदं लोके सर्वातङ्कविवर्जितम् ॥

पराशरः--"कृत्तिकासु शनैश्चारी विशाखायां वृहस्पतिः ।
तिष्ठेद्यदा तदा घोरः प्रजानामनयो भवेत् ॥
एकनक्षत्रमाश्रित्य तिष्ठेतां युगपद्यदि ।
अन्योन्यभेदं जानीयात्ततः पुरनिवासिनाम्" ॥

वराह--:"यदा विशाखासु सुरेन्द्रमन्त्री सुतश्चभानोर्दहनर्क्षमाश्रितः।
तदा प्रजानामनयोतिघोरः पुरप्रभेदापचयोऽब्दमेकम्" ॥

विष्णुधर्मोत्तरे- "चित्रायां लोहितो यत्र मूले देवगुरुस्तथा।
भार्गवश्च श्रविष्ठासु तदा पौरभयं भवेत् ॥
एकेन यदि वा द्वाभ्यां ग्रहाभ्यां सहितो गुरुः।
शनैश्चरो वा दृश्येत तदा दुर्भिक्षमादिशेत्" ॥

## अथ षष्टयब्दानयनम्

वराहः- "गतानि वर्षाणि शकेन्द्रकलाद्धतानि रुद्रैर्गुणयेच्चतुर्भिः।
नवाष्टपञ्चाष्टयुतानि कृत्वा संभाजयेच्छून्यशरागरामैः ॥
लब्धेन युक्तं शकभूपकालं संशोध्य षष्ट्या विषयैर्विभज्य।
युगानि नारायणपूर्वकानि लब्धानि शेषः क्रमशः समाः स्यु ॥
एकैकमब्देषु नवाहतेषु दत्त्वा पृथग्द्वादशकं क्रमेण।
हृत्वा चतुर्भिर्वसुदेवताद्यान्युडूनि शेषांशकपूर्वमब्दम्" ॥

अथ ब्रह्मविंशतिकान्तर्गत-विंशतिवर्षाणां नामानि--

प्रभवो विभवः शुक्लः प्रमोदश्च प्रजापतिः।
अङ्गिराः श्रीमुखो भावो युवा धाता तथैव च ॥
ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः।
चित्रभानुः सुभानुश्च तारणः पार्थिवो व्ययः" ॥

अथ विष्णुविंशतिकान्तर्गत-विंशतिवर्षाणां नामानि--

"सर्वजित्सर्वधारी च विरोधी विकृतः खरः।
नन्दनो विजयश्चैव जयो मन्मथदुर्मुखौ ॥
हेमलम्बो विलम्बश्च विकारी शर्वरी प्लवः।
शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ" ॥

अथ रुद्रविंशतिकान्तर्गत-विंशतिवर्षाणाञ्च नामानि—

"प्लवङ्गः कीलकः सौम्यः साधारणविरोधकौ।
परिधावी प्रमाथी चाप्यानन्दो राक्षसोऽनलः ॥

पिङ्गलः कालयुक्तश्च सिद्धार्थो रौद्रदुर्मती ।
दुन्दुभी रुधिरोद्गारी रक्ताक्षः क्रोधनो क्षयः ॥
वार्हस्पत्या इमे प्रोक्ता वत्सरा मुनिभिः क्रमात् ।
तेषु विंशतिकाधीशा ब्रह्मविष्णुशिवाः स्मृताः ॥"

अथ षष्ठ्यब्देषु द्वादशयुगानां नामानि--

"पञ्चभिश्च युगो वर्षैर्युगा द्वादश एव च ।
विष्णुर्जीवः शचीशोऽग्निस्त्वष्टाहिर्बुध्न्यसंज्ञकः ॥
पितरो वैश्वदेवश्च सोमज्वलनसंज्ञकौ ।
नासत्याख्यो भगश्चान्त्यो युगानामधिदेवताः ॥"

अत्रानुक्ताविशेषशान्तिषु वृहस्पत्यद्भुतेषु वृहस्पतिपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका शान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या । फलपाकसमयस्तु जीवस्य वर्षेणेति वराहः ।

## इति वृहस्पत्यद्भुतम् ।

## अथ शुक्राद्भुतम्

वराहः "दधिकुमुदशशाङ्ककान्तिभृत् स्फुटविकसन् किरणो वृहत्तनुः ।
सुगतिरविकृतो जयान्वितः कृतयुगरूपकरः सिताह्वयः" ॥

येषामयं स्वामी तेषामविशेषेण एवम्भूतो हितकरः । विपरीतस्तु विशेषेणाहितकरः । भार्गवस्वामिकान्याह यवनेश्वरः—

"वज्रादिरत्नाकरगोसुतस्त्रीविवादगन्धाम्बरभूषणानाम् ।
सौभाग्यसौख्यश्रुतिसञ्चयानां प्रभुर्निधीनां धनिनाञ्च शुक्रः" ॥

वराहः--शिखिभयमनलाभे शस्त्रकोपश्च रक्ते
कनकनिकषगौरे व्याधयो दैत्यपूज्ये ।

हरितकपिशरूपे श्वासकासप्रकोपः
पतति न सलिलं खाद्भस्मरूक्षासिताभे ॥

बृद्धगर्गः-- नीले कपिलवर्णे वा भयम्भवति भार्गवे ।
ताम्रवर्णे तथा रूक्षे मेघेष्वम्बु न दृश्यते ॥
श्यामवर्णोऽभिघाताय नीलपीतस्तु रोगकृत् ।
चित्रे भयान्युदीर्यन्ते दुर्भिक्षं कपिले भवेत् ॥
धूम्रवर्णेऽग्निवर्णे वा भयं शस्त्राग्निसम्भवम्" ॥

अथ नक्षत्रचारफलम्—

काश्यपः--"अश्विन्यां तुरगे पीडा याम्ये तु कृषिजीविनाम्" ॥

वराहः—"अश्विन्यां हयपीडा याम्ये तु किरातयवनानाम्" ॥

काश्यपः--"भेदयेत्कृत्तिकां शुक्रो बहुतोयञ्च पातयेत् ।
रोहिण्यां मरकं घोरं गृध्राकुलभयावहम्" ॥
मृगे तु सर्बशस्यानां क्षयङ्कुर्याद्भृगोः सुतः ।
आर्द्रायां कलिङ्गजातान् कोशलांश्च निपीडयेत् ॥
पुनर्वसौ विदर्भांश्च पीडयत्युशनाः पुनः ।
पुष्ये तु बृष्टिमाख्याति पुष्टिः शस्यविवृद्धये ॥
अश्लेषासु च सर्पाणां पीडाङ्कुर्याद्भृगोः सुतः ।
मघायां संस्थिते घोरम्भयम्विद्यात्त भार्गवे ॥
सलिलञ्च भवेद्भूरि येन धात्री न दृश्यते ।
भाग्ये पुलिन्दशवरान्नाशयेत् सलिलं पतेत् ॥
आर्यम्णे तु भवेत्पीडा पञ्चालकुरुजाङ्गलान् ।
हस्ते प्राप्ते कौरवाणां पीडां चित्राकरेषु च ॥
सुवृष्टिश्च सुभिक्षश्च चरत्यस्मिन् भृगोः सुते ।
जलस्य च निरोधम्वै कुर्यादेवन्तु भार्गवः ॥
सुवृष्टिं क्षयकृत्पीडां चित्राभेदं यदा भवेत् ।
स्वातीस्थितः सुबृष्टिञ्च वणिङ्नाविकभीतिकृत् ॥

विशाखायां सुवृष्टिश्च मैत्रे मैत्रं विकाशयेत् ।
ऐन्द्रे पौरविरोधः स्यान्मूले तु भिषजां भयम् ॥
आषाढयोर्व्याधिभयं वैष्णवे श्रवणे रुजः ।
धनिष्ठायाङ्कर्मकृतां वारुणे शौण्डिकक्षयः ॥
प्रौष्ठपदे व्याघ्रहिंसा आहिर्बुध्न्ये धनक्षयः ।
पापिनामथ नृपाणां च पौष्णे विद्यान्महद्भयम् ॥

**वराहः**--"ऐन्द्राग्ने सुवृष्टिर्वणिजाञ्च भयं विजानीयात् ।
मैत्रे मित्रविरोधो ज्येष्ठायां क्षत्रकुलसन्तापः ॥
मौलिकभिषजां मूले त्रिष्वपि चैतेष्वनावृष्टिः ।

**वटकणिकायां**--मूलाज्येष्ठाषाढापूनर्वसूनां यदेति मध्येन ॥
भौमहते चार्गे यावत्तावत्कृतः सलिलम् ।

**पराशरः**--अत्रर्षके भे विचरन् यदि वर्षति भार्गवः ।
वर्षकर्क्षगतो वर्षं षोडशार्चिर्न वर्षति" ॥

षोडशार्चिरिति सम्पूर्णरश्मिरपि न वर्षतीत्यर्थः ।

**वृद्धगर्गः**--"आग्नेयत्वाष्ट्रमैत्राणि रोहिणीं पित्र्यमेव च ।
ऐन्द्राग्नञ्चापि रौद्रञ्च शुक्रो दक्षिणतश्चरन् ॥
करोत्यर्थकृतां बुद्धिमवृष्टिं शस्यनिग्रहम् ।
शस्त्रं रोगञ्च कोपञ्च ग्रीष्मे चाग्निभयम्भवेत् ॥
आषाढरोहिणीनाञ्च भेदने च पुनर्वसोः ।
एतदेवफलङ्कुर्यात्पुराणाञ्चापि विद्रवम् ॥
एषामेवोत्तरेणैव विचरन् सौभिक्ष्यवृष्टिकृत् ।
भार्गवो मध्यगश्चैव कुर्यान्मध्यशुभाशुभम्" ॥

अथास्य **मण्डलफलम्** । तथा **चासितः**—

अश्विन्यादित्रिभाः सर्वा नागाद्या दहनान्तिकाः ।
वीथयो भृगुपत्रस्य नवप्रोक्ता मनीषिभिः ॥

**वराहः**--"नागगजैरावतवृषभगोजरद्गवमृगाजदहनाख्याः ।
अश्विन्याद्याः कैश्चित्त्रिभाः क्रमाद्वीथयः कथिताः ॥

तिस्रस्तिस्रस्तासां क्रमादुदङ्मध्ययाम्यमार्गस्थः ।
तासामप्युत्तरमध्यदक्षिणेन स्थितैकैका ॥
उत्तरवीथिषु शुक्रः सुभिक्षशिवकृद्गतोऽस्तमुदयम्वा ।
मध्यासु मध्यफलदः कष्टफलो दक्षिणस्थासु ॥
अत्युत्तमोत्तमोनं सममध्यन्यूनमधमकष्टफलम् ।
कष्टतरं सौम्याद्यासु वीथिषु यथाक्रमं ब्रूयात् ॥"

वराहेन त्वेता एव वीथयो नक्षत्रान्तरैः कथिताः ।

**बृद्धगर्गः**—"भरण्यादीनि चत्वारि प्रथमं शुक्रमण्डलम् ।
सर्वभूतहितन्नाम क्षेमसौभिक्ष्यवर्षदम् ॥

शल्वाधिपः शूरसेनः पीड्यते मगधाधिपः ।
मत्स्याधिपः शिम्बिपतिर्गवां रोगम्विनिर्द्दिशेत् ॥
आर्द्रादि रोहिणीं नाम द्वितीयं शुक्रमण्डलम् ।
चण्डाभिवर्षी पर्यन्यः सर्वशस्यानि भावयेत् ॥
क्षेमारोग्यसुभिक्षैश्च मोदन्ते सर्वतः प्रजाः ।
कलिङ्गाश्मकविप्राणामनयस्तत्र निर्द्दिशेत् ॥
मघादिदारुणं नाम्ना तृतीयं शुक्रमण्डलम् ।
अहितं सर्वभूतानां दारुणव्याधिसङ्कुलम् ॥
संजातान्यपि नश्यन्ति सवशस्यानि चेतिभिः ।
उद्योगाश्चापि जायन्ते वायुर्वह्निश्च कुप्यति ॥
वैरोचनञ्चतुर्थन्तु स्वात्याद्यं शुक्रमण्डलम् ।
शिवाभिवर्षी पर्यन्यः सर्वशस्यानि भावयेत् ॥
सुभिक्षं जायते लोके सन्धिं कुर्वन्ति पार्थिवाः ।
यज्ञोत्सवैः समाजश्च प्रजा नन्दन्ति भूरिशः ॥
ज्येष्ठाद्यमूर्ध्वदण्डञ्च पञ्चमं शुक्रमण्डलम् ।
उद्युक्तदण्डा राजानस्तत्र यान्ति पराभवम् ॥
जायन्ते बिबिधा रोगा दुर्भिक्षञ्चोपजायते ।
वैश्वानरपथे ह्येष मण्डलः स्यादवृष्टिमान् ॥

षट्कञ्चैव श्रविष्ठादि मण्डलं तीक्ष्णसञ्ज्ञितम् ॥
तत्रोत्तमा शस्यसम्पत् वर्षते वाऽतितीक्ष्णतः" ॥

वराहः--"अपरस्यां स्वात्याद्यं ज्येष्ठाद्यञ्चापि मण्डलं शुभदम् ।
पित्राद्यं पूर्वस्यां शेषानि यथोक्त-फलदानि ॥"

**अथोदयास्तफलम् —**

**पराशरः**-"यदा तु कार्त्तिके मासि कुरुतेऽस्तमनोदयौ ।
तदाऽह्नां नवतिं पूर्णां देवो भुवि न वर्षति" ॥

**वराहः**---"चतुर्द्दशीं पञ्चदशीं तथाष्टमीं तमिस्रपक्षस्य तिथिं भृगोस्सुतः ।
यदा व्रजेद्दर्शनमस्तमेति वा तदा मही वारिमयीव दृश्यते" ॥

अथास्य तुलागमफलम् —

**गर्गः**—"तावन्मेघाः प्रवर्षन्ति निर्घोषाश्च जलान्विताः ।
यावत्कन्यां परित्यज्य तुलां नो याति भार्गवः ॥

**भारते**--"तामापतन्तीङ् कुरुराजसेनां समुद्रवेलामिव दुर्न्निवाराम् ।
निवारयत्येकरथेन पार्थश्चित्राङ्गतः शुक्र इवाम्बुवृष्टिम्" ॥

हरिवंशे कंशवधनिमित्तं वैश्वानरपथे शुक्रो ह्यतिचारं चचार ह ॥

**वराहः** – "भृगुर्गुरुश्चापरपूर्वकाष्ठयोः परस्परं सप्तमराशिगौ यदा ।
तदा प्रजारुग्भयशोकपीडिता न वारिपश्यन्ति पुरन्दरोज्झितम् ॥
यदास्थिता जीवबुधारसूर्यजाः सितस्य सर्वेऽग्रपथानुवर्तिनः ।
नृनागविद्याधरसङ्गरास्तदा भवन्ति वाताश्च समुच्छ्रितान्तकाः ॥
न मित्रभावे सुहृदे व्यवस्थिताः क्रियासु सम्यङ् न रता द्विजातयः ।
नचाल्पमप्यम्बु ददाति वासवो भिनत्ति वज्रेण शिरांसि भूभृताम् ॥
शनैश्चरे म्लेच्छविडालकुञ्जरा गावो महिष्योऽसितधान्यशूकराः ।
पुलिन्दशूद्राश्च सदाक्षिणापथाः क्षयं व्रजन्त्यक्षिमरुद्गदोद्भवैः ॥
निहन्ति शुक्रः क्षितिजेऽग्रतः प्रजा हुताशशस्त्रक्षुद्वृष्टितस्करैः ।

चराचरं व्यक्तमथोत्तरापथं दिशोऽग्निविद्युद्रजसा च पीड्यते।
बृहस्पतौ हन्ति पुरःस्थिते सितः सितं समस्तं द्विजगोसुरालयम्।
दिशञ्च पूर्वाङ्कुरकासृजोम्बुदा गले गदा भूरि भवेच्च शारदम्॥
सौम्योस्तोदययोः पुरो भृगुसुतस्यावस्थितस्तोयकृद
रोगान् पित्तजकामलान् प्रकुरुते पुष्णाति च ग्रैष्मिकान्।

हन्यात्प्रव्रजिताऽग्निहोत्रिकभिषग्रङ्गोपजीव्यान् हयान्।
वैश्यान् गाः सह वाहनैर्नरपतीन् पीतानि पश्चाद्दिशम्" ॥

ऋषिपुत्रस्तु "अन्योन्यमस्तसंस्थौ तु यदा शुक्रबृहस्पती।
पूर्वसन्ध्यागतौ घोरौ जनयेतां महद्भयम्॥"

"शुक्रस्तुलाधरगतो न शुभेन युक्तः पापो भवेदधिपतिर्यदि तत्र चाब्दे।
क्षुत्क्षोभनष्टमनुजास्ति विभूषिताङ्गीं कापालिनीव वसुधा यदि वातिकष्टम्॥"

अत्रानुक्तविशेषशान्तिषु शुक्राद्भुतेषु शुक्रपूजापूर्विका फलगुरुलाघवमवगम्य प्रभूतकनकान्नगोमहीदानादिका शान्तिः कर्त्तव्या। फलपाकस्तु गार्ग्ये— "षण्मासिकस्त्वौशनसः" इति।

इति शुक्राद्भुतम्।

## अथ शनैश्चराद्भुतम्

अत्र शुभसूचकशनैश्चरलक्षणमाह पराशरः—

"पाण्डुः स्निग्धोऽमलः श्यामो विशुद्धार्चिः शनैश्चरः।
मार्गस्थश्चापि सव्यश्च नक्षत्राद्धित इष्यते॥"

मार्गस्थश्चापि सव्यश्चेति उत्तरमार्गस्थ इत्यर्थः। वराहः—

"वैदूर्यकान्तिरमलः शुभकृत्प्रजानां बाणातसीकुसुमवर्णनिभश्च शस्तः।
यञ्चापि वर्णमुपगच्छति तत्सवर्णान् सूर्यात्मजः क्षपयतीति मुनिप्रवादः॥"

वर्णमिति—वैदूर्यादिवर्णातिरिक्तवर्णमिति भावः। येषामयं स्वामी तेषा-

मेवङ्गिवधो विशेषेण हितकरः, विपरीतो विशेषणाहितकरः। शनैश्चरस्वामिकान्याह **यवनेश्वरः**---

"श्रानर्त्तवाहाहतवृद्धनीचपुंस्त्वोनसत्त्वालसदीक्षितानाम् ।
विद्धान्नदासाञ्जनसीसलौहकाष्ठायसानां प्रभुरर्क्कसुनुः ॥"

**पराशरः**--"सौराष्ट्रादिकान् देशान् पाश्चात्यदेशांस्तथा ।
विरूपान् कटुतिक्तांश्च रसायनविघातकान् ॥
पुलिन्दान तस्करान् सर्पान् महिषोष्ट्रखरानपि ।
काकगृध्रशृगालांश्च मृगाणाञ्च शनैश्चरः ॥
**गर्गः**--भवत्यर्क्कात्मजे रूक्षे श्यामपीतारुणप्रभे ।
तदात्मजानां भावानाँ क्षुच्छस्त्राग्निकृतं भयम ॥"

**विष्णुधर्मोत्तरे**--यद्देशद्रव्यपुरुषनक्षत्रेषु शौरिर्विचरति तत्पीडाकरो भवति ।

**वृद्धगर्गः**--"मांसशोणितसङ्काशो भवेद्यदि शनैश्चरः ।
युध्यमानास्तु शस्त्रेण वधं गच्छन्ति पार्थिवाः ॥"

**अथ नक्षत्रचारफलम् वटकणिकायाम्**--

"यस्मिनृक्षे विचरति शौरिर्बलवाञ्छुभैरयुतदृष्टः ।
तद्देशजन्यकर्मद्रव्यधनो भवति पापयुतः ॥"

**वराहः**--श्रवणानिलहस्तार्द्राभरणीभाग्योपगश्च सुतोऽर्कस्य ।
प्रचुरसलिलोपगूढाङ्करोति धात्रीं यदि स्निग्धः ॥"

**गर्गः**--"याम्यवायव्यसावित्र्यरौद्रश्रवणसंस्थितः ।
भवेत स्निग्धवपुः सौरो मार्गो चैवातिवर्षदः ॥"

**वराहः**--"अहिवरुणपुरन्दरदैवतेषु सुक्षेमकृन्न चातिजलम ।
क्षुच्छस्त्रावृष्टिकरो मूले प्रत्येकमपि वक्ष्ये ॥"

**विष्णुधर्मोत्तरे**--"सौम्यत्वाष्ट्रश्रविष्ठासु स्थिते सौरे महीक्षितः ।
सर्वे पीडां समृच्छन्ति जना यान्ति यमालयम् ॥

गर्गः--सर्पवारुणमाहेन्द्रनक्षत्रेषु च संस्थितः ।
स्निग्धः सौरः क्षेमकरो नातिवर्षं प्रमुञ्चति ॥"
क्षुच्छस्त्रावृष्टिदो मूलं सूर्यपुत्रः समाश्रितः ॥

वराहः—"रोहिणीशकटमर्कनन्दनश्चेद्भिनत्ति रुधिरोऽथवा शिखी ।
किम्वदामि यदनिष्टसागरे जगदशेषमुपयाति संक्षयम् ॥

गर्गः—रोहिणीशकटं भौमो भिनत्यर्कसुतोऽथ वा ।
केतुर्वा जगतो ब्रूयात्प्रलयं समुपस्थितम् ॥"

वराहः—"तुरगतुरगोपचारककविवैद्यामात्यहार्कजोऽश्विगतः ।
याम्ये नर्त्तकवादकगेयज्ञक्षुद्रनैकृतिकान् ॥
वहुलास्थे पीड्यन्ते सौरेऽग्न्युपजीविनश्चमूपाश्च ।
रोहिण्यां कोशलमद्रकाशिपाञ्चालशाकटिकाः ॥
मृगशिरे वत्सयाजकयजमानार्यजनमध्यदेशाश्च ।
रौद्रस्थे पारतरमठास्तैलिकरजकचौराश्च ॥
आदित्ये पाञ्चनदप्रत्यन्तसुराष्ट्रसिन्धुसौवीराः ।
पुष्ये घाण्टिकघौषिकयवनवणिक्कितवकुसुमानि ॥
सार्पे जलरुहसर्पाः पित्र्ये वाह्लीकचीनगान्धराः ।
शूलिकपारतवैश्याः कोष्ठागाराणि वणिजश्च ॥
भाग्ये रसविक्रयिणः पण्यस्त्रीकन्यकामहाराष्ट्राः ।
आर्यम्णे नृपगुडलवणभिक्षुकाम्बूनि तक्षशिला ॥
हस्ते नापतिचाक्रिकचौरभिषक्सूचिका द्विपग्राहाः ।
वन्धक्यः कौशलका मालाकाराश्च पीड्यन्ते ॥
चित्रास्थे प्रमदाजनलेखकचित्रज्ञचित्रभाण्डानि ।
स्वातौ मगधचरदूतसूतपोतप्लवनटाद्याः ॥
ऐन्द्राग्नाख्ये त्रैगर्त्तचीनकौलूतकुङ्कुमं लाक्षा ।
शस्यान्यथ माञ्जिष्ठं कौसुम्भञ्च क्षयं यान्ति ॥
मैत्रे कुलूततङ्गणखसकाश्मीराः समन्त्रिचक्रचराः ।
उपतापं यान्ति च घाण्टिका विभेदश्च मित्राणाम् ॥

ज्येष्ठासु नृपपुरोहितनृपसत्कृतशूरगणकुलश्रेण्यः ।
मूले च काशिकोशलपाञ्चालफलौषधीयोधाः ॥
आप्येऽङ्गवङ्गकोशलगिरिव्रजा मगधपुण्ड्रमिथिलाश्च ।
उपतापं यान्ति जना वसन्ति ये ताम्रलिप्त्याञ्च ॥
विश्वेश्वेरेऽर्कपुत्रश्चरन् दशार्णान्निहन्ति यवनांश्च ।
उज्जयिनीं शवरान् पारियात्रिकान् कुन्तिभोजांश्च ॥
श्रवणे राजाधिकृतान् विप्राग्र्यभिषक्पुरोहितकलिङ्गान् ।
वसुभे मगधेशक्षयो हानिश्च धनेष्वधिकृतानाम् ॥
साजे शतभिषजि भिषक्कविशौण्डिकपण्यनीतिवृत्तीनाम् ।
आहिर्बुध्न्ये नद्यो यानकराः स्त्रीहिरण्यञ्च ॥
रेवत्यां राजभृताः क्रौञ्चद्वीपाश्रिताः शरत्सस्यम् ।
शवराश्च निपीड्यन्ते यवनाश्च शनैश्चरे चरति ॥"

**अथास्योदयफलम्—**

वराहः—'रौद्रे हस्ते तथैवाप्ये आहिर्बुध्न्ये शनैश्चरः ।
यदोदय प्रपद्येत तदा नश्यन्ति पार्थिवाः ॥"

बृद्धगर्गः---"द्वयोर्नक्षत्रयोर्मध्ये यदोदेति शनैश्चरः ।
दिशानां मध्यदेशानां प्रत्यन्तानवमर्द्दति ॥

वराहः—एकर्क्षचरो वर्षाच्छुभप्रदो द्विभगतिश्च मध्यफलः ।
त्रिभगतिरधमफलकरो दिनकृत्तनयो विनिर्दिष्टः ॥"

गर्गः--एकर्क्षचरो वर्षाद्धि स्निग्धो मन्दगतिर्ग्रहः ।
क्षेमशस्यसुभिक्षानामाख्याता द्विगुणञ्चरन् ॥
प्रजाहितानां भावानां विदध्यान्मध्यमङ्गुणम् ।
त्रिनक्षत्रगतञ्चारं यदा सौरो निषेवते ॥
तदा भयान्युदीर्यन्ते धूमकेतुरुदेति वा ।
यदि चोद्ध्वं सनक्षत्रं सौरः प्रत्यवसर्पति ॥
समस्तानां भयम्विद्यात्तदा चित्रञ्च वर्षति ॥"

अथ मार्गफलम्---

बृद्धगर्गः--"कुर्यात्प्रजानां सौभिक्षमुत्तरं मार्गमास्थितः ।
दुर्भिक्षञ्चाग्निमूर्च्छाञ्च दक्षिणं मार्गमास्थितः ॥
चरन् कृत्तिकारोहिण्योरुत्तरेवाऽपि दारुणः ॥"

अथवाऽन्यावस्थानफलम्---

गर्गः—"यावन्मार्त्तण्डसूनुश्चरति धनुरथो मन्मथं मीनकन्ये ।
तावद्दुर्भिक्षपीडा भवति च मरकं क्षुत्पिपासातिघोरम् ॥
ऊर्वी निःशब्दसत्वा शिववरपटहैर्नर्त्यन्ते पिशाचाः ।
ग्रामारण्यादिदाहो नरशिररचिता घ्नन्ति कङ्कालमाला ॥

मीनधनुर्बुधगृहञ्च गभस्तिपुत्रः सौम्यैर्युतो भवति यद्यवलोकितो वा ।
दुर्भिक्षशस्त्राग्निभयादि तत्र प्रोक्तानि वीक्षितयुतानि भवन्ति पापैः ॥
सिंहे यदा चरति मीनयुगे युवत्यां वक्रङ्करोति रविजो धरिणीसुतो वा ।
पृथ्वी तदा भवति भूपतिविग्रहेण घोरा तुरङ्गखुरधूलिकृतान्धकारा ॥
वक्रङ्करोति रविजो धरणीसुतो वा मूलर्क्षमित्रलघुभेष्वथ चित्रभेषु ।
क्षत्रोत्पतङ्गपतनानि च सैनिकानां सर्वत्र लोकमरकं जलधौतदेशः ॥
कन्यायां मीनसिंहे वृषधनुषि यदा वक्रितौ भौममन्दौ
पृथ्व्यां ये सारभूपाः खुरपुटिदलिता विग्रहार्थं स्थितास्ते ।
दुर्भिक्षं शस्यनाशो ग्रहपतिभयदं पित्तरोगः प्रजानाम्
पीड्यन्ते चात्र गोऽश्वावृषमहिषगजाद्याश्च यान्निवृत्ति ॥
यदा च सौरिः सुरराजमन्त्रिणा समेत्य तिष्ठेत्क्वचिदृक्षमण्डले ।
तदा हि वङ्गाङ्गकलिङ्गकौशल त्रिभागशेषाङ्कुरुते वसुन्धराम् ॥
एकारशिगताः पापाः शनिभौमदिवाकराः ।
पृथ्वी धूमाकुला तत्र रुदन्ति बहवो जनाः ॥
अतीचारगते जीवे शनौ वक्रत्वमागते ।
तन्न पश्यामि राजेन्द्र यो धरान्धारयिष्यति ॥"

अथ वक्रफलं तत्र वराहसंहितायाम्—

प्राग्द्वारेषु चरन् रविपुत्रो नक्षत्रेषु करोति च वक्रम् ।
दुर्भिक्षङ्कुरुते भयमुग्रं मित्राणाञ्च विरोधमवृष्टिम् ॥"

**गर्गः** – "विलोमितगतिः सौरः प्राग्द्वारेषु यदा भवेत् ।
अनावृष्टिं भयं घोरं दुर्भिक्षं मित्रविग्रहः ॥"

**विष्णुधर्मोत्तरे**—"प्राग्द्वारेषु चरंस्तेषु सौरो वक्रमियाद्यदि ।
पृथिवीं पीडयेत्सर्वां पूर्वदेशं विशेषतः ॥"

अत्रानुक्तविशेषशान्तिषु शनैश्चराद्भुतेषु शनैश्चरपूजापूर्विका फलगुरुलाघवमवगम्य प्रभूतकनकान्नगोमहीदानादिका शान्तिः कर्त्तव्या । फलपाकस्तु वराहेणाब्देन शनैश्चर इति ।

इति शनैश्चराद्भुतम् ।

## अथ राहोरद्भुतम्

रविचन्द्रग्रहणरूपाणि राहोरद्भुतानि तत्र चन्द्रग्रहणे निमित्तान्याह—

**वृद्धगर्गः**—"अष्टम्यां परिवेषः स्यात्तैले जलगते यदा ।
प्रसारितो विजानीयाद्यतः खण्डस्ततस्तमः ॥
पञ्चग्रहाणां संयोगं दृष्ट्वा न ग्रहणम्वदेत् ।
यदि न स्याद्बुधस्तत्र बुधं दृष्ट्वा ग्रहम्वदेत् ॥"

एतद्द्वयं सम्वादि न भवतीत्युक्तं वराहेण--

"पञ्चग्रहसञ्जोगान्न किल ग्रहणस्य सम्भवो भवति ।
तैलञ्च जलेऽष्टम्यां न विचिन्त्यमिदं विपश्चिद्भिः ॥"

निमित्तान्तराण्यपि मुक्तकण्ठेनाह –

**पराशर** —ग्रहणनिमित्तानि उल्कापातसन्ध्यादिग्दाहभूमिकम्पाशनिनिर्वातस्तनयित्नुपांशुवृष्टिविषमवातशीतोष्णविकृतानीत्यादि सकलोत्पातानां ग्रहणफलकरेषु चान्वयः । अन्यदपि तेषामभावात् । किन्तु ग्रहणपूर्वं

तेषां वृत्तत्वेन ग्रहणफलकत्वं कल्पनीयम्। तत्प्रतिपदोक्तफलासम्भवेन शान्तिकरणम्बोद्धव्यम्।

**भीमपराक्रमे**—"राहुर्वाप्यथवा केतुर्यस्मिन्नृक्षे समाश्रितः।
तस्मिन्नेव यदा ऋक्षे पूर्णिमा रात्रिगामिनी ॥
तत्रैव संस्थितश्चन्द्रश्चन्द्रग्रासो भवेत्तदा।
अथ राहुश्च केतुर्वा यस्मिन्नृक्षे व्यवस्थितः॥
तत्रैव चेदमावास्या सम्भवेद्दिनगामिनी।
तस्मिन्नेव स्थितः सूर्यः सूर्यग्रासस्तदा ध्रुवम्॥
नीलप्रभे विषाणे तु तथा लोहितसप्रभे।
नीले सोमग्रहम्विद्याल्लोहितेऽर्कग्रहम्विदुः ॥"

विषाणे सोमस्यापि बोद्धव्यम्। असाधारण्येन आदित्यस्य परिवेषनं दीनमन्दरश्मिता सूर्यग्रहनिमित्तम् पराशरोक्तम्। सोमस्योदये शृङ्गयोः खण्डछिन्नव्यापिद्वैधीभावा वृद्धगर्गोक्ताः।

चन्द्रमसस्तावत्प्रस्पन्दनं शशव्यावृत्तिर्दैन्य पाण्डुत्वम्, सततपरिवेषमचिरोदितज्योत्स्नापरिभ्रंशः, क्षीणता दक्षिणशृङ्गतेव चास्येतरस्यानुतुङ्गतेत्युक्तं पराशरोक्तम्। तच्च एवमादि - निमिताद्यूर्ध्वमष्टम्या राहोरागमनादीन् ब्रूयादिति गर्गोक्तेर्ज्योतिःपद्धतिरनुसन्धेयम्।

**पराशरः**—शुक्लकृष्णाष्टमीं पञ्चदशोन्तरा ग्रहणनिमित्तानीन्दुभान्वोः प्रवली भवन्ति।

"पूर्णिमा प्रतिपत्सन्धौ राहुः सम्पूर्णमण्डलः।
ग्रसते चन्द्रमवर्कञ्च दर्शप्रतिपदन्तरे॥"

**शुभसूचकत्वमाह**—

**वृद्धगर्गः**—"अल्पावलेही शीघ्रश्च स्निग्धः कृष्णः प्रदक्षिणः।
राहुः प्रजाहितो ज्ञेयः क्षेमारोग्यसुभिक्षकृत्॥"

**वटकणिकायाम्**—

"पीतापसव्यमसुरः परिपेलवश्च शीघ्रङ्गतोल्पशकलं यदि वावलिह्य।
सच्छादनं बिबुधमन्त्रिनिरीक्षितो वा पापग्रहैरसहितः शुभकृन्नराणाम्" ॥

अपसव्यं-प्रदक्षिणम्, परिपेलवः--स्वच्छः। छादनं--ग्रासविशेषः। येषामयं स्वामी तेषामेवम्विधो हितकरः, विपरीतो विषेशेणाहितकरः। राहुस्वामिकान्याह-**वटकणिकायाम्**—

"राहोः कृतघ्नकुलपांशननीषशूद्ररुक्काणशूलिकनियुद्धविदुग्रकोपाः।
गोमायुमाषगिरिदुर्गनिवासिनश्च गर्त्तास्थहिंस्रपरदाररताः खलाश्च ॥"

**अथ ग्रहणफलम्।** तत्र जन्मराश्यादिग्रहणफलमाह **ज्योतिषे**—

"राशौ यत्र विधुन्तुदेन तरणिश्चन्द्रोऽथवा ग्रस्यते।
तस्माद्वेदहुताशरुद्ररसगाः कल्याणदा राशयः ॥
मध्यस्था रविरङ्कवाणदशगाः समान्यभोगप्रदाः।
युग्मे जन्मतुरङ्गमृत्युभवने नेष्टं फलं यच्छति ॥"

**भीमपराक्रमे**—

"धीधर्मनैधनधनव्ययखाम्बुजायाजन्मोपगे रविशशिग्रहणं नराणाम्।
नूनङ्करोति दुरितान्यपि दुस्तराणि सम्यग्ग्रहैस्तदपि शान्तिभिरस्तदोषम् ॥"

शान्तिभिः—स्नानदानादिभिः।

**श्रीपतिः**—जन्मर्क्षे जन्मराशौ वा मदाष्टमगते तथा।
व्ययेऽथ नवमे चैव न कुर्याद्राहुदर्शनम् ॥

**पराशरविष्णुधर्मोत्तरयोः**—

"यन्नक्षत्रगतो राहुः ग्रसते शशिभास्करौ।
तज्जातानां भवेत्पीडा यदि भं शान्तिवर्जितम् ॥"

अत्र नाडीनक्षत्राणां तापशान्तिः कर्त्तव्या। अथ **मासविशेषग्रासफलम्**—

**वृद्धगर्गः**—"स्वर्भानुरिन्दुं षष्ठे तु मासे यद्युपतिष्ठते।

तदा क्षेमं सुभिक्षञ्च योगक्षेमञ्च निर्दिशेत् ।।
यदा त्वष्टादशे मासि राहुः सोममुपक्रमेत् ।
रसक्षयो व्याधिभयं विनाशः फलपुष्पयोः ।।
चतुर्विंशे यदा मासे दैत्येन ग्रस्यते शशी ।
अनावृष्टिभयं घोरं दुर्भिक्षञ्च विनिर्दिशेत् ।।
यदा तु त्रिंशतितमे मासि संगृह्यते शशी ।
तदा क्षयः समुत्पद्येत् प्रचलेद्वाऽपि मेदिनी ।।
चन्द्रे पञ्चममासे तु मासे त्वेकादशे तथा ।
सप्तदशे तु सूर्यस्य ग्रहणं क्षुद्भयाय च" ।।

अत्र हि मासषट्कप्रवृत्तो तु ग्रहे शुभं, द्वित्रिचतुःपञ्चादिमासान्तरिते उत्तरोत्तरमनिष्टाधिक्यं प्रतीयते । अथोभयपक्षीयग्रहणफलम —

**वटकणिकायाम्** – समरागमाय राहुर्यदि पक्षान्ते पुनर्दृश्यः ।

**भार्गवीये**–"यदि च राहुरुभौ शशिभास्करौ ग्रसति पक्षमनन्तरगन्ततः ।
पुरुषशोणितकर्दमवाहिनी भवति भूर्न च वर्षति वासवः" ।।

एकस्मिन्मासे उभयपक्षीयग्रहणफलमेतत् । तथा चाह –

**काश्यपः**—"एकमासेऽर्कचन्द्राभ्यां ग्रहणं न प्रशस्यते ।
परस्परं बधङ्कुर्युः स्वबलक्षोभिता नृपाः" ।।

**वराहः** –""यद्येकस्मिन्मासे ग्रहणं रविचन्द्रयोस्तदा क्षितिपाः ।
स्वबलक्षोभैः सङ्क्षयमायान्त्यतिशस्त्रकोपञ्च ।।"

ग्रासभेदेन तु तत्फलम् —

**भार्गवीये**—"गृहित्वा भास्करं पूर्वं गृह्णाति शशिनं यदि ।
तत्र मासोत्तरं नाम आराध्यन्ते हि देवताः ।।"

**वराहः**—"अर्कग्रहात्तु तु शशिनो ग्रहणं यदि दृश्यते ततो विप्राः ।
नैकक्रतुफलभाजो भवन्ति मुदिताः प्रजाश्चैव ।।

सोमग्रहे निवृत्ते पक्षान्ते यदि भवेद्ग्रहोऽर्कस्य ।
तत्रामयः प्रजानां दम्पत्योर्वैरमन्योन्यम् ॥"

अत्रानुक्तविशेषशान्तिषु राहूत्पातेषु रविग्रहणे रविराहुपूजापूर्विका चन्द्रग्रहणे चन्द्रराहुपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिक-फलगुरु-लाघवमवगम्य कर्त्तव्येति ।

अथेन्द्रादिपर्वफलम् **वटकणिकायाम्**—

बृद्ध्या षाण्मासिकया पतयः स्युः पर्वण क्रमे सप्त ।
ब्रह्मेन्दुशक्रधनपतिवरुणहुताशान्तका राहोः ॥"

कल्पादितः षड्भिर्मासैः भागं परिकल्प्य ब्रह्मादि पर्व विज्ञेयम् । **पराशरः**—अतः परं सप्तविध पर्व चानुक्रमिष्यामः । ब्राह्मसौम्येन्द्रकौबेर-वारुणाग्नेययाम्यानि षण्मासान्तराणि सप्त भवन्ति । तत्र ब्राह्मं शस्यजननम् । तद्वत् सौम्यं क्षेमकरम् । ऐन्द्रं भूपालविरोधाक्षेमदुर्भिक्षकरम् । कौवेरमीश्वराणा-मैश्वर्यविनाशनं शस्यक्षेमकृच्च । वारुणं वृष्टिशस्यक्षेमारोग्यकरम् । आग्नेयमग्निशस्त्रक्षुदनावृष्टये याम्यञ्चेति ।

**वराहः**—"ब्राह्मे द्विजपशुबृद्धिः क्षेमारोग्याणि शस्यसम्पच्च ।
तद्वत्सौम्ये तस्मिन्पीडा विदुषामबृष्टिश्च ॥
ऐन्द्रे भूपविरोधः शारदशस्यक्षयो नच क्षेमम् ।
कौवेरेऽर्थपतीनामर्थविनाशं सुभिक्षञ्च ॥
वारुणमवनीशाशुभमन्येषां क्षेमशस्यवृद्धिकरम् ।
आग्नेयं मित्राख्यं शस्यारोग्याभयाम्बुकरम् ॥
याम्यङ्करोत्यवृष्टिं दुर्भिक्षं संक्षयञ्च शस्यानाम् ।
यदतःपरन्तदशुभं क्षुन्मारावृष्टिदं पर्व ॥"

अतःपरं—षण्मासाल्पाधिकपर्वस्थितौ । अथाग्नेयादिमण्डलफलम्—

**मयूरचित्रे**—"आग्नेयमण्डले सूर्यचन्द्रयोर्ग्रहणे सति ।
पित्तदाहोऽतिसारश्च शिरोरोगस्तथैव च ॥

ज्वरस्तापस्तथा कुष्ठं काशश्वासस्तथैव च।
कुक्षिरोगादयो रोगाः प्रभवन्तीह देहिनाम् ॥
भूमिदानं प्रकर्त्तव्यं नगरग्रामखेटकान्।
कार्यो दूर्वासमिद्धोमो जपश्चैव विशेषतः॥
घृतप्रोक्षणकङ्कुर्यान्नोपघातः कथञ्चन॥

अथ वायव्यमण्डलग्रहणफलम्—

मयूरचित्रे—"वायव्यमण्डले वायोः क्षोभो वृष्टिर्न जायते।
प्रसादामरवेश्मानि वृक्षाः शैलाः पतन्ति च॥
दुर्भिक्षमशुभं रोगो मन्दगर्भाः स्त्रियस्तथा।
भूमिदानं गवांदानं होमश्चैव जपस्तथा॥
होमाश्च नगरस्थाने ततः सम्पद्यते शुभम्" ॥

होमाः कोटिहोमाः। आहुतीनां बहुत्वाद्बहुवचनम्। अथाग्नेयादिमण्डलं भूमिकम्पाद्भुते निरुपयिष्यामः।

गर्गः—"वेलाहीने शस्त्रभयम् गर्भाणां श्रवणन्तथा।
अतिवेले फलानान्तु शस्यानां क्षयमादिशेत्।"

सन्ध्याग्रहण - फलन्तत्र वृद्धगर्गः-

सन्ध्याकाले रविश्चन्द्रो गृहीतः पीडयेत्प्रजाः।
गावो गर्भं विमुञ्चन्ति न वर्षति पुरन्दरः" ॥

सन्ध्या च दण्डद्वयम्। अथ ग्रहणनिवृत्ताद्भुतमाह—

वराहः-"परुषपवनोग्रगर्ज्जितविद्युत्परिवेषभूमिकम्पाद्याः।
सप्ताहान्तर्न शुभा ग्रहणनिवृत्तौ शुभा वृष्टिः॥"

चन्द्रेत्यनुवृत्तौ—मुक्ते सप्ताहान्तः पांशुनिपातोऽन्नसंक्षयङ्कुरुते।
नीहारो रोगभयं भूकम्पः प्रवरनृपमृत्युः॥
उल्का मन्त्रिविनाशं नानावर्णा घनाश्च भयमतुलम्।
स्तनितं गर्भविनाशं विद्युन्नृपदंष्ट्रिपरिपीडाम्॥

परिवेशो रुक्पीडा दिग्दाहो नृपभयञ्चाग्निभयञ्च ।
रूक्षो वायुः प्रवलश्चौरसमुत्थं भयन्द्धत्ते ।।
निर्घातः सुरचापं दण्डश्च क्षुद्भयं सपरचक्रम् ।
ग्रहयुद्धे नृपयुद्धं केतुश्च तदैव सन्दृष्टः ।।
अविकृतसलिलनिपातैः सप्ताहान्तः सुभिक्षमादेश्यम् ।
यच्चाशुभं ग्रहणजं तत्सर्वं नाशमुपयाति ।।"

**वृद्धगर्ग** — "सर्वोपद्रवनाशः स्यात्सम्यग्वृष्टिर्भवेद्यदि ।।"

**अथ ग्रस्तोदयास्तफलम्** —

**काश्यपः** – "उदितास्तमितौ ग्रस्तौ सर्वशस्यक्षयङ्करौ ।।"

**पराशरः**—"गृहीतो यद्यदागच्छेदस्तम्वा यदि गच्छति ।
अयोगक्षेममाचष्टेत्त्रीणि वर्षाण्यसंशयः ।।"

**वराहः**--"ग्रस्तावुदितास्तमितौ शारदधान्यावनीश्वरक्षयदौ" ।।

**वार्हस्पत्ये**--"गृहीतो राहुणा सार्द्धमुत्तिष्ठति यदा शशी ।
तदा धर्मपरिक्षीणां कलिमाविशति प्रजा ।।
अमुक्तो राहुणा सार्द्धमस्तङ्गच्छति चन्द्रमाः ।
तदा तमोमयस्तस्मान् मृत्युमाविशति प्रजा ।।"

**वृद्धगर्गः**-"आदित्यग्रस्तास्तमये ग्रहणं यदि दृश्यते ।
भयदुर्भिक्षरोगैश्च तदा सम्पीड्यते जगत् ।।"

आदित्यस्य विशेषो **वार्हस्पत्ये** —

"पराजितो राहुनिपीतमण्डलो विवर्णभावाधिगतो विनिष्प्रभः ।
यदास्तमायाति हि वै दिवाकरः तदाशु विद्यात्सुमहज्जनक्षयम् ।।"

**अथोदयास्तग्रहणफलम्**

**ऋषिपुत्रः**--"उदयेऽस्तमये वाऽपि यदि सूर्यग्रहो भवेत् ।
तदा नृपभयम्विद्यात्परचक्रस्य चागमम् ।।"

**भार्गवीये**--"उदये गृह्यमाणश्च हन्ति वेदविदो जनान् ।
वालांश्च जटिलान् हन्ति ये च काषायवाससः ।।"

अथ चिरग्राससर्वग्रासयोः फलम् --

**ऋषिपुत्रः**--"चिरं ग्रसति सोमार्क्कौ सर्वं वा ग्रसते यदि ।
हन्यात् स्फीतान् जनपदान् वरिष्ठांश्च नराधिपान् ।।
शस्यैर्न तत्र जीवन्ति नरा मूलफलोदकैः ।
भय दुर्भिक्षरोगश्च तदा जगति जायते ।।"

**काश्यपः**--"सर्वग्रस्तो यदा दृश्यो दुर्भिक्षं तत्र जायते ।"

**वराहः**--"सर्वग्रस्तौ दुर्भिक्षमरकदौ पापसन्दृष्टौ ।"

**भार्गवीये**--"दर्शयित्वा तु रूपाणि यदा राहुर्न दृश्यते ।
शस्त्रसम्पातदुर्भिक्षं भयं घोरं विनिर्दिशेत् ।।"

अथ मासफलम् **वटकणिकायाम्**--

अश्वयुजमाघकार्त्तिकभाद्रपदेष्वागतः सुभिक्षकरः ।
राहुरवशिष्टमासेष्वशुभकरो वृष्टिशस्यानाम् ।।"

**वराहः**--"वैशाखमासि ग्रहणे विनाशमायान्ति कार्पासतिलाः समुद्गाः ।
इक्ष्वाकुयौधेयशकाः कलिङ्गाः सोपद्रवाः किन्तु सुभिक्षमस्मिन् ।।"

**वृद्धगर्गः**--"क्षेमं भवति शस्यञ्च वैशाख्यां यदि गृह्यते ।
भयमेति तथेक्ष्वाकुमौर्या च सह मालवैः ।।
कर्पासतिलमुद्गानां शाखानां च महीरुहाम् ।
सुभिक्षं जायते तत्र उत्तराबलवत्तराः" ।।

**वराहः**--"ज्येष्ठे नरेन्द्रद्विजराजपत्न्यः
शस्यानि वृष्टिश्च महागणाश्च ।
प्रध्वंसमायान्ति नराश्च सौम्याः
सौख्यैः समेताश्च निषादसंज्ञाः" ।।

**वृद्धगर्गः**—"आषाढपौर्णमास्यान्तु गृहीते रजनीकरे।
किञ्चिद्वर्षति पर्जन्यः तथा शाल्वं निपीडयेत्" ॥

**पराशरः**—"शाल्वनिषादशस्यघ्नमाषाढे।

**वृद्धगर्गः**--"श्रावण्यां पौर्णमास्यान्तु गृहीते रजनीकरे।
योगक्षेमविनाशश्च शस्यनाशश्च जायते" ॥

**पराशरः**—'श्रावणे क्षेमसुभिक्षमन्यत्र चीनकाश्मीरपुलिन्दगान्धारेभ्यः।

**वराहः**--"काश्मीरान् सपुलिन्दचीनयवनान् हन्यात्कुरुक्षेत्रजान्।
गान्धारानपि मध्यदेशसहितान् दृष्टो ग्रहः श्रावणे।
काम्बोजैकशफांश्च शारदमपि त्यक्त्वा यथोक्तानिमान्
अन्यत्र प्रचुरान्नवृष्टिमनुजैर्धात्रीङ्करोत्याहृताम् ॥

'कलिङ्ग वङ्गान् मगधान् सुराष्ट्रान्
म्लेच्छान् सुवीरान् दरदाश्मकांश्च।
स्त्रीणाञ्च गर्भानसुरो निहन्ति
सुभिक्षकृद् भाद्रपदेष्वुपेतः ॥"

**वृद्धगर्गः** क्षेमं भवति शस्यञ्च गृहीतेऽश्वयुजि ग्रहे ॥"

**वराहः**--"कम्बोजचीनयवनान् सह शल्यकृद्भि-
र्वाह्लीकसिन्धुतटवासिजनांश्च हन्यात्।
आनर्त्तपौण्ड्रभिषजश्च तथा किरातान्
दृष्टोऽसुरोऽश्वयुजि भूरि सुभिक्षकृच्च ॥

कार्त्तिक्यामनलोपजीविमगधान् प्राच्याधिपान् कोशलान्
कल्माषानथ शूरसेनसहितान् काशींश्च सन्तापयेत्।
हन्याच्चाशु कलिङ्गदेशनृपतीन् सामात्यभृत्यन्तमो
दृष्टं क्षत्रियतापदं जनयति क्षेमं सुभिक्षान्वितम् ॥"

**काश्यपः**—"कार्त्तिके कोशला गावः प्रधानाश्चाहिताग्नयः।
बाध्यन्ते गणमुख्याश्च क्षत्रिया योगिनस्तथा ॥

सुवृष्टिर्जायते चापि शस्यसम्पत् तथोत्तमा ।
प्राच्यान्दिशि भयम्ब्रूयात् क्षेममन्यत्र निर्दिशेत्" ॥

वराह.--"काश्मीरकान् कोशलकाश्मपौण्ड्रान् नृपांश्च हन्यादपकारकांश्च । ये सोमपास्तांस्तु निहन्ति सौम्ये सुवृष्टिकृत् क्षेमसुभिक्षकृच्च ॥"

वृद्धगर्गः--"मार्गशीर्षगृहीते तु क्षेमं शस्यञ्च नश्यति ।
पौराश्च भयमृच्छन्ति मृगाश्च सह सोमपैः ॥
औशीनरान् काश्यपांश्च ब्राह्मणांश्च तमःस्पृशेत् ।
ग्रीष्मशस्यञ्च भवति शारदञ्चोपहन्यते ॥"

वराह--"पौषे द्विजक्षत्रजनोपरोधः ससैन्धवाख्याः कुकुरा विदेहाः ।
ध्वंसं व्रजन्त्यत्र च मन्दवृष्टिर्भयञ्च विद्यादसुभिक्षयुक्तम् ॥

माघे तु मातृपितृभक्तवसिष्ठगोत्रान्
स्वध्यायधर्मनिरतान् करिणस्तुरङ्गान् ।
वङ्गाङ्गकाशिमनुजांश्च दुनोति राहुः
वृष्टिञ्च कर्षकजनाभिमताङ्करोति ॥"

पराशरः--माघे शस्त्रकोपप्रावृड्वृद्धये वङ्गाङ्गानर्त्तकयवनकाशिदेशोत्सादनकृत्फाल्गुनेऽन्नसम्पच्च ।

वृद्धगर्गः--फाल्गुने कुरवश्चैव स्त्रियश्च सुभगास्तथा ।
दक्षिणात्याश्च राजानः पीड्यन्ते नात्र संशयः ॥"

पराशरः-"नटनर्त्तकधनुर्द्धरशस्यनाशाय चैत्रे ॥"

वराहः चैत्रे तु चित्रकरलेखकगानसक्तान्
रूपोपजीविनिगमज्ञहिरण्यपण्यान् ।
पौण्ड्राभ्रकैकयजनानथ वाह्लिकांश्च
तापःस्पृशत्यमरपोऽत्र तु चित्रवर्षी ॥

**वृद्धगर्ग**--पौर्णमास्यान्तु यत्सोमे फलमेतदुदाहृतम् ।
एतदेव भवेदर्केऽप्यमावास्याफलन्त्विति'' ॥

अथ **नक्षत्रफलम्**

**वटकणिकायाम्**--''कूर्मविभागेन वदेत्पीडां देशस्य वीक्ष्य नक्षत्रम् ॥
**पराशरः**-आश्विन्यामश्वानश्वजीविनश्च, **याम्ये**--कलिङ्गान् दक्षिणांश्चोपतापयति, **कृत्तिकासु**--कलिङ्गमत्स्याधिपतीन् , **रोहिण्याम्**--क्षुच्छस्त्रकोपैः प्रजाः, **मृगशिरसि**--शाल्वनिषादकैकेयान् , **रौद्रे**-शुकान् कुक्कुरान् पल्वलोपजीविनश्च, **पुनर्वसौ**--पाण्ड्यमरुकच्छकार्पासांश्च , पुष्ये--गोमत्तसिन्धुसौवीरकुरुपाञ्चालान् , **सार्पे**--काशिकलिङ्गसिंघलराजन्यान्, **पित्र्ये** -दण्डकारण्यवासिनः, पितृधान्यञ्च, **भाग्ये**--सुभगाः काम्बोजान् सुराष्ट्राधिपतिञ्च, **आर्यम्णे**--मागधाङ्गवङ्गयवनान् , **हस्ते**--दशार्णान् , **त्वाष्ट्रे**--मद्रान् कुरुक्षेत्रञ्च, **वायव्ये**--काश्मीरकौशीनरान् वाजिनश्च , **विशाखायां**--वृक्षाश्मकान्, **मैत्रे**--काशिकोशलान् , **ज्येष्ठायां**--ज्येष्ठजातीयान् दरदांश्च, **मूले**--क्षुद्रकशाल्वयौधेयान् , **आषाढे**--पञ्चनदान् सुवीराधिपतिञ्च , **वैश्वदेवे**--आर्जुनायनपौण्ड्रशिबिमालवान् , **श्रावणे**--शाल्वनानर्त्तकांश्च , **वासवे**--धनिनः शकान्त्यजांश्च, **वारुणे**--कैकेयान् जलचरांश्च , **आजे**-अङ्गवङ्गमगधकुकुरान् , **आहिर्बुध्न्ये**--अश्मकेक्षुक्षुद्रत्रिगर्त्तान् , **पौष्णे**--वैदेहानर्त्तकसिन्धुसौवीरान् ।

अथ राशिफलम् । तत्र वराहः—

''पाञ्चालकलिङ्गशूरसेनाः काम्बोजोड्रकिरात - शस्त्रवार्त्ताः ।
जीवन्ति च ये हुताशवृत्त्यास्ते पीडामुपयन्ति मेषसंस्थे ॥
गोपाः पशवोऽथ गोमिनो मनुजा ये च महत्त्वमागताः ।
ते पीडामुपयान्ति भास्करे ग्रस्ते शीतकरेऽथवा वृषे ॥
मिथुने प्रवराङ्गनानृपा नृपमान्या बलिनः कलाविदः ।
जमुनातटजाः सवाह्लिका मत्स्याः सुह्मजनैः समन्विताः ॥
आभीरान् सबरान् सपह्लवान् मत्स्यमल्लकुरुमद्र - शकानपि ।
पञ्चालान्विकलांश्च पीडयत्यन्नं चापि हिनस्ति कर्कटे ॥

सिंहे पुलिन्दगणमेकल सत्त्वयुक्तान्राजोपमान्नरपतीन्वनगोचरांश्च ।
षष्ठे तु शस्यकृविलेखकगेयशक्तान्हन्त्यश्मकत्रिपुरशालियुतांश्च देशान् ॥
तुलाधरेऽवन्त्यपरान्त्यसाधुन्वणिग्दशार्णान्मिरुकच्छपांश्च ।
अलिन्यथोदुम्वरमद्रचोलान् द्रुमान् सयौधेयविषायुधीयान् ॥
धन्विन्यमात्यवरवाजिविदेहमल्लान् पाञ्चालवैद्यवणिजो विषमायुधज्ञान् ।
हन्यान् मृगे तु झषमन्त्रिकुलानि नीचान् मन्त्रौषधिषु कुशलान् स्थविरायुधीयान् ।
कुम्भेऽन्तर्गिरिजान् सपश्चिमजनान्भारोद्वहान् तस्करान्
आभीरान्दरदाऽऽर्यसिंहपुरकान् हन्यात्तथा ववरान् ।
मीने सागरकूलसागरभवद्रव्याणि वन्याञ्जनान्
प्रज्ञान्वायुपजीविनश्च भफलं कूर्मोपदेशाद्वदेत् ॥"

**दिक्फलम्**--सौम्यपार्श्वगतो विप्रान् प्राच्यां वै क्षत्रजातयः ।
वैश्यान् दक्षिणतो राहुर्हन्ति पश्चिमतोऽपरान् ॥"

**वराहः**- पूर्वेण सलिलपूर्णाङ्करोति वसुधां समागतो दैत्यः ।
पश्चात्कर्षकसेवकवीजविनाशाय निर्दिष्टः ॥
सलिलचरदन्तिघाती याम्येनोद्गवामशुभः ।
म्लेच्छान्विदिक्स्थितो यायिनश्च हन्याद्धुताशसक्तांश्च ॥"

**काश्यपः**--"मध्ये तमसि सन्दृष्टे पीडयेन्मध्यदेशजान् ।
दृष्टे तमसि पर्यन्ते शस्यानामीतिजम्भयम् ॥"

अथ वर्णफलम्, **भार्गवीये** –

श्वेतो वर्णो ब्राह्मणानां क्षत्रियाणान्तु लोहितः ।
वैश्यानां पीतको वर्णः शूद्राणां कृष्ण उच्यते ॥
एतेषां येन वर्णेन राहुश्चरति भास्करे ।
या जातिर्यस्य वर्णस्य तान्तु सम्पीडयेद्ग्रहः ॥"

भास्कर इत्युपलक्षणम् । चन्द्रेऽप्येतदेव फलं बोद्धव्यम् ।

**वृद्धगर्गः**--"लोहितस्ताम्रवर्णो वा ग्रहश्चन्द्रं यदा ग्रसेत् ।

सुभिक्षक्षेमकृत्स स्यात्क्षत्रियांस्तु प्रपीडयेत् ॥
पीतकः कपिलो वाऽपि राहुर्वैश्यघ्न उच्यते ।
दाहज्वरः कुक्षिरोगो मरकश्चात्र जायते ॥
न च वर्षति पर्जन्यः शूद्रनीचांश्च पीडयेत् ।
श्वेतो वा पाण्डुवर्णो वा द्विजघ्नः पाण्डरोगकृत ॥"

भार्गवीये--"धूम्रवर्णोऽग्निवर्णो वा ग्रामेषु नगरेषु च ।
अग्न्युत्पातं गृहस्थानां सदा स कुरुते ग्रहः ॥"

वृद्धगर्गः--"धूम्रवर्णोऽग्निवर्णो वा मारीमग्निञ्च कोपयेत् ।"

भार्गवीये--"ताम्रो भवति शस्याय रूक्षो भवति मृत्यवे ।
नीललोहितपर्यन्तो राहुश्चरति भास्करे ॥
पीडयेदाहिताग्नींश्च सर्वदाग्न्युपजीविनः ।
यदा त्विन्द्रधनुर्वर्णो राहुश्चरति भास्करे ॥
अमात्यो हन्ति राजानं राजा चामात्यमात्मनः ॥"

पराशरः--बालार्कांशुकपिलो दुर्भिक्षाय ।

भार्गवीये--"श्यामो भवति वाताय धूम्रो भवति वृष्टये ।
हारिद्रः सर्वरोगाणां कोपं सृजति दारुणम् ॥"

स्वाभाविकवर्णानाह ब्रह्मगुप्तः--

"आद्यन्तयोः सधूम्रः कृष्णः खण्डग्रहेऽर्धतोऽत्यधिके ।
ग्रासे कृष्णाताम्रः सर्वग्रहणे कपिलवर्णः ॥"

अङ्गारकादीनां ग्रहणराशिस्थितिफलम्, तत्र वराहः--

"आवन्तिका जनपदाः कावेरीनर्मदातटाश्रयिणः ।
दुष्टाश्च मनुजपतयः पीड्यन्ते क्षितिसुते ग्रस्ते ॥

ग्रस्ते--ग्रहणराशिस्थे । इत्येवमर्थं सागरव्याख्यायाम् ।
वटकणिकायाम्--सहितो ग्रहेण येन च तद्देश्यमवाप्नुयात्पीडाम् ॥

वराहः - अन्तर्वेदी सरयू नेपालं पूर्वसागरं शोणम् ।
स्त्रीनृपयोधकुमारान् सह विद्वद्भिर्बुधो हन्ति ॥
ग्रहणोपगते जीवे विद्वो नृपमन्त्रिगजहयध्वंसः ।
सिन्धुतटवासिनामप्युदग्दिशं संश्रितानाञ्च ॥
भृगुतनये राहुगते दशार्णकाः कैकेयाः सयौधेयाः ।
आर्यावर्त्ताः शिवयः स्त्रीसचिवगणाश्च पीड्यन्ते ॥

बुधभार्गवयोगफलं सूर्यग्रहणवद्बोद्धव्यम्, चन्द्रग्रहे तद्योगासम्भवात् ।

सौरे मरुभवपुष्करसौराष्ट्रिकधातवोऽर्वुदान्त्यजनाः ।
गोमन्तपारियात्राश्रिताश्च नाशं व्रजन्त्याशु ॥"

अथ ग्रहाणां दृष्टिफलम् । तत्र वराहः—

"पश्यन् ग्रस्तौ सौम्यो घृतमधुतैलक्षयाय राज्ञाञ्च ॥"

यदा रविचन्द्रौ ग्रस्तौ भवतस्तदा ग्रहैर्दर्शनादेतानि फलानि भवन्तीति व्याख्याय पश्यन्निति यथासम्भवं सम्बन्धनीयम् । अत्र सौम्यश्चन्द्रं पश्यन्निति सम्बन्धः । बुधस्यादित्यदर्शनासम्भवादिति ।

"भौमः समरविमर्दं शिखिकोपं तस्करभयञ्च ॥
शुक्रः शस्यविमर्दं नानाक्लेशांश्च जनयति धरित्र्याम् ।
रविजः करोत्यवृष्टिं दुर्भिक्षं तस्करभयञ्च ॥
यदशुभमवलोकनैरिहोक्तं ग्रहजनितं ग्रहणे प्रमोक्षणे वा ।
सुरपतिगुरुणाऽवलोकिते तच्छममुपयाति जलैरिवाग्निरिद्धः ॥

अथ जन्मर्क्षादि - ग्रहणफलम् -

पराशरः—"ग्रहोपस्पृष्टनक्षत्रे ग्रहणन्तु यदा भवेत् ।
तदा पीडा विनिर्देश्या सैनिकानां नृपैस्सह" ॥

आचार्यः-"ग्रहणं रविचन्द्रमसोर्नाडीनक्षत्रवासरे यस्य ।
अब्दार्द्धाभ्यन्तरतो दोषो नाडीसमस्तस्य ॥"

**नाडीसम:**--नाडीवेधसमफलः। ज्योति:पराशरविष्णुधर्मोत्तरयो:-

'यन्नक्षत्रगतो राहुर्ग्रसते चन्द्रभास्करौ।
तज्जातानां भवेत्पीडा यदि भं शान्तिवर्जितम्।।"

अत्र जन्मनाडीनक्षत्रोपतापोक्तैव शान्ति: कर्त्तव्या।

**भार्गवीये**—"यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते।
राज्यभ्रंशं सुहृन्नाशं मरणञ्चात्र निर्दिशेत्।।"

राज्यनक्षत्रे—अभिषेकनक्षत्रे। अत्राभिषेकनक्षत्रोपतापोक्ता शान्तिः कर्त्तव्या। यदि च तदभिषेकनक्षत्रं जन्मनक्षत्रमपि भवति तदा नरपतेर्मरणफलम्। तत्राभिषेकनक्षत्रजन्मनक्षत्रोपतापोक्तशान्तिद्वयङ्कर्त्तव्यमिति **सागर:**।

**वराह:**- "ग्रहणे ग्रहपरिपीडितनाडीनक्षत्रदोषशमनाय।
सह शतपुष्पैः स्नायात्फलिनीदधिचन्दनोशीरैः।।"

**राजमार्त्तण्डे**—"ताम्रपात्रं तिलैः पूर्णं पूर्णम्वा गव्यसर्पिषा।
भास्करग्रहणे दद्यान्नाडीदोषोपशान्तये।। ।।
घृतकुम्भोपरिनिहित शङ्खं नवनीतपूरितं दद्यात्।
नाड्यादिदोषशान्त्यै तज्ज्ञैर्दोषकरग्रहणे ।।
गव्यपय:परिपूर्णं नाडीदोषोपशान्तये सन्तः।
दद्युः सोमग्रहणे शङ्खम्वा श्वेतशुक्तिम्वा।।"

इति सकलनाडीनक्षत्रोपजातग्रहणे सामान्यशान्तिकम्। विशेषतस्तु प्रत्येकनाडीग्रहणशान्तिकमग्रे नाडीनक्षत्रोपतापकरणे विस्तारादनुसन्धेयम्।

**प्रकृते च**--"त्रिमधुरपरिधौतं चन्द्रविम्वानुमानं रजतरचितचन्द्रं कांस्यपात्रान्तरस्थम्। सितकुमुदसहस्रैः पूजयेद्द्ववेत्ता हरति दुरितमस्मात्पर्वकाले शशाङ्कः।।"

त्रिमधुरं--मधुघृतदधीनि। चन्द्रमसोर्विम्वनुमानम् - स्फुटगणितागतग्रहणकालीनचन्द्रविम्वमानतुल्यपरिमाणम्। **तथा च**--

दधिमधुघृतपूर्णं ताम्रपात्रान्तरस्थं कनकरचितसूर्यं सूर्यबिम्बानुमानम् ।
प्रथमगदितसङ्ख्यैः पूजयेद्रक्तपुष्पैः हरति दुरितमेवं राहुणा ग्रस्तसूर्यः ॥"

एतच्च केनापि नक्षत्रेण ग्रहणं भवतु तत्रैवेषा शान्तिरवगन्तव्या, नक्षत्रविशेषाश्रवणात् । तेन पूर्वकथिताद्रष्टव्यराहुदर्शनकषष्ठाष्टमादिराश्यधिकरणकग्रहणे आप्तोक्त्या प्रामाण्यावगतौ ग्रहणादौ स्नानादि कृत्वा शान्तिकमवश्यङ्कर्त्तव्यमसम्भवेऽन्यद्वाराऽपि कारयितव्येति ।

मात्स्ये—"यस्य राशिं समासाद्य भवेद्ग्रहणसम्प्लवः ।
तस्य स्नानं प्रवक्ष्यामि मन्त्रौषधिविधानवत् ।
चन्द्रोपरागं सम्प्राप्य कृत्वा ब्राह्मणवाचनम् ।
सम्पूज्य चतुरो विप्रान् शुक्लमाल्यानुलेपनैः ॥
पूर्वमेवोपरागस्य समासाद्यौषधादिकम ।
स्थापयेच्चतुरः कुम्भान् ब्रह्मणः सागराणि च ॥
गजाश्वरथवल्मीक - सङ्गमाद्ध्रदगोकुलात् ।
राजद्वारप्रवेशाच्च मृदमानीय निःक्षिपेत् ॥
पञ्चगव्यञ्च कुम्भेषु शुद्धमुक्ताफलानि च ।
रोचना पद्मशङ्खौ च पञ्चभङ्गसमन्वितौ ॥"

पञ्चभङ्गाः-आम्रौदुम्बरवटपिप्पलप्लक्षाणां पल्लवा इति कल्पतरुः ।

"स्फटिकं चन्दनं श्वेतं तीर्थवारि ससर्षपम् ।
गजदन्तं सकुमुदं तथैवोशीरगुग्गुलम् ।
एतत्सर्वं विनिःक्षिप्य कुम्भेष्वावाहयेत्सुरान् ॥
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥
योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः ।
सहस्रनयनश्चन्द्रग्रहपीडां व्यपोहतु ।
मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः ॥
चन्द्रोपरागसम्भूतामग्निः पीडां व्यपोहतु ।
यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः ॥

यमश्चन्द्रोपरागोत्थां ग्रहपीडां व्यपोहतु ।
रक्षो गणाधिपः साक्षात्प्रलयानलसन्निभः ।
खड्‌गव्यग्रोऽतिभीमश्च रक्षः पीडां व्यपोहतु ।
गदापाशधरो देवः सदा मकरवाहनः ।।
स जलाधिपतिश्चन्द्रग्रहपीडां व्यपोहतु ।
प्राणरूपेण यो लोकान्‌ पाति कृष्णमृगप्रियः ।।
वायुश्चन्द्रोपरागोत्थां ग्रहपीडां व्यपोहतु ।
योऽसौ निधिपतिर्द्देवः खड्‌गशूलगदाधरः ।।
चन्द्रोपरागकलुषं धनदोऽत्र व्यपोहतु ।
योऽसाविन्दुयुतो देवः पिनाकी वृषकेतनः ।।
चन्द्रोपरागपापानि स नाशयतु शङ्करः ।
त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।।
ब्रह्मविष्णवर्कयुक्तानि तानि पापं हरन्तु मे ।
एवमामन्त्र्य तैः कुम्भैरभिषिक्तो गुणान्वितैः ।।
ऋग्यजुःसाममन्त्रैश्च शुक्लमाल्यानुलेपनैः ।
पूजयेद्‌वस्त्रगोदानैर्ब्राह्मणानिष्टदेवताः ।।
एतान्येव ततो मन्त्रान्‌ विलिख्य कनकान्वितान्‌ ।
वस्त्रपट्टेऽथ हैमे वा पञ्चरत्नसमन्वितान्‌ ।
यजमानस्य शिरसि निदध्युस्ते नरोत्तमाः ।।
ततोऽभिभावयेद्वेलामुपरागानुगामिनीम्‌ ।
प्राङ्‌मुखः पूजयित्वा तु तस्यां न्यस्यति देवताः ।।
चन्द्रग्रहे निवृत्ते तु कृतगोदानमङ्गलः ।।
कृतस्नानाय त पट्टं ब्राह्मणाय निवेदयेत्‌ ।
अनेन विधिना यस्तु ग्रहस्नानं समाचरेत्‌ ।।
न तस्य ग्रहपीडास्यान्न च बन्धुजनक्षयः ।
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम्‌ ।।
सूर्यग्रहे सूर्यनाम सदा मन्त्रेषु कीर्त्तयेत्‌ ।
अधिकाः पद्मनागाः स्युः कपिलाञ्च सुशोभनम्‌ ।।

य इदं शृणुयान्नित्य श्रावयेद्वाऽपि मानवः ।
सर्वपापविनिर्मुक्तः शक्रलोके महीयते ॥"

इति ग्रहणस्नानम् । **प्रसङ्गाद्ग्रहणकालकृत्यमपि** लिख्यते —

**जावालः**—"सङ्क्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः ।
चन्द्रसूर्योपरागे च यावद्दर्शनगोचरः ॥"

उपरागो यावद्दर्शनयोग्यस्तावदेव पुण्यत्वम्, न तु सङ्क्रान्तिवत्पुण्यकालपूर्वापरकालस्यापीति । यद्यपि नैमित्तिके निमित्तनिश्चय एव प्रयोजक इति ज्योतिःशास्त्रेण ज्ञाने सति अदर्शनेऽप्यधिकारस्तथापि यावद्दर्शनगोचर इति वचनाद्दर्शनस्य चाक्षुषज्ञानशक्तत्वान्न शास्त्रज्ञानमात्रं प्रयोजकम् । किन्तु ज्ञाने सति चाक्षुषज्ञानयोग्यत्वं प्रयोजकम्, योग्यता च प्रयत्नानपनेयप्रतिवन्धकयोग्यताशून्यत्वम् । तेन घनाद्यन्तरितस्यान्येन दृश्यमानस्य तदस्ति नतु दिनचन्द्रग्रहादेर्मेघाच्छन्नस्य वा तदस्ति । तदुक्तं **श्रीदत्तहरिनाथादिभिः** । योग्यता तदा ज्ञायते यदि कोपि पश्यति न च मेघादिभिश्छन्ने तदस्ति किन्तु गृहादिव्यवहिते तदस्तीति । एवञ्च यस्य राश्याद्यवच्छिन्नो द्रष्टुं न युज्यते तेनापि गृहादिस्थितेनाप्तद्वारा ग्रामे ज्ञाते निःशङ्कं ग्रहोऽनुष्ठेय एव । अन्यथा माघे शीतभीत्या गृहं प्रविश्य स्थितस्य ज्ञायमानेपि प्रकाशग्रामे आम्नातस्य पापं न स्यात् । न चेष्टापत्तिः, अविज्ञानानुपपत्तेः । अतएव वहुषु स्थानेष्वाचारोऽप्येतादृश इति ।

नच चाक्षुषज्ञानं प्रयोजकमिति वाच्यम्, गोचरपदवैयर्थ्यापत्तेः । नच चाक्षुषज्ञाने सति यावद्ग्रासस्तिष्ठति तावत्पुण्यकालमिति वाच्यम्, ग्रस्तास्तेऽतिप्रसङ्गात् । अतएव प्रकृतिसमानाधिकरणमेव ज्ञानं प्रयोजकमिति विवक्षितं भवति । कर्त्तुश्चाक्षुषज्ञानयोग्यत्वं ग्रासनिश्चयप्रयोजको न चाक्षुषज्ञानत्वम्, प्रमाणाभावात् । नैमित्ते निमित्तनिश्चयस्य प्रयोजकत्वे प्राप्ते चाक्षुषज्ञानयोग्यस्य प्रयोजकत्वादिति । एवमेव प्रतिहस्तकवचनादिति ।

**स्मृतिः** – "नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात ।
ग्रहकाले तु नाश्नीयात स्नात्वाऽश्नीयाच्च मुक्तयोः ॥
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।
स्नात्वा दृष्ट्वा परेह्न्यद्याद् ग्रस्तास्तमितयोस्तयोः ॥"

सूर्यग्रहात्पूर्वमह्नि न भोक्तव्यम । शशिग्रहात्पूर्वं सायं रात्रौ न भोक्तव्यम्, नतु दिवापीत्यर्थः । चन्द्रग्रहणे दिवाभोजनं यदभ्यनुज्ञातं तदर्द्धरात्रोपरि-ग्रहणे बोद्धव्यम । उदयानन्तरग्रहणे दिवापि भोजने दोष एव । तदुक्तं–

**ज्यौतिषे**—"अर्द्धरात्रे व्यतीते तु यदा चन्द्रग्रहो भवेत् ।
सायं तत्र न भुञ्जीत नतु प्रातरभोजनम् ॥"

प्रातरभोजनमेवं न किन्तु सायमभोजनमिति तदर्थः । तथा चार्द्धरात्रो-परि ग्रहणे दिवाभोजनस्यानिषेधात्तदभ्यन्तरग्रहणे दिवाभोजनं दोषावहमिति व्यवस्थितम । ग्रहकाले तु कामभोजने चान्द्रायणं प्रायश्चित्तम् ।

**तदुक्तम्**—"सूतके मृतके चैव ग्रस्तयोश्चन्द्रसूर्ययोः ।
छायायां कुञ्जरस्याथ भुक्त्वा चान्द्रायणञ्चरेत् ॥"

अत्र चान्द्रायणाशक्तौ तु गोदानङ्कर्त्तव्यम्, स्नात्वाऽश्नीयाच्चेति ।

"मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते ।
आकलय्याथ तत्कालं भुञ्जीत निर्विशंकितः ॥"

मुक्तदर्शनन्तु **काम्यम्** । "सूर्याचन्द्रमसोर्लोकानक्षयान् याति मानवः" इति वचनात् । अतएव मुक्तयोश्चन्द्रसूर्ययोरनुपदमस्तङ्गतयोरपि मुक्तिं प्रमाय भोक्तव्यमिति **समयप्रदीपादयः** ।

**ग्रस्तास्तेषु विशेषमाह** –

**गौतमः**—"सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन बालबृद्धातुरैर्विना ॥"

अत्राप्यशक्तम्प्रति मार्कण्डेयः –

"सायाह्ने ग्रहणञ्चेत्स्यादपराह्ने न भोजनम् ।
अपराह्ने न मध्याह्ने मध्याह्ने चेन्न सङ्गवे ।।
सङ्गवे ग्रहणञ्चेत्स्यान्न पूर्वाम्भोजनक्रियाम् ।।"

नचेदं भोजनं यदि विहितन्तदा नानधिकारप्रयोजकमिति कृतभोजनेनापि श्राद्धकरणप्रसङ्ग इति वाच्यम्, रागप्राप्तभोजने विधानासम्भवात। अप्राप्ते शास्त्रमर्थवदिति युक्तेः। किन्तु ग्रहणे भोजनं प्रत्यवायजनकम, निषिद्धत्वात। इदन्तु न तथा भवतीति प्रयोजनासम्भावात्। प्रत्यवायजनकत्वन्तु भवत्येव।

"ततः शरीरस्रोतोभ्यो मलनिस्यन्दविस्रवात् ।
अन्नादीनां प्रवेशाच्च स्यादशुद्धिर्विशेषतः ।।"

इति देवलवचने अपवादकाभावात्। नचास्य तदुपमर्दकत्वमस्तीति वाच्यम्, बाधसापेक्ष्यविध्यापत्तेः। तथाचास्याप्रत्यवायजनकत्वं परं न पापजनकत्वमतो धर्मचिकीर्षुणां ग्रहणपूर्वतदहोरात्रे न भोक्तव्यमेवं स्नानन्तत्कृतभोजनेनापि कार्यमिति तत्त्वम।

"अहोरात्रन्तु नाश्नीयाच्चन्द्रसूर्यग्रहो यदा ।
मुक्तं दृष्ट्वा तु भुञ्जीत स्नानङ्कृत्वा विशेषतः ।।
सूर्याचन्द्रमसोर्लोकान् सम्प्रयाति स मानवः ।
धौतपापो विशुद्धात्मा मोदते तत्र देववत् ।।"

इदञ्चाहोरात्रानशनं काम्यं, फलोक्तेः। तथा च सत्यां कामनायां मुक्तिदर्शनपर्यन्तं न भोक्तव्यमिति दृष्ट्वेति श्रवणात्। तद्विरहे तु स्नात्वाऽश्नीयाच्च मुक्तयोरिति वाक्यादेव व्यवस्था।

"सूतके मृतके चैव ग्रस्तयोश्चन्द्रसूर्ययोः ।
अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति ।।"

इति वाक्याद्ग्रहणेषु क्षतादावपि स्नानङ्कर्त्तव्यम । सूतकन्तु पुत्रोत्पत्ति-निमित्तं बोद्धव्यम् ।

**यम:** –"स्नानं दानं तप: श्राद्धमनन्तं राहुदर्शने ।
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ॥
गुणवत्सर्वकामीयं पितृणामुपतिष्ठते ॥"

इत्यादि वचनात स्नानादिकं काम्यम् ।

"सर्वस्वेनापि कर्त्तव्यं श्राद्धम्वै राहुदर्शने ।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदिति ॥"

इति वचनाच्छ्राद्धमावश्यकन्तेन नैमित्तिककाम्यमिति **श्रीदत्तादिमतम्** । काम्येनैव निमित्तनिर्वाह इति **रहस्यमिति** ।

**ब्रह्मपुराणे** –"नित्यं द्वयोरयनयोस्तथा विषवयोर्द्वयो: ।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपाते च पर्वसु ॥
अहोरात्रोषित: स्नानं दानं श्राद्धं तथा जपम् ।
य: करोति प्रसन्नात्मा तस्य स्यादक्षयं हि तत् ॥"

अत्र तस्मिन्नेवाऽह्नि उपवासो नतु पूर्वदिने, पूर्वबोधितोपवासेन **एष** मूलकत्वानुरोधात् । सोपवासो निशार्द्धेत्विवितवत्, कर्माङ्गभक्षणाभावस्याङ्गत्वाच्च ।

**देवीपुराणे** –"गोदावरी महापुण्या चन्द्रे राहुसमन्विते ।
सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने ॥
नर्मदातोयसंस्पर्शान कृतकृत्यो भवेन्नर: ।
सूर्ये च सैंहिकेयेन ग्रस्ते रेवाजलं नरा: ।
स्पृशन्ति चावगाहन्ति न ते प्रकृतिमानवा: ॥
स्पृष्ट्वा शतक्रतुफलं दृष्ट्वा गोदानजं फलम् ।
स्पृष्ट्वा गोमेधजं पुण्यं पीत्वा सौत्रामणिं लभेत् ॥
स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारत: ।"

इति राहोरद्भुतम् ।

अथ केत्वद्भुतम्

पराशरः—"स्निग्धः प्रसन्नो विमलः प्रदक्षिणगतिस्तथा ।
दृश्यते येषु देशेषु शिवन्तेषु विनिर्द्दिशेत् ।"

वराहः—ह्रस्वतनुः प्रसन्नः स्निग्धस्त्वृजुरचिरसंस्थितः शुक्ल ।
उदितो वाप्यभिवृष्टः सुभिक्षसौख्यावहः केतुः ॥"

येषामयं स्वामी तेषामेवं भूतो विशेषेण शुभकरः । विपरीतस्तु विपरीताय । केतुस्वामिकान्याह वराहः—

"गिरिदुर्गपह्लवश्वेतहूणचोलावगाणमरुचीनाः ।
प्रत्यन्तनिग्रहेच्छाव्यवसाय - पराक्रमोपेताः ॥
परदारविवादरताः पररन्ध्रकुतूहला मदोत्सिक्ताः ।
मूर्खाधार्मिकविजिगीषवश्च केतोः समाख्याताः ॥"

अथ वर्णफलम्—

गार्गीये—"सर्वेषामेव केतूनामष्टौ वर्णाः प्रकीर्त्तिताः ।
श्वेतो रक्तस्तथा पीतः कृष्णश्चेति चतुष्टयम् ॥
अर्चिषो धूमकेतूनामुदयेषूपलक्षयेत् ।
हरितो धूम्रवर्णश्च कपिलो वह्निसन्निभः ॥
हन्तिवर्णास्तथा सर्वान् धूमकेतुश्चराचरान् ॥"

भार्गवीये "विप्रान् श्वेताकृतिर्हन्ति क्षत्रियान् हन्ति लोहितः ।
वैश्यांस्तु पीतको हन्ति शूद्रान् हन्ति तथाऽसितः ॥
इतरान् पीडयेत्केतुरन्यवर्णो यदा भवेत् ।
षण्मासाभ्यन्तरे राज्ञो मरणञ्च तदाऽऽदिशेत् ॥
श्वेतः शस्त्राकुलङ्कुर्याल्लोहितस्त्वग्नितो भयम् ।
क्षुद्भयं पीतकः कुर्यात्कृष्णो रोगमथोल्वणम् ॥"

अथाकृतिफलम्—

भार्गवीये—"वृक्षाकारो विनाशाय सुखाय मुशलाकृतिः ।
दीर्घसूक्ष्मः सुखायैव ह्रस्वस्थूलो विनाशकृत् ॥"

अथ केतूदयपूर्वनिमित्तानि—

भार्गवीये—"उष्णम्वा यदि वा शीतं निर्घातः पांशुवृष्टयः ।
नीहारो भूमिकम्पश्च दिशान्दाहस्तथैव च ॥
उल्काया दर्शने केतो रूपम्विद्यादनागतम् ।
अशुभस्य मयोक्तन्ते शुभस्य च निबोध मे ॥
मृदुस्निग्धाः शुभा वाता निर्मलाः सकला दिशः ।
शान्ता मृगविहङ्गाश्च ग्रहाः स्फुटमरीचयः ॥"

"कुवेरवायुवरुणसूर्याग्नियमपुत्रकाः इति"
षड्विधाः केतवो वसन्तादिषड्तुषूदयन्ते । तदुक्तम्—

भार्गवीये—"चैत्रवैशाखयोर्मध्ये कौवेरांस्तु विनिर्दिशेत् ।
तेषाञ्चैव तु कर्माणि नक्षत्रैः शृणु यादृशैः ॥
उद्धृतै - यूपवेदीभिरुद्धृतैर्ध्वजतोरणैः ।
हविर्धूमाकुला तत्र दृश्यते च वसुन्धरा ॥
त्रिविष्टपं समापन्नस्तदा शक्रो महीपतिः ।
एवं प्रजाश्च मन्यन्ते कुवेरो गृहमागतः ॥
उदये कुवेरपुत्राणामेतद्भवति लक्षणम् ।
ज्येष्ठे चैव तथाषाढे वायुपुत्रान्विनिर्दिशेत् ॥
तेषाञ्चैव तु कर्माणि लक्षणैः शृणु यादृशै ।
वान्ति चैव महावाता महायुद्धं महाभयम् ॥
भज्यन्ते च महावृक्षास्तोरणाट्टालकानि च ॥
गृहाणि रमणीयानि क्षयं यान्ति जलानि च ।
उदये वायुपुत्राणामेतद्भवति लक्षणम् ॥
श्रावणप्रौष्ठपदयोर्वारुणांस्तु विनिर्दिशेत् ॥

तेषाञ्चैव तु कर्माणि लक्षणैः शृणु यादृशैः।
आवाहयन्ति ते मेघान्पूर्णाङ्कुर्युर्वसुन्धराम् ॥
उन्मार्गाः सरितो यान्ति जलवेगसमन्विताः।
धान्यं समर्घतां याति ईतयो न भवन्ति वै ॥
उदये वारुणानान्तु एतद्भवति लक्षणम् ।
आश्विने कार्त्तिके चैव सूर्यपुत्रान्विनिर्दिशेत् ॥
तेषाञ्चैव तु कर्माणि लक्षणैः शृणु यादृशैः।
तदा दहति शीतांशुः सर्वान्नानि दिवाकरः ॥
मृयन्ते च तदा गावः श्वापदाश्च विशेषतः।
विषञ्च प्रवलन्तत्र सर्वदंष्ट्रिषु दारुणम् ॥
उदये सूर्यपुत्राणामेतद्भवति लक्षणम् ।
मार्गशीर्षेऽथ पौषे च वह्निपुत्रान्विनिर्दिशेत् ॥
तेषाञ्चैव तु कर्माणि लक्षणैः शृणु यादृशैः।
अग्निर्दहति राष्ट्राणि हरितश्च वनानि च ॥
विद्रवन्ति ततो देशाः समन्ताद्भयपीडिताः।
कस्मिंश्चिज्जायते क्षेमं कस्मिंश्चिज्जायते भयम् ॥
उदये वह्निपुत्राणामेतद्भवति लक्षणम् ।
माघफाल्गुनयोर्मध्ये यमपुत्रान्विनिर्दिशेत् ॥
तेषाञ्चैव तु कर्माणि लक्षणैः शृणु यादृशैः।
शीघ्रं भवति दुर्भिक्षं हाहाभूतमचेतनम् ॥
दाहो ज्वरोऽतिसारश्च ग्लानिश्चैवाक्षिवेदना।
उदये यमपुत्राणामेतद्भवति लक्षणम् ॥"

**देवलेन** - "आग्नेयाद्या नवविधा अष्टोत्तरशत केतवः
कृत्तिकादिषु त्रिषु नक्षत्रेषु संस्थिता उदयन्ते।"

इत्याह तथाहि—

कृत्तिका रोहिणी सौम्य पृथिव्या मध्यमुच्यते।
केतवो ह्यत्र दृश्यन्ते आग्नेया दश पञ्च च ॥

आग्नेयेषु च दृष्टेषु लोकानां संक्षयो भवेत् ।
नित्योद्विग्नाश्च राजानो महामारी तदा भवेत् ॥
रौद्रं पुनर्वसुः पुष्यः पृथिव्याः पूर्वमुच्यते ।
केतवो ह्यत्र दृश्यन्ते रौद्रास्तेऽप्येकविंशतिः ॥
यदा रौद्राः प्रदृश्यन्ते दुर्भिक्षन्तु विनिर्दिशेत् ।
पीड्यन्ते च प्रजाः सर्वा मृत्युक्षुद्रोगपीडिताः ॥
आश्लेषापित्र्यभाग्यानि बिद्याद्दक्षिणपूर्वतः ।
केतवो ह्यत्र दृश्यन्ते उद्दालकिसुता दश ॥
केतवो ह्यत्र दृश्यन्ते शिखिनो मुनिसम्भवाः ।
सुभिक्षं क्षेममारोग्यं सुवृष्टिः शस्यसम्पदः ॥
आर्यम्णादीनि च त्रीणि विद्याद्दक्षिणभागतः ।
केतवो ह्यत्र दृश्यन्ते काश्यपेयाश्चतुर्दश ॥
अनावृष्टिभयं घोरं प्रजानामतिदारुणम् ।
स्वातीविशाखामैत्रञ्च भागो दक्षिणपश्चिमः ॥
केतवो ह्यत्र दृश्यन्ते चत्वारो मृत्युसम्भवाः ।
भयञ्च बिविधं बिद्याद्गर्गस्य वचनं यथा ॥
दुर्भिक्षं मरकं घोरमनावृष्टिस्तथैव च ।
उपद्रवश्च भूतानां तदा भवति दारुणः ॥
ज्येष्ठामूलमथाषाढा भाग एषान्तु पश्चिमः ।
केतवो ह्यत्र दृश्यन्ते त्रयस्ते सोमसम्भवाः ॥
सुभिक्षञ्च सुवृष्टिश्च मही यज्ञोत्सवाकुला ।
उत्तरा श्रवणाञ्चैव नक्षत्रं वसुदैवतम् ॥
केतवो ह्यत्र दृश्यन्ते माहेयाः पञ्चविंशतिः ।
माहेयेषु च दृश्यन्ते लोकानां संक्षयो ध्रुवम् ॥
तदा राजसहस्राणां मही पिबति शोणितम् ।
वारुणञ्चैव नक्षत्रं तथा भाद्रपदद्वयम् ॥
केतवो ह्यत्र दृष्टेषु वारुणास्त्रय एव तु ।
उर्मिकेतुः श्वेतकेतुर्धूमकेतुस्तृतीयकः ॥
उर्मिकेतुर्यदा दृश्यस्तदा ह्युदकजं भयम् ।
श्वेतकेतुर्यदा दृश्यः श्वेतास्थिङ्कुरुते महीम् ॥

तदा मानुषमांसानि भक्षयन्तीह मानुषाः ।
न माता मन्यते पुत्रं न पुत्रो मातरन्तथा ।
न पिता मन्यते पुत्रं पुत्रो वा पितरन्तथा ॥
न पिता पुत्रसम्भूतं स्नेहं सम्प्रतिपद्यते ।
न पतिं मन्यते नारी न बन्धुं बान्धवान्तथा ।
क्षुद्भयार्त्तं जगत्सर्वं चक्रवद्भ्रमते तदा ॥
धूमकेतुर्यदा दृश्यस्तस्य वक्ष्यामि लक्षणम् ।
स हन्ति त्वरया योधान्राजानं मन्त्रिणन्तथा ॥
स हन्ति शिखया देशान् सराष्ट्रवनकाननान ।
रेवत्यश्वयुजञ्चैव नक्षत्रं यमदैवतम् ॥
केतवो ह्यत्र दृश्यन्ते यमपुत्रास्त्रयोदश ।
यमपुत्रेषु दृष्टेषु लोकानां संक्षयो ध्रुवम् ॥
स्थावरा मानुषाः सर्वे पशवः पक्षिणस्तथा ।
चतुर्विधानां भूतानां संक्षयो जायते तदा ॥

**वराहः**—आग्नेयरुद्रजौद्दालकिकाश्यपमृत्युसोमजाश्चैव ।
क्षितितनयवरुणपुत्रा यमजाताः केतवः प्रोक्ताः ॥
आग्नेये नृपमरणं क्षुद्भयमतुलं वदन्ति रौद्रेषु ।
औद्दालकिजे शस्यक्षेमौ कश्यपसुते त्वनावृष्टिः ॥
क्षुच्छस्त्रमनारोग्यं यमतनये शस्यमुत्तम सौम्ये ।
माहेये नृपमरणं वरुणसुते क्षुद्भयं शस्त्रभयञ्च ।"

सहस्रसङ्ख्याश्च केतवो अग्न्यादिपुत्रा इति **गर्गादिभिरुक्तम्** । ते च **सागरे** विचारिता एव । अत्र न विविच्यन्ते, सहस्रस्यापि समफलत्व—लिखनात् ।

**वराहः**—"शतमेकाधिकमेके सहस्रमपरे वदन्ति केतूनाम् ।
बहुरूपमेकमेव प्राह मुनिर्नारदः केतुम् ॥
यद्येको यदि बहवः किमनेन फलन्तु सर्वथा वाच्यम् ।
उदयास्तमयैः स्थानैः स्पर्शैराधूमनैर्वर्णैः ॥"

तथा च निषिद्धवर्णदिक्कालाधिकरणकोदयास्तमनादिभिरेकस्यैव दुःफल-जनकत्वमिति बहुत्वस्याप्रयोजनकत्वादिति। अतएवाह—

पराशरः—"धूमकेतुर्यदा राज्ञो दृश्यते विषये क्वचित्।
सराष्ट्रः सपुरो राजा क्षिप्रमेव विनश्यति ॥
त्रीणि वर्षाणि चात्यर्थं क्षुद्भयं व्याधिभिर्भयम् ॥"

धूमकेतुलक्षणान्याह स एव -अथानियतदिक्कालरूपप्रमाणवर्णप्रमाणसंस्थानो धूमकेतुः पराभविष्यतान्देशानां राज्ञां जनपदानाञ्च वृक्षपुरपर्वतवेश्मध्वजपताकाशस्त्रवर्मायुधावरणरथनागोष्ट्रपुरुषशयनभाण्डेषु वा दृश्यते। अथ दिवि स्निग्धो विमलः प्रदक्षिणजटाकारशिखो गोगजागनागवीथीञ्चोत्तरेण व्रजन् सुभिक्षं क्षेमारोग्यञ्चावहति।

वराहेण—धूमकेतोरेव ध्रुवकेतुसंज्ञया फलमुक्तन्तथाहि—

"ध्रुवकेतुरनियतगतिप्रमाणवर्णाकृतिर्भवति विष्वक्।
दिव्यान्तरिक्षभौमो भवत्ययं स्निग्ध इष्टफलः ॥
सेनाङ्गेषु नृपाणां गृहतरुशैलेषु चापि देशानाम्।
गृहिणामुपस्करेषु विनाशिनान्दर्शनमुपैति ॥"

गार्गीये—'मृत्व्यात्मजः स एवेह धूमकेतुः क्षयावहः।
दिव्यान्तरिक्षे भूमौ च जले चासौ प्रदृश्यते ॥"

अपरेऽपि ये केतवः कथितास्ते दिव्यान्तरिक्षभौमा भवन्ति। अतएव शास्त्रे केतूनाङ्गणनमशक्यत्वान्नोक्तम्।

नारदः—"दिव्यान्तरिक्षभौमाख्य एकः केतुः प्रकीर्त्तितः।
शुभाशुभफलं लोके ददात्यस्तमनोदयैः ॥"

वराहः—दर्शनमस्तमयो वा न गणितविधिनाऽस्य शक्यते ज्ञातुम्।
दिव्यान्तरिक्षभौमास्त्रिविधाः स्युः केतवो यस्मात् ॥
अहुताशेऽनलरूपं यस्मिंस्तत्केतुरूपमेवोक्तम्।
खद्योतपिशाचालयमणिरत्नादीन् परित्यज्य ॥

ध्वजशस्त्रभवनतरुतुरगकुञ्जराद्येष्वथान्तरिक्षास्ते ।
दिव्या नक्षत्रस्था भौमाः स्तोन्यथा शिखिनः ॥

गर्गः अन्तरिक्षे यदा धूमो ज्वाला वा सम्प्रदृश्यते ।
आन्तरिक्षः स केतुः स्याद्दिव्यस्ताराश्रितः स्मृतः
पर्वताश्चैव वृक्षाश्च प्रासादनगराणि च ।
अकस्माद्यत्र धूम्यन्ते ध्वजवर्मायुधानि च ॥
रसवर्णविपर्यासः शब्दसंस्पर्शयोस्तथा ।
वृक्षौषधितृणगुल्मेषु विकृतिर्यत्र दृश्यते ॥
तत्र भौमम्विजानीयाद धूमकेतुमुपस्थितम् ।
आन्तरिक्षोऽथ भौमो वा यदि केतुः प्रदृश्यते ॥
तस्य देशस्य षण्मासाद्विनाशं परिनिर्द्दिशेत् ।
दिवा वा यदि वा रात्रौ दृश्येत ज्वलनो दिवि ॥
दिव्यः स केतुरुद्दिष्टस्तस्य देशस्य नाशकृत् ॥"

दिव्यादिफलेषु वटकणिकायाम्--

"दिव्या नक्षत्रस्थास्तीव्रफला मन्दफलकरा भौमाः ।
प्राणिध्वजादितुङ्गेष्वथान्तरिक्षा न चात्यशुभाः ॥"

अथोल्काभिहतशिखाफलम् । तत्र वराहः—

"उल्काभिताडितशिखः शिखी शिवः शिवतरोऽतिवृष्टो यः ।
अशुभः स एव चोलावगाणसितहूणचीनानाम् ॥

वृद्धगर्गः—यानि यान्युपहिंसन्ति नक्षत्राणि महाग्रहाः ।
तेषां तेषाञ्जनपदान्केतवो घ्नन्ति दर्शने ॥"

नक्षत्रन्तु जनपदानां नक्षत्राद्भुते कथयिष्यामः ।

पराशरः—"येषां नक्षत्रविषये रूक्षः सज्वाललोहितः ।
दृश्यते बहुमूर्त्तिश्च तेषां विद्यान्महद्भयम् ॥
अवर्षं शस्त्रकोपञ्च व्याधिदुर्भिक्षमेव च ।
कुर्यान्नृपतिपीडाञ्च स्वचक्रपरचक्रतः ॥

यत्रोत्तिष्ठति नक्षत्रे प्रवासञ्च गतः शिखी।
धूपयेद्वा स्पृशेद्वाऽपि हन्याद्देशांस्तदाश्रयान्॥"

**गार्गीये**—"अथ यत्रोदितः केतुः सोमं समुपधूमयेत्।
तदा सर्वं शोषमेति भौमं स्थावरजङ्गमम्॥
समुद्राश्च क्षयं यान्ति सर्वा नद्यः सरांसि च।
हैमवत्योऽपि शुष्यन्ति नद्योऽन्यासान्तु का कथा।
नखकेशवहो वायुः कपालशकलाकुलः।
नद्यश्चासृक्प्रवाहिन्यः सोमे समुपधूपिते॥
तदा प्रायः प्रदह्यन्ते ग्रामाश्च नगराणि च॥
रक्तवर्णाश्च पशवस्तथैव मृगपक्षिणः।
रक्तपुष्पफला वृक्षाः सर्वे चाग्न्युपजीविनः॥
हिरण्यं रजतं कांस्यं ताम्रं शीशकमेव च।
मणिरत्नस्तथा वज्रं सर्वमेवोपहन्यते॥
हिरण्यकाराः कर्मकारास्ताम्रकांस्यादिकारकाः।
प्राप्नुवन्ति भयं घोरं लोहिताङ्गे प्रधूपिते॥
अथ यत्रोदितः केतुर्बुधं समुपधूपयेत्।
तदा प्रजानां ये श्रेष्ठास्तेषां विद्यान्महद्भयम्॥
लोकाश्चात्र प्रणश्यन्ति वाणिक्पथोपजीविनः।
म्रियन्ते राजपुत्राश्च राजकन्यास्तथैव च॥
प्राज्ञा मेधाविनः शूराः कुमाराश्च विशेषतः।
गर्भाश्चात्र विनश्यन्ति बुधे समुपधूपिते॥
अथ यत्रोदितः केतुर्गुरुं समुपधूपयेत्।
तत्र विद्याद्विशेषेण ब्राह्मणानामुपद्रवम्॥
प्राज्ञा मेधाविनश्चैव तथैवाश्रमवासिनः।
वाचा ये चोपजीवन्ति श्रेष्ठा जनपदाश्च ये॥
मद्रकैकेयशाल्वाश्च नरा औशीनरास्तथा।
कोशलाः कुरुपञ्चाला मत्स्याश्च सह चेदिभिः॥

एतद्देशमनुष्याश्च राजानश्च तदाश्रयाः ।
सर्व एव विनश्यन्ति गुरौ समुपधूपिते ॥
यदा तु भार्गवं प्राप्य धूमकेतुः प्रधूपयेत् ।
तदाससैन्या बध्यन्ते यात्रोद्युक्ता नराधिपाः ॥
यात्रागताश्च ये सार्था वसुमन्तश्च ये जनाः ।
क्षत्रियो योद्धृमुख्याश्च ख्यातविद्याश्च ये जनाः ॥
महाविषाश्च ये नागा तथान्ये ये च जन्तवः ।
तथा चौरगणाः सर्वे भयमृच्छन्ति दारुणम् ॥
अथ यत्रोदितः केतुर्धूपयेच्च शनैश्चरम् ।
तदा म्लेच्छगणाः सर्वे भयमृच्छन्ति दारुणम् ॥
कृष्णवर्णाश्च पशवस्तथैव मृगपक्षिणः ।
कृष्णपुष्पफला वृक्षा वराहा महिषास्तथा ॥
गृध्राः केकाः सुपर्णाश्च कपोतोलूकचिल्लकाः ।
सव एते विनश्यन्ति मित्रपुत्रे प्रधूपिते ॥
यदा प्रधूपयेत्केतुः सप्तर्षीन् ध्रुवमेव च
तदा लोका विनश्यन्ति सलिलञ्चापि शुष्यति ॥"

भार्गवीये—"यस्मिन्देशे शिरस्तस्य स देशः पीड्यते ध्रुवम् ।
मध्ये तु मध्यपीडा स्याद्यतः पुच्छन्ततो जयः ॥"

विष्णुधर्मोत्तरे—यस्यान्दिशि केतोः शिखा दीप्ता भवति तन्देशं नृपतिमभियुञ्जीत ।

पराशरः—"यस्यान्दिशि समुत्तिष्ठेत्तान्दिशं नाभियोजयेत् ।
यतः शिखा यतो धूमस्ततो यायान्नराधिपः ॥
प्रतिलोमन्तु यः केतोर्जयार्थी याति पार्थिवः ।
सामात्यवाहनबलः स नाशमुपगच्छति ॥
यान्दिश धूपयेत्केतुर्न्न तत्राभिमुखं व्रजेत् ।
यस्यान्दिशि प्रतिष्ठेत हन्ति तां स विशेषतः ॥"

वराहः—"अपरस्यां चलकेतुः शिखया याम्याग्रयाङ्गुलोच्छ्रितया ।
गच्छेद्यथा यथोदक् तथा दैर्घ्यमायाति ॥

सप्तमुनीन् संस्पृश्य ध्रुवमभिजितमेव च प्रतिनिवृत्तः ।
नभसोऽर्द्धमात्रमित्वा याम्येनास्तं समुपयाति ॥
हन्यात्प्रयागकूलाद्यावदवन्तीं च पुष्करारण्यम् ।
उदगपिच देविकामपि भूयिष्ठ मध्यदेशाख्यम् ।
अन्यानपि च स देशान् क्वचित्क्वचिद्धन्ति रोगदुर्भिक्षैः ॥"

वराहः - "यावन्त्यहानि दृश्यो मासैस्तावद्भिरेव फलपाकः ।
मासैरब्दांश्च वदेत्प्रथमात् पक्षत्रयात्परतः, ॥

गर्गः— "यावन्त्यहनि दृश्येत तावन्मासान् फलम्वदेत ।
यावन्मासांस्तु दृश्येत समास्तावच्च वैकृतिम् ॥
त्रिपक्षात्परतश्चैव कर्म पच्यतेऽस्य शुभाशुभम् ।
सद्यः समुदिते केतौ फलं नेहादिशेद् बुधः ॥
त्रिपक्षात्परतश्चैव पापसंज्ञे विनिर्दिशेत् ।
शोभनेऽपि तथा केतौ फलन्दर्शनतो वदेत् ॥
यस्य यस्य विशेषेण पाककालो न दर्शितः" ॥

अत्रानुक्तविशेषशान्तिषु केत्वद्भुतेषु केतुग्रहपूजापूर्विका ग्रहधूपने धूपित-ग्रहपूजापूर्विका च प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवम्य कर्त्तव्या ।

अथ विशेषशान्तयस्तत्र नारदः-

"अकस्माद्दृश्यते केतुरुदयेऽस्तमये यदा ।
हन्त्यस्यान्तःपुरं राज्ञो ज्वरपित्तोद्भवो भवेत ॥
इन्द्रनीलमणेश्चैव हेमरत्नसमन्वितम् ।
केतुङ्कृत्वा प्रदातव्यो ब्राह्मणाय तपस्विने " ॥

मयूरचित्रेऽप्येतद्वचनमधिकृतम् । शान्तिस्तु—

"दधिमधुघृताक्तानां पुष्पाणामयुतन्ततः ।
जुहुयादिन्द्रनीलस्य केतुन्दद्याद् द्विजातये ॥

भूषितं हेमरत्नाद्यैस्ततः सम्पद्यते शुभम् ।
अथवा वैष्णवीशान्तिश्चरुकर्म तथैव च ॥
विष्णोरराट मन्त्रेण जुहुयाद् घृतसम्प्लुता ॥
अष्टोत्तरसहस्राणि द्वादशाथ प्रयत्नतः ॥
समिधोऽश्वत्थवृक्षस्य ब्राह्मणांस्तर्पयेत्ततः ।
पूर्वोक्तेन तु मन्त्रेण दद्याद्रसवृषानथ ॥
कुसुम्भस्याथवा होमः केतुं कृण्वेति मन्त्रतः ।
इन्द्रनीलं सुवर्णञ्च प्रदातव्यं द्विजन्मने" ॥

भार्गवीये -"उत्थानञ्चैव केतूनां विनाशायोपजायते ।
तस्मादाथर्वणैर्मन्त्रैः शमनङ्कारयेद् बुधः ॥
आराधिताः शमं यान्ति ते ह्युत्पाता न संशयः ।
होमैर्जपैश्च विविधैर्दानैश्च बहुरूपकैः ॥
तस्य यत्र शिरोदेशस्तत उत्थाय वा व्रजेत् ।
धनम्वा सर्वमुत्सृज्य मृत्योर्मुच्येत बन्धनात् ॥
दत्वा च पृथिवीं सर्वां राजा शान्तिं नियच्छति ॥

पराशरः—"यस्याभिषेकनक्षत्रं जन्मर्क्षं कर्मभन्तथा ।
देशर्क्षं पीडयेत्केतुः स शान्तिं परमो भवेत्" ॥

केतुपीडितेष्वभिषेकादिनक्षत्रेषु केतुपूजापूर्विका नाडीनक्षत्राद्भुतविहिता शान्तिः कर्त्तव्येति ।

## इति केत्वद्भुतम् ।

## अथागस्त्याद्भुतम्

ब्रह्मगुप्तः:-"राशिचतुष्केण यदा स्वर्क्षभयुतेन भवति तुल्योऽर्कः ।
उदयोऽगस्त्यस्य मुनेश्चक्राद्धाच्छोधितेऽस्तमयः" ॥

अस्य शुभसूचकत्वमाह वराहः--

"शातकुम्भसदृशं स्फटिकाभं तर्पयन्निव महीं: किरणाद्यैः।
दृश्यते यदि तदा प्रचुरार्था भूर्भवत्यभगयरोजनाढ्या॥
पराशरः—"सुस्निग्धवर्णः श्वेतश्च शातकुम्भसमद्युतिः।
मुनिः क्षेमसुभिक्षाय प्रजानामभयाय च"॥

अशुभसूचकत्वमाह पराशरः--
संवृत्तः पुररोधाय स्पन्दनो भयायेति। संवृत्तः स्वल्पः। वराहः--
रोगान् करोति कपिलः परुषस्त्ववृष्टिं धूम्रो गवामशुभकृत्स्फुरणो भयाय।
माञ्जिष्ठरागसदृशः क्षुधमाहवञ्च कुर्यादणुश्च पुररोधमगस्त्यनामा"॥

अथ वर्णफलमाह गर्गः --
"शङ्खकुन्देन्दुगोक्षीरमृणालरजतप्रभः।
दृश्यते यद्यगस्त्यः स्यात्सुभिक्षक्षेमकारकः"॥

पराशर --"नीलोऽतिवर्षाय। अग्निपरुषरूक्षो रोगाय। कपिलो वृष्टिनिग्रहाय।
धूमाभो गवाम्भयाय माञ्जिष्ठः क्षुच्छस्त्रभयायेति"।

गर्गः-- "वैश्वानचरार्चिप्रतिमो मांसशोणितकर्द्दमैः।
रणैर्भयैश्च विविधैः किञ्चिच्छेषायते प्रजाः॥

अथ सोत्पातागस्त्यफलम्, वराहसंहितायाम्--
"उल्कया विनिहतः शिखिना वा क्षुद्भयं मरकमेव विधत्ते"॥

पराशरः—"हन्यादुल्का यदाऽगस्त्यं केतुर्वाऽप्युपधूपयेत्।
दुर्भिक्षं जनमारश्च तदा जगति जायते"॥

इत्यगस्त्याद्भुतम।

## अथ सप्तर्ष्यद्भुतम

वराहः— "एकैकस्मिन्नृक्षे शतं शतन्ते चरन्ति वर्षाणाम्।
प्रागुत्तरतश्चैते सदोदयन्ते ससाध्वीकाः।

पूर्वे भागेस्थितो भगवान्मरीचिरपरे स्थितो वशिष्ठोऽस्मात् ॥
तस्मादङ्गिरास्ततोऽत्रि स्तस्यासन्नः पुलस्त्यश्च ।
पुलहः क्रतुरिति भगवान सन्नानुक्रमेण पूर्वाद्या ॥
तत्र वशिष्ठं मुनिवरमुपाश्रिताऽरुन्धती साध्वी" ॥

**विष्णुधर्मोत्तरे**--"उल्कापातहता रूक्षाः स्फुरणा रजसा हताः ।
ऋषयः सर्वलोकानां विनाशाय सभूभृताम्" ॥
**गर्गः**"—उल्कया केतुना वाऽपि धूमेन रजसाऽपि वा ।
हता विवर्णाः स्वल्पा वा किरणैः परिवर्जिताः ॥
स्वं स्वं वर्गन्तदा हन्युर्मुनयः सर्व एव ते ।
विपुलाः स्निग्धवर्णाश्च स्ववर्गपरिपोषकाः ॥"

एतेषां वर्गानाह **पराशरः** —

देवदानवगन्धर्वाः सिद्धपन्नगराक्षसाः ।
नागा विद्याधराः सर्वे मरीचेः परिकीर्त्तिताः ॥
यवनाः पारदाश्चैव काम्बोजा दरदाः शकाः ।
वशिष्ठस्य विनिर्द्दिष्टास्तापसा वनमाश्रिताः ॥
धीमन्तो ब्राह्मणा ये ज्ञानविज्ञानपारगाः ।
रूपलावण्यसंयुक्ता मुनेरङ्गिरसः स्मृताः ॥
कान्तारजास्तथाऽम्भोजान्यत्रेर्नद्यः ससागराः ।
पिशाचा दानवा दैत्या भुजङ्गा राक्षसास्तथा ॥
पुलस्त्यस्य विनिर्दिष्टाः पुष्पमूलफलञ्च यत् ।
तत्सर्वं पुलहस्योक्तं यज्ञा यज्ञकृतश्च ये ।
क्रतोरेव विनिर्दिष्टा वेदज्ञा ब्राह्मणास्तथा ॥

अत्र पुष्पफलमूलं पुलहस्य, यज्ञादयः क्रतोरिति सम्बन्धः । अगस्त्य-सप्तर्षिध्रुवाणामशुभलक्षणं **विष्णुधर्मोत्तरे** - अगस्त्यस्त्वरुणोरूक्षः श्यावो रेणूल्कयोपहतः शिखिशिखाध्वस्तो भयायेति । एवंविधाः सप्तर्षयश्च । एवम्विधे ध्रुवे त्रैलोक्यमपि पीडयेत् ।

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् –

"ध्रुवः प्रज्वलितो घोरमपसव्यं प्रवर्त्तते।"

अत्रानुक्तविशेषशान्तिष्वगस्त्याद्भुतेष्वगस्त्यादिपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या।

अत्रानुक्तफलपाकसमयो विशेषेणागस्त्याद्भुतानां सम्वत्सरेण फलपाको बोद्धव्यः। पराशरः—"अत्रोत्पातफलन्दिव्यं पूर्णे वर्षे विपच्यते"॥

इत्यगस्त्यसप्तर्षिध्रुवाद्भुतम्।

## अथ ग्रहयुद्धाद्भुतम्

गर्गः "छादनं रोधनञ्चैव रश्मिमर्दस्तथैव च।
अपसव्यं ग्रहाणाञ्च चतुर्द्धा युद्धमुच्यते"॥

छादनम्--सकलविम्बाच्छादनम्। रोधनं - किञ्चिदपवारणम्। एतदेवोल्लेखनं यदाह—

काश्यपः—"भेदोल्लेखांशुसंमर्द अपसव्यस्तथा परः।
ततो योगो भवेदेषामेकांशकसमापनात्॥"

असंयुक्तविम्बयोरन्योन्यरश्मिसंश्लेषोऽशुमर्दः। सन्निहितासंयुक्तरश्मिमण्डलयोः समदक्षिणोत्तरस्थितिरपसव्यम्। एवमेतान्यपसव्यादीनि प्रतिलोमानि सन्निधितारतम्याद् भवन्ति।

वराहः—"वियति चरतां ग्रहाणामुपर्युपर्यात्ममार्गसंस्थानाम्।
अतिदूराद्दृग्विषये समतामिव सम्प्रयातानाम्॥
आसन्नक्रमयोगाद्भेदोऽल्लेखांशुमर्द्दनापसव्यैः।
युद्धञ्चतुःप्रकारं पराशराद्यैर्मुनिभिरुक्तम्॥"

तद्यथा—भेदनमारोहणमुल्लेखनरश्मिसंसर्गश्चेति ग्रहयुद्धं चतुर्विधमाचक्षते। तेषां पूर्वः पूर्वो गरीयानिति। गुरुत्वमशुभफलभयात्।

भार्गवीये—"अपसव्ये विग्रहं ब्रूयात्संग्रामं रश्मिसङ्कुले ।
लेखनेऽमात्यपीडा स्याद्भेदने तु जनक्षयः ॥

वराहः—भेदे वृष्टिविनाशो भेदः सुहृदां महाकुलानाञ्च ।
उल्लेखे शस्त्रभयं मन्त्रिविरोधो प्रियान्नत्वम् ॥
अंशुविरोधे युद्धानि भूभृतां शस्त्ररुक्क्षुद्भयदाः ।
युद्धे चाप्यपसव्ये भवतियुद्धानि भूपानाम्" ॥

पराजितनक्षत्राण्याह गर्गः—

"अरश्मिर्ल्लोहितः श्यामः परुषः सूक्ष्मतारकः ।
अपसव्यः कृतो यश्च चक्रान्तः पतितस्तथा ॥
च्युतः स्थानाद्धतो यश्च प्रतिपूर्वस्तथैव च ।
निःप्रभो विकृतश्चाऽपि जवेनाभिहतश्च यः ॥
अप्राप्य दा निवर्त्तेत वेपनः कृष्ण एव च ।
लक्षणैः सप्तदशभिर्ग्रहं विद्यात्पराजितम्" ॥

विष्णुधर्मोत्तरे—"ग्रहारूढश्च्युतः स्थानात् स्फुरणो विजितो ग्रहः ।
वर्जितो यदि लिङ्गैस्तु कृष्णश्यामद्युतिस्तथा" ॥

लिङ्गैः—जयचिह्नैः । जयलक्षणमाह स एव -

"उदङ्मार्गगतिः स्निग्धो विमलो विमलप्रभः ।
बृहद्रूपोऽतिशुक्लश्च विजयी कथितो ग्रहः" ।

पराशरः—दशभिर्ल्लक्षणैर्ग्रहञ्जितम्विद्यात् । विवर्णः परुषः सूक्ष्मो याम्याशामार्गस्थो विरुद्धो विकृतो निःप्रभोऽथवाभिहतोऽप्राप्यनिवृत्तो वेपनश्चान्यथा विजयी । अन्यथा पूर्वोक्तलिङ्गशून्यः ।

वराहः— दक्षिणदिक्स्थः परुषो वेपथुरप्राप्य सन्निवृत्तोऽणुः ।
अधिरुढो विकृतो निष्प्रभो विवर्णश्च यः सजितः ॥
उक्तविपरीतलक्षणसम्पन्नो जययुतो विनिर्दिष्टः ॥

अथ रव्यादीनां पराजयफलम्, भार्गवीये ·

"कनकरजतताम्रकाश्च सर्वे समदममन्त्रधराश्च ये मनुष्याः।
शकयवनतुषारवाह्लिकाश्च क्षयमुपयान्ति दिवाकरस्य घाते" ॥

**भार्गवीये**—" अथ सोमहते विद्याद् ध्रुव राज्ञो विपर्ययम् ।
सहरन्ति च भूतानि भूमिपालाः पृथक् पृथक् ।
परस्परं विरुध्यन्ते क्षुद्भयञ्चापि जायते ।
अनावृष्टिभयं घोरं विद्यात् सोमविपर्यये" ॥

**पराशरः**- अङ्गारकबधे स्फीतजनपदग्रामनैगमजनधनधान्यनिचय-कोषेश्वरपुरमहाजनभूपलक्ष्म्यधिपौषधिबीजरत्नपुष्पफलशौण्डिकाग्न्युपजीविनो व्याधिभयशस्त्रेणोपतप्यन्ते । **भार्गवीये**—

"सागरनिलया घोरा क्षयमुपयान्ति नरा वणिक्प्रधानाः ।
भवति च राजा विजयी बुधेन प्रतपन्ति चात्र गर्भाः ॥
दैवज्ञास्तपस्वि सुनिश्चिता व्रतस्था आरूपा नृपतिगणाः पुरोहिताश्च ।
पीड्यन्ते भवति वधश्च नागराणां त्रैलोक्यं क्षयमुपयाति जीवघाते ॥
यो राजा प्रथितपराक्रमः पृथिव्यां वङ्गाङ्गा मगधविदर्भशूरसेनाः।
ये योधा जनभुवि चापि लब्धवर्णास्ते भृत्यैः क्षयमुपयान्ति शुक्रघाते ॥
महिषकपिबृपाः शकाः सपौण्ड्राः कृषिपशुपालरताश्च ये मनुष्याः ।
विविधामयसमाहिताश्च सर्वे क्षयमुपयान्ति शनैश्चरस्य घाते ॥
ये केचि नृपतिषु दाम्भिकाः पिशाचाः कार्याणां व्रतनियमेषु ये च पालाः ।
ये चान्ये शवरपुलिन्दचेदिगाधा बध्यन्ते यदि भवतीह राहुघातः ॥
सङ्क्रान्तं समनुभवन्ति पापसंघा बद्ध्यन्ते यदि भवति परस्परंहि घातः ।
संग्रामाः सरुधिरपांशुवर्षमिश्रा दुर्भिक्षं भवति तु केतुपीडनेन ।
ग्रहस्य ये यस्य हतस्य देशाः पीडां समृच्छन्ति त एव तस्य ।
सम्प्राप्तवीर्यस्य जये समृद्धा जयन्ति शस्यद्विचतुष्पदाद्याः" ॥

**वराहेण तु**--रवियोगे ग्रहाणामस्तमितत्वाच्चन्द्रयोगे समागमत्वाद्रविचन्द्र-मसोर्युद्धं नास्तीत्यर्थात्पराजयफलं नोक्तम् । **विष्णुचन्द्रोऽपि**--

"दिवाकरेणास्तमयः समागमः शीतरश्मिसहितानाम् ।
कुमुतादीनां युद्धं निगद्यतेऽतोऽन्ययुक्तानाम्"

यत्तु चन्द्रसूर्यविम्बे राहुदर्शनन्तद्ग्रहणम्, न तु युद्धम् । अतएव कुमुतादीनां वृद्धगर्गेणापि युद्धमेवाङ्गीकृतम् । तथाहि—

"ताराग्रहाणां पञ्चानां युद्धान्युक्तानि योगतः ।
जयः पराजयश्चैव गर्गेण परिकीर्त्तिताः ॥"

अथ भौमादीनां बुधादिभिः पराजयफलम्—

**वृद्धगर्गः**—"पीडयन्ते चानेकनृपा भौमे च बुधपीडिते ।
यायिनो यज्ञमुख्याश्च पीड्यन्ते चाग्निजीविनः ॥
वृहस्पतिहते भौमे पार्वतीयाश्च पार्थिवाः ।
शुक्रेण तु हते भौमे जयन्ते यायिनो नृपाः ॥
कोष्ठागाराणि म्लेच्छाश्च क्षत्रश्च भुवि पीड्यते ।
सौरेणाभिहते भौमे क्षत्रं वध्यति दस्युभिः ॥
प्रजाः सर्वाश्च सीदन्ति जयन्ते चापि नागराः ॥"

**वराहः**—"भौमेन हते शशिजे वृक्षसरित्तापसाश्मकनरेन्द्राः ।
उत्तरसंस्थाश्च क्रतुदीक्षिताश्च सन्तापमुपयान्ति ॥"

**वृद्धगर्गः**—"गुरुणा निहते सौम्ये जयमिच्छन्ति यायिनः ।
गर्भाः स्रवन्ति चाह्नाय कम्पते च वसुन्धरा ॥
म्लेच्छान् श्रेष्ठांश्च वहुश शूद्रांश्चैवानयः स्पृशेत् ।
बुधे च शुक्राभिहते शस्त्रमग्निश्च दीप्यति ॥
यायिनश्चापि पीडयन्ते शस्यं वृष्टिश्च हन्यते ।
नौजीविनो वरा योधा गर्भिण्योऽथ महाधनाः ॥
पीड्यन्ते सौरनिहते बुधे मन्दञ्च वर्षति ।
मध्यदेशनृपा मुख्या गावोऽथाश्रमिणो द्विजाः ॥
नागराश्चापि पीड्यन्ते लोहिताङ्गहते गुरौ ।
म्लेच्छान् शस्त्रभृतः शस्यं नागरांश्चापि पार्थिवान् ।
हन्याद्गुरुर्बुधहतो मध्यदेशन्तु कृत्स्नशः ॥

गुरौ शुक्रहते मद्रा: शाल्वा गान्धारकैकया: ।।
वङ्गा मत्स्याश्च कुरव: पीड्यन्ते चापि नागरा ।
ब्रह्मक्षत्रगणा गाव: शस्यमाश्रमवासिन: ।।
उत्तरादिक्प्रधानाश्च पीड्यन्ते च नरा भुवि ।
नागरांश्चापि वै हन्यात्सौरेणाभिहतो गुरु: ।
शूरसेनान् कलिङ्गांश्च शाल्वान् क्षत्रञ्च पीडयेत् ।
अङ्गारकहते शुक्रे सङ्ग्रामस्तुमुलात्मक: ।।
पापिनो बलमुख्याश्च पीड्यन्ते च बलाधिका: ।
क्षीरिण: पर्वतीयाश्च पीड्यन्ते चापि यायिन: ।।
नच वर्षति पर्यन्यो बुधेनाभिहते भृगौ ।
वृहस्पतिहते शुक्रे यायिनश्च विनश्यति ।।
ब्रह्मक्षत्रविरोधश्च देवश्चापि न वर्षति ।
पाञ्चालशूरसेनाश्च वङ्गमत्स्याश्च कोशला: ।।
पुण्ड्रा वङ्गा कलिङ्गाश्च मध्यदेशश्च पीड्यते ।
शनैश्चरहते शुक्रे गणमुख्याश्च यायिन: ।।
शस्त्रोपजीविनश्चैव क्षत्रञ्च परिपीड्यते ।
शूद्रान्धकान् पिच्छलकान् कोशलानपि तान् गणान् ।।
अङ्गारकहत: सौरो नागरांश्चापि पीडयेत् ।
पशव: पक्षिणो गावो नदीजा वणिजो नगा: ।।
नगराश्चापि पीड्यन्ते हते सौरे बुधेन तु ।
वृहस्पतिहत: सौरो बाह्लिकांश्चापि पीडयेत् ।
बहुस्त्रीकांश्च योधांश्चब्राह्मणां श्चानय: स्पृशेत् ।
तेजस्विन: खगान्सर्वान् नागारांश्चानय: स्पृशेत् ।।
धान्यार्घश्चापि बर्द्धेत सौरे शुक्रेण मर्द्दिते ।

अत्रानुक्तविशेषशान्तिषु ग्रहयुद्धोत्पातेषु योद्धृग्रहपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिशान्ति: कर्त्तव्या ।

इति ग्रहयुद्धादद्भुतम् ।

अथ ग्रहाणां नक्षत्रमार्गचाराद्भुतम्--

**गर्गः**—"भरण्यादौ मघान्ते च प्रथमे नवके गणे।
वर्त्तमानः शुभो ज्ञेय उत्तरे पथि वर्त्तते ॥"

उत्तरमार्गाश्रितः क्रूरग्रहोऽपि शुभफलदो भवतीत्यर्थः।

"क्रूरो निर्ऋतिपर्यन्ते भाग्यादौ नवके गणे।
वर्त्तमानश्च मध्यस्थो मध्यमे पथि वर्त्तते॥"

अत्र क्रूरग्रहोऽपि मध्यफलदो भवतीत्यर्थः।

"अथाश्वयुक्पर्यन्ताषाढादौ नवके गणे:
वर्त्तमानः सदा क्रूरो दक्षिणे पथि वर्त्तते ।"

दक्षिणमार्गाश्रितः शुभग्रहोऽपि क्रूरफलो भवतीत्यर्थः।

**काश्यपः**- नक्षत्राणाञ्च ये मार्गा दक्षिणोत्तरमध्यमाः।
त्रिधा विभज्य तानेव वीथीमार्गान् प्रकल्पयेत् ॥"

**पराशरः**- अथर्क्षमार्गास्त्रयो भवन्ति उत्तरमध्यदक्षिणाः। पुनरेकैकशस्त्रिधा नववीथय इत्याचक्षते। तत्रोत्तरोत्तरे नागगजैरावत्यः। मध्ये ऋषभगोजारद्गव्यः। दक्षिणे मृगाजाविकाः, तासां नामान्याग्नेययाम्यवायव्यानि बोद्धव्यानि। याम्यकृत्तिके नागवीथी। गजवीथी रोहिण्यादीनि त्रीणि। ततश्चत्वारि ऐरावती। आर्षभी पूर्वोत्तरफल्गुन्यौ। गोवीथी प्राक्प्रौष्ठपदादीनि चत्वारि। श्रवणधनिष्ठावारुणानि जारद्गवी। मृगवीथी त्वाष्ट्रहस्तम्। आजी मैत्रमैन्द्राग्न्यम्। आविकेन्द्रमूलमाषाढे वैश्वानरं कोपं यच्छतीति। तत्र च **वीथीचारफलम्** –

**विष्णुधर्मोत्तरे**—उदयास्तमयाभ्याम्वा चारेण च तथा ग्रहाः।
उत्तरासु शुभा ज्ञेया दक्षिणास्वशुभावहाः॥
सुप्रभा रश्मिवन्तश्च नागवीथ्यां यदा ग्रहाः।
न तदस्ति शुभं लोके यन्न पश्यन्ति मानवाः॥

विरश्मयो विवर्णाश्च वैश्वानरपथाश्रिताः ।
न तदस्त्यशुभन्नाम यत्तत्कुर्युर्जगत्त्रये ॥

**वृद्धगर्गः**—यदोदये प्रवासे वा चारे वा नागवीथिगाः ।
ग्रहास्तदातिवर्षं स्यात् सुभिक्षं क्षेममेव वा ॥
गजवीथीगताश्चापि क्षेमवर्षसुभिक्षदाः ।
ग्रैष्मिकाश्चात्र पीडयन्ते महाकुलकुलानि च ॥
ऐरावत्यां सुभिक्षं स्याद्वर्षमारोग्यमेव च ।
नृपाः सवैरा जायन्ते बलक्षोभा भवन्ति च ॥
गोवीथ्यार्षभवीथ्याश्च मध्यमं शस्यमुच्यते ।
बलिनो गोमिनो गावः पीड्यन्ते च महाशयाः ॥
जरद्गुवीथ्यां पीड्यन्ते वित्तज्ञानवयोधिकाः ।
धान्यार्घश्चापि जायन्ते रोगश्चापि महत्तरः ॥
अजवीथ्याञ्च पीड्यन्ते विप्रो ये च प्रज्ञाधिकाः ।
जायते चापि दुर्भिक्षं दुर्वृष्टिर्भयमेव च ॥
मृगवीथ्यां मृगव्याधाः पीड्यन्ते च तपस्विनः ।
क्षुद्भयञ्चापि बर्द्धेत विकाराश्चापि वातिकाः ॥
वैश्वानर्यां तथा वीथ्यां पित्तमग्निश्च जायते ।
मेघाश्च विलयं यान्ति धान्यादीनाञ्च संक्षयः ॥"

**काश्यपः**—"उदक्संस्थास्तारकाः सौम्यो मध्यस्था मध्यमस्तथा ।
दक्षिणे दक्षिणो मार्गो नक्षत्रेषु प्रकीर्त्तितः ॥"

अथोत्तरादिमार्गेषु **ग्रहाणामुदयास्तफलम्**—

**गर्गः**—"उदयास्तमयं कुर्यान्मध्यमं मार्गमाश्रित ।
मध्यमं वर्षशस्यञ्च योगक्षेमञ्च निर्दिशेत् ॥
उदयास्तमयङ्कुर्याद् दक्षिणं मार्गमास्थितः ।
धान्यसङ्ग्रहणङ्कुर्यात्केदारेषु तिलान्वपेत् ॥"

अत्रानुक्तविशेषशान्तिषु नक्षत्रमार्गचाराद्भुतेषु चारकर्तृकग्रहपूजा-

पूर्विका प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघव-मवगम्य कर्त्तव्या ।

इति ग्रहनक्षत्रमार्गचाराद्भुतम् ।

अथ दिग्देशनक्षत्रपीडाद्भुतम्

पराशरः—कृत्तिकादीनि नक्षत्राणि मध्यदेशेऽस्मिन् वर्षे भवन्त्यार्द्रादीनि त्रीण्युक्तवर्गक्रमेण पूर्वाद्यष्टासु दिक्षु दिङ्नक्षत्रैरुपसृष्टासु दिग्जनपादनान्तापो भवति ।

गर्गः—"कृत्तिकाद्यैस्त्रिनक्षत्रैर्वर्गैर्नवभिः क्षितिः ।
कल्पिता मध्यदेशादि ग्रामादिक्रमयोगतः ॥
कृत्तिकादिस्त्रिनक्षत्रप्रथिता मध्यमा यदा ।
सा पीडिता पीडयति मध्यदेशमशेषतः ॥
रौद्रादिः पीडिता पूर्वां सार्पादिः पूर्वदक्षिणाम् ।
आर्यम्णादिस्तथा याम्यां स्वात्यादिदक्षिणां पराम् ॥
ज्येष्ठादिः पश्चिमामाशां वैश्वादिरुत्तरोत्तराम् ।
वारुणादिस्तथा सौम्यां पूर्वादिः पूर्व उत्तराम् ॥"

विष्णुधर्मोत्तरे—"कृत्तिका रोहिणी सौम्यो मध्यदेशस्य निर्द्दिशेत् ।
पीडिते त्रितये तस्मिन् मध्यदेशः प्रपीडयते ॥
आर्द्रा पुनर्वसुः पुष्यः पूर्वस्यान्तु भवेद्दिशि ।
पीडिते त्रितये तस्मिन्पूर्वदेशः प्रपीडयते ॥
सार्पं पित्र्यं तथा भाग्यमनलस्य दिशि स्मृतम् ।
पीडिते त्रितये तस्मिन्नाग्नेयी पीड्यतेऽथ दिक् ॥
आर्यम्णमथ हस्तं च त्वाष्ट्रञ्च दिशि दक्षिणे ।
पीडिते त्रितये तस्मिन् दक्षिणादिक् प्रपीड्यते ॥
स्वातीविशाखा मैत्रञ्च नैरृत्यान्दिशि कीर्त्तितम् ।
पीडिते त्रितये तस्मिन्नैरृती दिक् प्रपीड्यते ॥
ज्येष्ठा मूलञ्च तोयञ्च वरुणस्य दिशि स्थितम् ।
पीडिते त्रितये तस्मिन्वारुणी दिक् प्रपीड्यते ॥

वायव्यायां विनिर्दिष्टा वैश्ववैष्णववासवाः ।
पीडिते त्रितये तस्मिन्वायव्या पीडयतेऽथ दिक् ॥
वारुणञ्चाजदैवत्यमाहिर्बुध्न्यन्तथोत्तरे ।
पीडिते त्रितये तस्मिन्नुत्तरादिक् प्रपीड्यते ॥
पौष्णञ्चैवाश्विनं याम्यं ऐशान्यान्दिशि कीर्त्तितम् ।
पीडिते त्रितये तस्मिन्नैशानीदिक् प्रपीड्यते ॥"

**काश्यपः**—"क्षितौ भारतवर्षेऽस्मिन्नवभागव्यवस्थया ।
बहुलाद्यास्त्रयो ऋक्षा मध्यदेशादिष स्थिताः ॥
क्रूरग्रहहतैस्तैस्तु पीड्यन्ते तन्निवासिनः ।
ते पीडामुपयास्यन्ति भिन्नैः क्रूरैश्च मर्द्दितैः ॥"

**विष्णुधर्मोत्तरे**—"स्वदेशपीडनं कुर्यान्नक्षत्रं पीडितङ्कथम् ।
सर्वमेतत्समाचक्ष्व सर्वधर्मभृताम्वर ॥"

**मार्कण्डेय उवाच**-"शनैश्चरार्कौ चारेण वक्रेणाङ्गारको ग्रहः ।
उपरागेण राहुस्तु केतुश्चाधपनोदयैः ॥
उदयास्त याभ्याञ्च जीवशुक्रशशाङ्कजाः ।
आच्छादनेन च शशी असम्यग्योगतस्तथा ॥
तथा च तस्मिन्नक्षत्रे दिव्यपार्थिवनाभसाः ।
दृश्यन्ते सुमहोत्पाताः स्वान्दिशन्तत्र पीडयेत् ॥"

**पराशरः**--दिङ्नक्षत्रेषूपसृष्टेषु दिग्जनपदानामुपतापो भवति । विशेषतस्तु शूरसेनमगधकलिङ्गावन्तिकानर्त्तकहारसिन्धुसौवीरमद्रपुलिन्दाधिपतीनाम् ।

**वराहः** -"वर्गैराग्नेयाद्यैः क्रूरग्रहपीडितैः क्रमेण नृपाः ।
पाञ्चालो मागध कालिङ्गश्च क्षयं याति ॥
आवर्त्तोऽथानर्त्तो मृत्युञ्चायाति सिन्धुसौवीराः ।
राजा च हारहौरो मद्रेशोऽन्यश्च कालिन्दः ॥"

यदोक्तविपरीतलक्षणं नक्षत्रं शुभग्रहान्वितम्भवति तदा दिग्देशाना-मभ्युदयमेव करोति। दिग्देशास्त्वत्र विस्तारभयान्न लिखिताः। **वराह-संहितायामन्वेष्टव्याः।**

**मार्कण्डेयपुराणे**—"कूर्मदेशास्तथार्क्षाणि देशेष्वेतेषु वै द्विज।
राशयश्च तथार्क्षेषु ग्रहराशिष्ववस्थिताः॥
तस्माद्ग्रहर्क्षपीडासु देशपीडाम्विनिर्दिशेत्।
यस्यर्क्षस्य पतिर्यो वै ग्रहस्तद्धानितो भयम्॥
तद्देशस्य मुनिश्रेष्ठ तथोत्कर्षे शुभागमः।
मेषादयस्तयोर्मध्ये मुखे द्वौ मिथुनादिकौ॥
प्राग्दक्षिणे तथा पादे कर्कसिंहौ व्यवस्थितौ।
सिंहः कन्या तुला चैव कुक्षौ राशित्रयं स्मृतम्॥
तुला च वृश्चिकश्चोभौ पादे दक्षिणपश्चिमे।
पृष्ठे च वृश्चिकश्चैव सह धन्वी व्यवस्थितः॥
वायव्ये चास्य वै पादे धनुर्ग्राहादिकन्त्रयम्।
कुम्भमीनौ तथैवास्य उत्तरङ्कुक्षिमास्थितौ॥
मीनमेषौ द्विजश्रेष्ठ पादे पूर्वोत्तरे स्थितौ।
तस्माद्विज्ञाय देशर्क्षं ग्रहपीडान्तथात्मनः।
कुर्वीत शान्तिं मेधावी लोकवादांश्च सत्तम॥
आकाशदेवतानाञ्च देशादीनाञ्च दौर्हृदात्॥
पृथिव्यां पतिता लोके लोकवादा इति स्मृताः।
तांस्तथैव बुधङ्कुर्यल्लोकवादान्न हापयेत्॥
तेषान्तु करणान् नृणामुक्तो दुष्टाऽगमक्षयः।
तस्माच्छान्तिपरः प्राज्ञो लोकवादरतस्तथा॥
लोकवादांश्च शान्तिञ्च ग्रहपीडासु कारयेत्।
गोदोहानुपवासांश्च सम्भवेद्यदि वल्लभ॥
जपो होमस्तथा दानं स्नानं क्रोधादिवर्ज्जनम्॥"

**दानञ्च प्रभूतकनकादीनाम्।**

"अक्रोधं सर्वभूतानां मैत्री कुर्याद्विपश्चितः ।
वर्जयेदसतीं वाचमभिवादांश्च वर्जयेत् ।
ग्रहपूजाञ्च कुर्वीत सर्वपीडासु मानवः ॥
एवं नश्यत्यशेषाणि घोराणि द्विजसत्तम ।
प्रयतानां मनुष्याणां ग्रहर्क्षोत्थान्यसंशयः ॥"

अथ कृत्तिकादीनामष्टमासैः फलपाकः । राशेस्तु सामान्योक्तः सम्वत्सरः । अत्रानुक्तशान्तिविशेषप्रतिपदोक्ता सामान्या कनकदानादिका बोद्धव्या ।

**अथ नाडीनक्षत्रपीडाकथनम् —**

**पराशरः:-** "ग्रहैरुपहतं यस्य नक्षत्रमिह दृश्यते ।
विद्यात्पराभवन्तस्य कर्म चास्य न सिद्ध्यति ॥"

**विष्णुधर्मोत्तरे—** "यस्मिन् भे जननं यस्य जन्मर्क्षन्तस्य तत्स्मृतम् ।
चतुर्थञ्जन्मनक्षत्रं यस्मात्तन्मानसं भवेत् ॥
दशमं जन्मनक्षत्रान्नक्षत्रङ्कर्म संज्ञितम् ।
सांघातिकं षोडशं स्यान्नक्षत्रं प्रसवर्क्षतः ॥
यन्मानसर्क्षादेकोनविंशं सामुदयं स्मृतम् ।
वैनाशिकन्तु नक्षत्रङ्कर्मर्क्षाद्यच्चतुर्दशम् ॥
यन्नक्षत्रस्तु पुरुषः सर्वः प्रोक्तो महीपतेः ।
राजा तु नवनक्षत्रान्नक्षत्रत्रितयं शृणु ॥
नित्यमभ्यधिकं षड्भ्यः पार्थिवस्य नृपोत्तम ।
देशाभिषेकनक्षत्रे जातिनक्षत्रमेव च ॥
जात्याश्रितानि वक्ष्यामि नक्षत्राणि तवानघ ।
पूर्वात्रयं तथाग्नेयं ब्राह्मणानां प्रकीर्त्तितम् ॥
उत्तरात्रयपुष्यञ्च क्षत्रियाणां प्रकीर्त्तितम् ।
आदित्यमाश्विनं हस्तं वैश्यानामभिजित्तथा ॥
सार्पं विशाखा याम्यञ्च वैष्णवञ्च नराधिप ।
प्रतिलोमभवानाञ्च सर्वेषां परिकीर्त्तितम् ॥"

**योगयात्रायाम्**—"जन्मर्क्षमाद्यं दशमञ्च कर्म सांघातिकं षोडशमृक्षमाद्यात्।
अष्टादशं स्यात्समुदायसंज्ञं वैनाशिकं विंशतिभिस्त्रिभिश्च॥
यत्पञ्चविंशं खलु मानसञ्च यदृक्ष एवं पुरुषस्तु सर्वः।
राज्ञो नवर्क्षाणि वदन्ति जातिदेशाभिषेकैः सहितानि तानि॥
कूर्मोपदेशादिह देशभानि राज्ञोऽभिषेकेऽहनि चाभिषेकम्॥"

**पराशरविष्णुधर्मोत्तरयोः**—

इह देहार्थहानिः स्याज्जन्मर्क्ष उपतापिते।
कर्मर्क्षे कर्मणां हानिः पीडा मनसि मानसे॥
मूर्त्तिद्रविणबन्धूनां हानिः सांघातिके हते।
सन्तप्ते सामुदयिके मित्रभृत्यार्थसंक्षयः॥
वैनाशिके विनाशः स्याद्देहद्रविणसम्पदाम्।

**पराशरः**—"एतेष्वनुपतप्तेषु मानवो नोपतप्यते।
ऋक्षेषु षट्सु युगपत् सन्तप्तेष्वाशु नश्यति॥"

**विष्णुधर्मोत्तरे**—"पीडिते चाभिषेकर्क्षे राज्यभ्रंशं विनिर्दिशेत्।
देशर्क्षे पीडिते पीडा देशस्य च पुरस्य च॥
पीडिते जातिनक्षत्रे राज्ञां व्याधिं विनिर्दिशेत्॥"

**वराहः**—"रोगास्त्यागमवित्तनाशकलहाः सम्पीडिते जन्मभे
सिद्धिङ्कर्म न याति कर्मणि हते भेदस्तु साङ्घातिके।
द्रव्यस्योपचितस्य सामुदयिके सम्पीडिते सङ्क्षयो
वैनाशे तु भवन्ति कार्यविपदश्चिन्तासुखं मानसे।
निरुपद्रवतो निरामयः सुभृङ्नष्टरिपुर्द्धनान्वितः।
षडुपद्रवतो विनश्यति त्रिभिरन्यैश्च सहावनीश्वरः॥
न भवति शरीरपीडा यस्य विना शान्तिभिः पीडा।
तस्य शरीरविपत्तिं पाकान्ते देवलः प्राह॥"

अत्र च शान्तिमाह **पराशरः**—तत्र जन्मर्क्षोपतापे श्वेतवृषभस्य शकृन्मूत्रं तद्वर्णायाश्च गोःपयः कुशांश्चोदकुम्भे निधायाभिषेचनङ्कुर्यात्।

**काश्यपः** — "श्वेतवृषशकृन्मूत्रैः श्वेतगोपयसा कुशैः ।
कलशैरभिषेक्तव्यो जन्मर्क्षं यस्य पीडितम् ॥

**विष्णुधर्मोत्तरे** "शकृन्मूत्रन्तु सङ्गृह्य श्वेतस्य वृषभस्य तु ।
श्वेतगोःपयसा सार्द्धं स्नातव्यं शुभवारिणा ॥

**वराहः** — "सितगोक्षीरवृषभशकृन्मूत्रैः सह पूर्णकलशाद्यैः ।
स्नानं जन्मनि दुष्टेष्वाचारवतां हरति पापम् ॥"

कर्मर्क्षपीडायां शान्तिमाह पराशरः—कर्मर्क्षे गौरसर्षपप्रियङ्गुशतपुष्पी-शतावरीभिरभिषिक्तो मधुघृतमिश्रमग्नौ हुत्वा दशरात्रं ब्रह्मचारी मांसक्षारक्षौद्रमद्यानि बर्जयेत् ।

**काश्यपः** — "शतावर्या प्रियङ्ग्वा च गौरवर्णैश्च सर्षपैः ।
शतपुष्प्याभिषेक्तव्यः कर्मर्क्षं यस्य पीडितम् ॥
जुहुयान्मधुसर्पिर्भ्यां घृतेन च जितेन्द्रियः ।
मधुमांसं न भुञ्जीत कट्वाम्ललवणानि च ॥

**विष्णुधर्मोत्तरे** — "सिद्धार्थकान् प्रियङ्गुश्च शतपुष्पीं शतावरीम् ।
स्नातव्यमम्भसि क्षिप्त्वा कर्मर्क्षे तूपपीडिते" ॥

**वराहः** — "कर्मणि मधुघृतहोमो दशाहमक्षारलवणमांसादः ।
दूर्वाप्रियङ्गु - सर्षपशतपुष्पशतावरीस्नानम् ॥

अत्र प्रत्येकं क्षारमधुमांसैः सम्बन्धो न क्षारगणश्च स्मृतिपरिभाषितः ।
**यथा**—

"तिलमुद्गादृते शस्यं शस्ये गोधूमकोद्रवौ ।
चीनकन्देवधान्यञ्च सर्वं शाकन्तथैव च ॥
स्विन्नन्धान्यं तथौषध्यं नूनं क्षारगणः स्मृतः" ॥

**साङ्घातिके च शान्तिमाह पराशरः**—साङ्घातिके प्रियङ्गुविश्वसित-सर्षपशरलपिप्पलशतावरीचन्दनोदकैरभिषेकङ्कुर्यात् । **विश्वं—शुण्ठी** ।

काश्यपः--"प्रियङ्ग्वा सर्षपैर्विश्वैः पिप्पलैः शरलैर्यवैः ।
चन्दनेन शतावर्य्या स्नानं साङ्घातिके हते "॥

विष्णुधर्मोत्तरे--"प्रियङ्गुविश्वसिद्धार्थयवाऽवत्थासुरप्रियाः ।
चन्दनोदकसंयुक्ताः स्नानं साङ्घातिके हते ॥"

वराहः--"साङ्घातिकेऽभितप्ते मांसमधुक्षौद्रमन्मथांस्त्यक्त्वा ।
स्नानं तत्र तु कुर्यात् प्रियङ्गुसिद्धार्थविल्वपत्रैः ॥
सम्मिश्रितेन पयसा युवाह्वया चन्दनद्वितयेन ।
दान्तो दूर्वां जुहुयाद्दानं दद्याद्यथाशक्ति" ॥

युवाह्वयम्-भटउर इति प्रसिद्धः। सामुदयिके शान्तिमाह पराशरः---

सामुदयिके सर्वगन्धसर्षपाक्षतैस्त्र्यहं स्नानः सुमनोभिरभिनवैश्च द्विजानर्चयेत् ।

काश्यपः--"अक्षतैः सर्षपैः पुष्पैः सर्वगन्धसमन्वितैः ।
त्रिरात्रस्नपनङ्कुर्यात्समुदाये हतेऽशुभेः" ॥

वराहः--"सामुदायिकेऽपि दद्यात्काञ्चनरजतान्युपद्रुते धिष्ण्ये ।
स्नानं सर्वसुगन्धैः कुर्यात्सिद्धार्थकैश्चैव "॥

गन्धशास्त्रे --"अगुरुं कुङ्कुमं चन्द्रं चन्दनञ्च चतुःसमम् ।
सर्वगन्धमिति प्राहुः समस्तसुरवल्लभम ॥

अन्यत्र परिभाषितः--

"चातुर्यातककर्पूर - काकोलागुरुकुङ्कुमम् ।
लवङ्गसहितञ्चैव सर्वगन्धम्विनिर्दिशेत् " ॥

"चातुर्यातकसंज्ञन्त्वगेलापत्रकेसरम्" । त्वक्-गुडत्वक् ।
एला-एलाञ्ची । पत्रं-पतरख । केसर-नागकेसर ।

वैनाशिके तु---शान्तिमाह पराशरः--

वैनाशिके-वृषशृङ्गोद्धृतमृद्वल्वोत्पलसोमशतपुष्प्यम्भसाऽभिषेकं कुर्यात् ।

**काश्यपः**—"वैनाशिके वृषशृङ्गमृत्तिकोत्पलसंयुता ।
शतपुष्प्यापूर्णकुम्भैः स्नानं दुरितनाशनम् ॥

**विष्णुधर्मोत्तरे**-"सर्वगन्धोदकैः स्नानं तथा सिद्धार्थकैः शुभैः ।
शतपुष्प्यासस्रोमैश्च स्नानं वैनाशिके हृते" ॥

**वराहः**--"वैनाशिकेऽन्नपानं वसुधाञ्च गुणान्वितां दद्यात् ॥

मानसपीडायामाह पराशरः--मानसेऽश्वत्थसितचन्दनशिरीषकुञ्जर-मदाम्भसा सुस्नातोऽम्बुभवैः कुसुमैः सोममभ्यर्चयेत् । व्रतञ्चान्द्रायण-माचरेदिति । कुसुमैः-कल्हारैः ।

**काश्यपः**—"शिरीषञ्चन्दनं शुक्लं वारणस्य मदोदकम् ।
नीरजैः फुल्लकल्हारै - रुदकुम्भाभिषेचनम् ॥
व्रतञ्चान्द्रायणङ् कुर्यान्मानसे तूपतापिते ॥"

**विष्णुधर्मोत्तरे** —"शिरीष - चन्दनाश्वत्थगजदानाम्बुभिर्न्नर ।
स्नातस्तु मानसे तप्ते तस्माद्दोषाद्विमुच्यते ॥

**वराहः** —"मानसतापे होमः सरोरुहैः पायसैर्द्विजा भोज्याः ।
गजमदशिरीषचन्दनबलातिबलवारिणा स्नानम ॥"

**अथाभिषेकदेशजातिनक्षत्रपीडायां शान्तिःविष्णुधर्मोत्तरे—**

"पीडिते चाभिषेकर्क्षे सर्वरत्नोदकैस्तथा ।
पीडिते देशनक्षत्रे मृद्भिः स्नानं विधीयते ॥
मृत्तिकाश्च प्रवक्ष्यामि गदतः श्रृणु मे नृप ।
नदीकूलद्वयान्नद्योः सङ्गमात्सरसस्तटात् ॥
अश्वस्थानाद्गजस्थानाद्गोस्थानाद्गिरिमस्तकात् ।
शक्रस्थानात् सवल्मीकाद्राजस्थानाद्वनालयात् ॥
गजश्रृङ्गोद्धृता चैव बृषश्रृङ्गोदधृता तथा ।
सर्ववीजोदकस्नातो जातिनक्षत्रपीडनात् ॥
मुच्यते किल्विषाद्राजन्नात्र कार्या बिचारणा ॥"

**देवीपुराणे सर्ववीजानि—**

यथा—"यवगोधूममुद्गाश्च शालिः षष्टिश्च आढकी ।
तिलमाषौ प्रसाती च श्यामाकाशररालकाः ॥"

आढकी—राहरि, प्रसाती--ओड़री, श्यामाकः साम, शरः--आप्त-धान्यम्, रालकः--कङ्गुः इति। विष्णुधर्मोत्तरे स्नानमन्त्रः--

'इदमापः प्रवहतः स्नानमन्त्रः प्रकीर्त्तितः ॥" इति ।

"स्नातस्तथैवं नृपचन्द्रपश्चात् स्नानं प्रकुर्याद् ग्रहसम्प्रविष्टम् ।
पीडाकरस्याथ ततस्तु कुर्य्यान्नक्षत्रयोगाभिहितं यथावत् ॥
पीडाकरस्याथ ततस्तु कुर्यात्पूजां ग्रहेन्द्रस्य नरेन्द्रचन्द्रः ।
सम्पूजयेच्चाप्यथ चन्द्रयुक्तं ततः स दोषान् सकलान् जहाति ॥"

अथैकदैव षडर्क्षपीडायां शान्तिकमाह--

काश्यपः—"उदुम्वरफलैर्विल्वैः शतावर्या प्रियङ्गुभिः ।
अथर्वशिरसा जप्तैस्तोयैः सर्वाभिषेचनम् ॥"

वराहः--सर्वेषां पीडायां दिनमेकमुपोषितोऽनलं जुहुयात् ।
सावित्र्या क्षीरितरोः समिद्भिरमरद्विजानुरतः ॥

पराशरः—"यथा नक्षत्रपूजां वल्युपहारमग्निहोमञ्च कुर्य्यात् ।

अथ दिनरात्र्योस्तारकदर्शनादर्शनफलम्—

वराहः—व्यभ्रे निश्युडुनाशो दर्शनमपि वाह्नि दोषकरम् ।

मत्स्यपुराणे—"रात्रावनभ्रगगने भयं स्यादृक्षवर्ज्जिते ।
दिवा सतारे गगने तथैव भयमादिशेत् ॥"

गार्गीये—यस्मिन्देशे यदा तारा दृश्यन्ते दिवि कर्हिचित् ।
तस्य देशस्य यो राजा सराष्ट्रः स विनश्यति ॥"

वराहः—त्रिदशगुरौ नृपतिवधो दिवा दृष्टे ।

पराशरः—"कदाचिद् दृश्यते यत्र दिवा देवपुरोहितः ।
राजा वा म्रियते तत्र स वा देशो विनश्यति ॥"

जन्मनक्षत्रादिस्थे गुरौ दिवादृष्टे नृपवधोऽन्यत्र तु देशभ्रंश इति ।

**विष्णुधर्मोत्तरज्योतिष्पराशरयोः—**

"अहः सर्वं यदा शुक्रो दृश्यते तु महाग्रहः।
तदा चागन्तुभिर्ग्रामा बध्यन्ते नगराणि च॥"

अहः सर्वमिति शौक्रं सकलसावनमित्यर्थः। सकलसावनदिने भार्गवदर्शनाभावात्।

**वराहः—**"दृष्टो मस्तगतोऽर्को भयकृत्क्षुद्रोगकृत्समस्तगतः।
अर्द्धदिवसे तु सेन्दुर्नृपपुरबलभेदकृच्छुक्रः॥"

मस्तगत इति पञ्चमूहूर्त्तोनप्रहरत्रयं यावत्। तत्रैव मस्तकस्थायित्वादर्कस्य, समस्तमहरिति प्रागेव व्याख्यातन्तदयुक्तम्। यतो ह्यनस्तमितेऽपि सूर्ये पुष्टो भार्गवः कदाचिद्दृश्यत एव।

**अत्र शान्तिर्मत्स्यपुराणविष्णुधर्मोत्तरयोः—**

"दिवाऽत्रोपोषितस्तत्र पुरोधाः सुसमाहितः।
समिद्भिः क्षीरिवृक्षाणां सर्षपैश्च घृतेन च॥
अग्निलिङ्गैश्च जुहुयाद्वर्गौ श्वेताम्वरः शुचिः।
सुवर्णं गाञ्च वस्त्राणि द्विजेभ्यो देयमेव च॥"

नाडीनक्षत्रवैकृते दिवातारादिदर्शने च प्रतिपदोक्तशान्त्यशक्तौ तदुक्तशान्तिद्रव्यादिसाधनीभूतद्रव्यसमभूम्यादिकनकान्नगोदानादि शान्तिः कर्त्तव्येति।

इति दिग्देशनक्षत्रपीडाद्भुतम्।

## अथ राश्यद्भुतम्

**राजमार्त्तण्डे—**'क्षोणीनन्दनराजकेतुशनयः षष्ठायत्रिस्थाः शुभाः।
चन्द्रार्कावपि ते च तौ च दशमे चन्द्रः पुनः सप्तमे॥
जीवः सप्तनवद्विपञ्चमगतो युग्मे तु सोमात्मजः।
शुक्रः षड्दशसप्तराशिरहितः सर्वेऽप्युपान्ते शुभाः॥"

**वराहः—**"इष्टस्थाने सौम्या बलिनो येषां भवन्ति राशीनाम्।
तद्द्रव्याणां वृद्धिः सामर्थ्यं सुलभता तत्रैव॥"

काश्यपः--"राशेरनिष्टस्थानेषु पापाश्च सबलाः स्थिताः ।
तद्द्रव्याणां नाशकरा दुर्लभास्ते भवन्ति च ॥"

वराहः--"राशेर्यस्य क्रूराः पीडास्थानेषु संस्थिता बलिनः ।
तत्प्रोक्तद्रव्य णां महार्घता दुर्लभत्वञ्च ॥"

मेषादिस्वामिकद्रव्याणामनुसन्धानं वराहसंहितादावनुष्ठेयम् ।

इत्यद्भुतदर्पणे दिव्याद्भुतम् ।

## अथ नाभसाद्भुतेऽन्तरिक्षाश्रये प्रतिसूर्याद्भुतम्

**वराहः**--"दिवसकृतः प्रतिसूर्यो जलकृदुदग्दक्षिणे स्थितोऽनिलकृत् ।
उभयस्थः सलिलभयं नृपमुपरि निहन्त्यधो जनहा ॥"

पराशर--"प्रतिसूर्यस्य रवेः पूर्वतो युवराजस्य राज्ञो भयाय । दक्षिणपूर्वतोऽग्निवृद्धये । दक्षिणतो विग्रहाय । प्रत्यग्दक्षिणतो-दस्युविनाशाय । प्रत्यग्वर्षदः । पश्चिमोत्तरतो वातवृष्टिदः । उत्तर-तोऽतिवृष्टिकरः पूर्वोत्तरतश्च । सन्ध्यायां बहवश्चेद् दृश्येरन् क्रमाद्दिक्षु सकलनृपतिवधं कुमारविनाशं मरणभयं दस्युशस्यपीडामन्नक्षयं व्याधिशस्त्र-कोपयजमानयाजकभयम् । पाषण्डिजनपीडां सप्रभे प्रतिसूर्ये । निःप्रभे रवौ राष्ट्रभयं राजभयञ्च विद्यादिति ।

"दीप्ताग्निवर्णं कनकप्रभो वा सन्ध्यासु चेदभास्करमावृणोति ।
कम्पे तु भूः खात्प्रपतेन्महोल्का राजा विपद्येत्सहितः प्रजाभिः ॥"

दीप्ताग्निवर्णः कनकप्रभो वा भास्करमावृणोति तिरस्करोतीत्यर्थः ।

**पराशरः**--परिधी उभयपार्श्वतः स्निग्धौ वर्षकरौ रूक्षौ विनाशनौ पृष्ठतो वा संग्रामाय । परिमण्डलाः कुम्भकुण्डाकृतयः प्रशस्ताः । विपरीता अन्ये शंखवैदूर्यपरिग्रहाः । स्निग्धाः प्रशस्ताः सन्निकृष्टाः प्रजाहिताय वर्षाय च । पीते व्याधिभयं विद्यात् । ताम्रे शस्त्रकोपो भवति ।

"सन्ध्यासमीपे यदि भास्करस्य दृश्येत माला प्रतिसूर्यकाणाम् ।
सूर्ये भवेयुः प्रचुराश्च वैरा रोगाश्च घोरा विविधप्रकाराः" ॥

**वटकणिकायां**---"पीतो व्याधिं जनयत्यतिरूक्षरूपः शस्त्रकोपाय ।
प्रतिसूर्याणाम्माला दस्युभयातङ्कृतो नृपतिहन्त्री" ॥

**मयूरचित्रे** — "उदीयमाने सूर्ये च दृश्यते प्रतिसूर्यकः ।
त्रीण्यब्दानि भवेत्त्रासो मासार्द्धेन न संशयः ॥
अत्र साधारणी शान्तिः कर्त्तव्या भूतिमिच्छता" ॥

अनुक्तफलपाकसमयविशेषाणामन्तरिक्षाद्भुतानां **"षाण्मासिकः फलपाक"** इति पराशरोक्तदिशा फलपाको ज्ञातव्यः ।

अत्रानुक्तविशेषशान्तिषु प्रतिसूर्याद्भुतेषु सावित्रीमन्त्रकरणकलक्षहोमादिका शान्तिः कर्त्तव्येति ।

## इति प्रतिसूर्याद्भुतम ।

## अथ परिवेषाद्भुतम

तत्र परिवेषस्वरूपमाह **पराशरः** — "अथ परिवेषो वाताभ्ररश्मिविकारसमुत्थानेन चन्द्रे सूर्ये वा दृष्ट्वा सद्यः फलमादिशेदन्तः ससप्तरात्राद्वा यावद्दर्शनमेती" ति ।

**वराहः**- "संमूर्च्छिता रवीन्द्वोः किरणाः पवनेन मण्डलीभूताः ।
नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषः" ॥

अत्र रवीन्द्वोरित्युपलक्षणम् । ग्रहाणां भानाञ्चापि बोद्धव्यम् । तदुक्तं **भार्गवीये**—"गृहीत्वा भूरजः सूक्ष्मवर्णं पांशु नियम्य च ।
पीडामहनि योगेन महतान्मण्डलीकृतात् ।
हिताहितार्थलोकानां ज्योतींष्युपरुणद्धि वै ।
नक्षत्रग्रहताराणां शशिनो दिनपस्य च ॥
निविष्टो भात्र आपन्नः परिवेष इति स्मृतः" ॥

अथेन्द्रादिदिक्पालकृता रक्तवर्णादय परिवेषा नव । तदाह **वराहः**:-

"ते रक्तनीलपाण्डुरकापोताभ्राभशवलहरितशुक्लाः ।
इन्द्रयमवरुणनैरृतिश्वसनेशपितामहाग्निकृताः ॥

धनदः करोति मेचकमन्योन्यगुणाश्रयेण चाप्यन्ये ।
प्रविलीयते मुहुर्मुहुरल्पफलः सोऽपि वायुकृतः" ।।

भार्गवीये –"मयूरगल - शंखेन्दुमुक्तागोक्षीरपाण्डुराः ।।
मधूकघृतमण्डाभा दूर्वाश्यामश्च वृष्टये ।।
रक्ते पीते सिते ताम्रे पीतेऽथ हरितेऽरुणे ।
क्षुच्छस्त्रव्याधिवर्षाग्निमृत्युशस्त्रानिलाय च ।।
वर्णानान्तु भयं ज्ञेयं यथावर्णपरिग्रहे ।
कपोतः शवलश्चापि तिर्यग्योनौ व्यवस्थितौ" ।।

काश्यपः--"सितपीतेन्द्रनीलाभा रक्ताः कापोतबभ्रवः ।
शवलाग्निमेचकाः स्निग्धा विज्ञेयास्ते शुभावहाः" ।।

घटकर्णिकायाम्--"स्निग्धो मधुघृतशिखिचाषनीलाब्जरत्ननिभः ।
क्षेमसुभिक्षाय भवेत्परिवेषोऽर्कस्य शशिनो वा" ।।

अथाशुभपरिवेषमधिकृत्य मौशले वृष्णिवंशक्षयनिमित्ताम्-

परिवेषाश्च दृश्यन्ते दारुणाश्चन्द्रसूर्ययोः ।
त्रिवर्णाः श्यामरूक्षान्तास्तथा भस्मारुणप्रभाः" ।।

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्ताम्—

"परिवेषस्तथा घोरश्चन्द्रभास्करयोरभूत् ।
देवयानौ भयं घोरो राज्ञां देहावकर्त्तनम्" ।।

घोरो भयानकः । द्रोणपर्वणि द्रोणवधनिमित्तम्-

"परिवेषो महांश्चापि सविद्युत्स्तेनभानवान् ।
भास्करस्याभवद्राजन् प्रमीते वाहिनीपतौ" ।।

मयूरचित्रे--"वज्राभे परिवेषे च रवेः स्याद्भूपतेः क्षयः" ।।

गर्गः--"द्विमण्डलपरीवेषः सेनापतिवधङ्करः
युद्धं सुदारुणं कुर्याद् दृश्यते मण्डलैस्त्रिभिः ।।

वराहः—सनापतेर्भयकरो द्विमण्डलश्चातिशस्त्रकोपकरः ।
त्रिः प्रभृतिभिः शस्त्रभयं युवराजवधं नगररोधञ्च" ॥
परिवेषोऽर्कशशिनोः शत्रुपक्षग्रहैः सह ।
अस्निग्धोऽखण्डो भयदः पापदो बहुमण्डलः" ॥

शत्रुपक्षग्रहाः शत्रोर्जन्माधिपप्रवर्त्तमानदशाधिपाः । अत्र शत्रुपक्षग्रहै-रित्युपलक्षणम् । शत्रुपक्षीयजन्मादिनवक्षैर्बोद्धव्यम् । एतच्च गणितेन बुद्ध्वा विज्ञेन राज्ञा व्यवहारः कार्य इति ।

अथ रविचन्द्रपरिवेषाभ्यन्तरस्थभौमादिफलं, भार्गवीये-

"सेनापतिकुमाराणां सेनायाश्चापि विद्रवः ।
लोहिताङ्गपरीवेषे शस्त्रान्युत्पात एव च ॥
मन्त्रिणो लेखकाश्चापि बर्द्धन्ते स्थावराणि च ।
वृष्टिञ्चापि विजानीयात्परिविष्टे बुधग्रहे ॥
पुराहितामात्यनृपा हन्युरन्योन्यमेव च ।
पुररोधं विजानीयात्परिविष्टे वृहस्पतौ ॥
यायिनः क्षत्रियांश्चापि नृपपत्नीश्च पीडयेत् ।
पृथु कुर्याच्च धान्यार्घं परिविष्टे भृगोः सुते ॥
स्थावरान् कृषकांश्चापि क्षुद्रधान्यञ्च पीडयेत् ।
वातवृष्टिञ्च जनयेत् परिविष्टः शनैश्चरः ॥
वाह्यमेव हि गर्भांश्च राहुः पीडयते ध्रुवम् ।
व्याधिञ्च जनयेद्राहुः परिविष्टः सचन्द्रमाः ॥
क्षुच्छस्त्राग्निभयं घोरं राजतोयभृतस्तथा ।
परिविष्टश्च केतुः शिखिनश्च हिनस्ति सः" ॥

पराशरः--"राज्ञः शस्त्रेण निधनं पिनद्धे दैत्यमन्त्रिणि ।
सौरे स्यादम्भसा पीडा जीवे राज्ञः पुरोधसाम् ॥
बुधे ज्ञानिवधो भौमे दस्युशस्त्राग्निसभवः" ॥

भार्गवीये--"सेन्द्रचापस्तनिते परिवेषे प्रकाशिनि ।
अकृतावपि जानीयान्महाभयमुपस्थितम् ॥

परिवेषोऽल्पफलदो वातवृष्ट्युपबृंहितः ।
अथ चेद्वातवृष्टिस्तु त्रिरात्रान्नोपजायते ॥
प्रज्वलनाय चौराणां प्रादुर्भावः प्रजायते" ॥

अथ पृथक्ताराग्रहाणां नक्षत्राणाञ्च परिवेषफलम् । **काश्यपः**--
"पृथक्ताराग्रहस्यैव नक्षत्राणामथापि वा ।
परिवेषो यदा दृश्यस्तदा नरपतेर्बधः ॥
यदि केतूदयो न स्यादन्यथा तद्भवेत्फलम्" ॥

अथ प्रतिपदादितिथिषु परिवेषफलम्, **भार्गवीये**--

"ब्रह्मक्षत्रविट्शूद्रान् हन्यात्प्रतिपदादिषु ।
ग्रामान् पुरञ्च कोषञ्च पञ्चम्यादिषु तु त्रिषु ॥
अष्टम्यां युवराजञ्च चमूपालान् हिनस्ति वै ।
नवम्याञ्च दशम्याञ्च एकादश्याञ्च पार्थिवान् ॥
त्रयोदश्यां वलक्षोभो द्वादश्यां रुध्यते प्रजा ।
राज्ञीपीडा चतुर्दश्यां पञ्चदश्यान्नृपस्य च" ॥

**वराहः**—"विप्रक्षत्रियविट्शूद्रहा भवेत्प्रतिपदादिषु क्रमशः ।
श्रेणीपुरकोषाणां पञ्चम्यादिष्वशुभकरी ॥
युवराजस्याष्टम्यां परतस्त्रिषु पार्थिवस्य मृत्युकरः ।
पुररोधो द्वादश्यां सैन्यक्षोभस्त्रयोदश्याम् ॥
नरपतिपत्नीपीडां परिवेषोऽप्युत्थितश्चतुर्द्दश्याम् ।
कुर्य्यात्तु पञ्चदश्यां पीडां मनुजाधिपस्यैव ॥"

**पराशर**---"परिवेषमण्डलं यस्यान्दिशि भिद्येत वारुणम् ।
तस्यान्दिशि विशेषेण विद्यात्तीव्रतरं फलम् ।"

**विष्णुधर्मोत्तरे**:-"यतः खण्डपरिवेषः स्यात्तान्दिशं नृपतिर्यायात् ।"

**पराशरः**--सर्व एव सन्ध्ययोर्दृश्यमाना वर्षासु वर्षकाः स्युरन्यत्तौ भयाय"। अत्रानुक्तविशेषशान्तिषु परिवेषोत्पातादिषु परिविष्टनक्षत्रग्रहदेवतापूजापूर्विका

सावित्रीमन्त्रकरणकलक्षहोमादिका शान्तिरभयाख्या महाशान्तिर्वा प्रभूतकनकान्नगोदानादिका वा कर्त्तव्या। सर्वत्रौत्पातिकफलगुरुलाघवमवगम्य व्यवहारः कर्त्तव्यः।

मत्स्यपुराणे--परिवेषेऽपि वृष्टिविकारविहिता शान्तिः कर्त्तव्येत्युक्तम। सा च वृष्ट्यद्भुतप्रकरणेऽनुसन्धेया।

मयूरचित्रे--"परिवेषे समुत्पन्ने शुक्लादौ ब्राह्मणादयः।
हतप्रभावा जायन्ते तथा शक्रधनुर्न्निभे॥
पूजयित्वा श्रियं पुष्पैरुपहारादिभिस्तथा।
घृताक्तान् जुहुयात्पद्मान् दद्याद्रत्नादिकन्तथा॥
श्रीश्चते इति मन्त्रेण जुहुयात्समिधोऽपि च।
औदुम्बराणां पञ्चैव सहस्राणि समाहितः॥
अष्टोत्तरं घृताक्तानां शतमष्टोत्तरन्तथा।
पायसं भोजयेद्विप्रान् दधिक्षीरगुडोदनैः॥
सुवर्णं रजतं दद्याद् व्रतान्ते भूरिदक्षिणाम्॥"

"सप्ताहात्परिवेषफलपाक" इति वराहः।

"ग्रहाणां परिवेषे तु त्रिरात्रात्फलमादिशेदि" ति गर्गः।

इति परिवेषाद्भुतम्।

## अथ रश्मिदण्डाद्भुतम

वराहः--"रविकिरणजलमरुतां सङ्घातो दण्डवत्स्थितो दण्डः।
स विदिङ्मुखो नृपाणामशुभो दिक्षु द्विजातीनाम्॥
शस्त्रभयातङ्ककरो दृष्टः प्राङ्मध्यसन्धिषु दिनस्य।
शुक्लाद्यो विप्रादीन् यदभिमुखस्ताञ्च हन्ति दिशम्॥"

पराशरः--अथ दण्डा धनुर्भिः समानरूपफला.। विशेषतस्तूभयतो विच्छिन्नो दण्डोऽमूलवान् स्यात्। अपरं धनुरदृश्यात्मवत्। दृश्यन्तश्च रश्मयस्तीक्षणाग्राश्चन्द्रसूर्ययोः। अन्तस्त्र्यहात्फलं तेषु त्रिषु विद्यात्। घनाः

स्निग्धा दीर्घाः परिपूर्णा रक्तनीलाः श्वेतानुगामिनो योगक्षेमाय । रक्तरूक्षा ह्रस्वा नीचास्तु वर्षाय । काला दुर्भिक्षाय । धूम्रलोहितास्तनवः शस्यस्याऽपदे । अत्यन्तमानीलकृष्णाः पारावतमयूरचित्रवर्णा वा वर्षाय । वहवश्च स्निग्धाः द्वौ नीलौ रक्तौ परुषौ वा परचक्रागमाय । तथा रक्तः एकच्छेदो विच्छिन्नो दुर्जातो राजमृत्यवे । विपरीतो राजजयाय । पुण्डरीकाकार उल्कापाताय । त्रिवर्णो राजक्षयाय । स्थूलाकारोऽञ्जनवर्णो वर्षसम्पत्तये । अस्तमितमात्रे रश्मिदण्डदर्शनं मुख्यामात्यविनाशायेति ।

अत्रानुक्तविशेषशान्तिषु प्रभूतगोमहीदानादिका रविपूजापूर्विका सामान्या शान्तिः सावित्रीमन्त्रकरणको होमो यथाशक्ति ब्राह्मणभोजनदक्षिणादानादिको वा कर्त्तव्य इति ।

इति रश्मिदण्डाद्भुतम् ।

## अथ गन्धर्वनगराद्भुतम्

**काश्यपः**--बहुवर्णं पताकाढ्यं गन्धर्वनगरं महत् ।
दृष्टं प्रजाक्षयकरं सङ्ग्रामे रोमहर्षणम् ॥"

**वराहः**--"अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम् ।
यदा तदा नागमनुष्यवाजिनां पिबत्यसृग्भूरि रणे वसुन्धरा ॥
गन्धर्वनगरमुत्थितमापाण्डुरमशनिपातवातकरम् ।
दीप्ते नरेन्द्रमृत्युर्वामेऽरिभयं जयः सव्ये ॥
चौराटविकान् हन्याद् धूमानलशक्रचापाभम् ।
सितरक्तपीतकृष्णं विप्रादीनामभावाय ।"

**पराशरः**--पश्चिमायां सन्ध्यायां नीलस्निग्धे भ्राजिष्णौ सदोषे वर्षं, चित्रनीलपरुषवहुरूपे वर्षक्षयम् । अथ वेलाफलमाह--

**विष्णुधर्मोत्तरे**--"गन्धर्वनगरं सन्ध्यायां महाहवाय ।।"

**पराशरः**--उपस्थितायाञ्चेत्सन्ध्यायां दृश्यते तदा कुमारबधम् । अतीतायां वृद्धस्य राज्ञः । गन्धर्वनगरेण सहोदितः सूर्यः परचक्रागमनं कुर्यात् ।

**वटकणिकायां** —"सितखपुरेऽर्ककान्ते पुरलाभो भेदने नाशः ।
नगरसदृशं सन्ध्याकाले यदा प्रतिदृश्यते ॥
परमधिकृतङ्गन्धर्वाणां शतघ्निसमाकुलम् ।
नरपतिभयं देशे तस्मिस्तदा परचक्रतः ॥
रुधिरकलिलः सङ्ग्रामो भवत्यतिदारुणः ॥"

अथ दिक्फलमाह पराशरः–गन्धर्वनगराणि प्राच्याद्यष्टासु दिक्षु प्रादुर्भूतानि क्रमात्फलमावेदयन्ति - क्षुत्पीडामग्निकोपं युवराजवधन्तस्करोपद्रवं राजपीडां तपस्विनाम्भयं भूतागमनं वर्षमिति ।

**वराहः**–-"उदगादितः पुरोहितनृपबलपतियुवराजदोषदं खपुरम् ।
नागरनृपविजयावहमुदग्विदिक्स्थं विवर्णनाशाय ॥"

**बृहद्यात्रायां**--"गन्धर्वनगरं हन्ति प्राक्प्रभृत्यवनीश्वरम् ।
बलेशं युवराजञ्च पुरोहितमिति क्रमात् ।

**बार्हस्पत्ये** "सततं दृश्यमानञ्च राज्ञो राष्ट्रभयावहम् ॥"

**वराहः**–-"सर्वदिगुत्थं सततोदितञ्च भयदं नरेन्द्राणाम् ॥"

अत्रानुक्तविशेषशान्तिषु गन्धर्वनगरोत्पातेषु सावित्रीमन्त्रकरणकलक्ष-होमादिका अभयाख्या वा प्रभूतकनकान्नगोमहीदानादिका शान्तिः कर्त्तव्येति । गन्धर्वनगरफलपाकसमयस्तु मासत्रयेणेति पराशरादिभिरुक्तम् । **वराहसंहितायान्तु**-गन्धर्वपुरं मासादिति ।

इति गन्धर्वनगरादभूतम् ।

## अथ निर्घाताद्भुतम्

**गर्गः**--"यदाऽन्तरीक्षे बलवन्मरुता मारुतो हतः ।
पतत्यधः स निर्घातो जायते वायुसम्भवः ॥"

**वराहः**—"पवनः पवनाभिहतो गगनादवनौ यदा समापतति ।
भवति तदा निर्घातः स च पापो दीप्तविहगरुतः ॥"

**दिक्फलमाह वटकणिकायाम्** – "दिशन्तापयति पतति यस्याम् ॥"

**विष्णुधर्मोत्तरे**--अतिभीमो निर्घातो राजमृत्यवे, याञ्च दिशं पतति तान्दिशं राजा यायात्।

**पराशर**—अथ निर्घातेषु दिनकालतिथिनक्षत्रानुबन्धेन चतुर्विधं फलमुपदिशन्ति यावत्सन्दर्शे।

**गर्गः**—"यान्दिशञ्चाभिगच्छेत्तु निर्घातो भैरवस्वनः।
तद्दिश्यान् हन्ति देशांश्च सर्वं दिक्प्रभवञ्च यत्॥"

**वार्हस्पत्ये**—"अष्टौ भवेयुर्निर्घातास्तेषामैन्द्रः प्रशस्यते।
पूर्वेण वृष्टि शस्यञ्च राजवृद्धिञ्च निर्द्दिशेत्॥
पूर्वोत्तरेण सौभिक्ष्यं भूमिलाभस्तथोत्तरे।
अपरोत्तरे चौरभयं वाजिनाञ्चाप्युपद्रवः॥
पश्चिमे तु भयं राज्ञो जलजातिश्च पीड्यते।
नैर्ऋते शस्यगोस्त्रीणां गणानाञ्च महद्भयम्॥
दक्षिणे राजपीडा स्याद्वायुञ्चात्र विनिर्द्दिशेत।
अनलस्य भयं विद्याद्यदि स्यात्पूर्वदक्षिणे॥"

अथ **समयफलम्, वृहद्यात्रायाम्**—

"हन्यान्नृपपौरराष्ट्रिकान् भृत्याम्भोरुहतस्करद्विजान्।
वेलाक्रमशो दिनादितः काष्ठान्ताञ्च स यत्र भूस्वनः॥"

**पराशरः**--"पूर्वाह्ने सराजका गणा वद्ध्येरन्। मध्याह्नेऽनलभयात्प्रजापालनविनाश। शस्त्रानावृष्टिरोगदुर्भिक्षैरपराह्णे राज्ञस्तदनुजीविनां च प्रदोषे। सोपद्रवानावृष्टिर्मध्यरात्रे। लोहजीव्यतया परत्रात्रे। सन्ध्ययोर्ब्राह्मणानां रौद्रकर्मणाञ्चेति।

**गर्गः**--"यदा सूर्योदये प्राप्ते निर्घातः श्रूयते दिवि।
क्षत्रियान्योधमुख्यांश्च पीडयेत्तु न संशयः॥
प्रहरांशे तु वैश्यांश्च हन्याद्गोजीविनस्तदा।
परिवृत्ते हरौ शूद्रानपराह्णे च दस्यवः॥"

बार्हस्पत्ये--"अनभ्रे वापि निर्घातः पतितो राजमृत्यवे।
नीचानन्यांश्च हन्यात्तु सोऽस्तमेति दिवाकरे ॥"

वराहः—"अधिकरणिकनृपधनियोधाङ्गनावणिग्वैश्यान् ।
आप्रहरांशेऽजाविकमुपहन्याच्छूद्र—पौरांश्च ॥
आमध्याह्नाद्राजोपजीविनं ब्राह्मणांश्च पीडयति ।
वैश्यजनपदांस्तृतीये चौरान् प्रहरे चतुर्थे च ॥"

गर्गः "प्रथमे प्रहरे शस्यानर्द्धरात्रे तु राक्षसान्।
रात्रित्रिभागे वैश्यांस्तु प्रत्यूषे शूद्रनाशकृत् ॥"

वराहः-- 'अस्तं याते नीचान् प्रथमे यामे निहन्ति शस्यानि।
रात्रेर्द्वितीययामे पिशाचसङ्घान्निपीडयति ॥
तुरगकरिणस्तृतीये विनिहन्याद्यायिनश्चतुर्थे च ॥"

तिथिफलमाह पराशरः--प्रतिपदष्टमीचतुर्द्दशीषु प्रादुर्भूतो मृदुरितरस्त्वितर इति। मृदुर्मृदुफलः। इतरस्तीव्रफल इत्यर्थः।

पराशरः--महास्वनश्च समग्रफलो भवति।

परिशिष्टे तु--निर्घातस्य प्रपतने शान्तिङ्कुर्यात्तु वैष्णवीम्।
विष्णुं सम्पूजयेत्तद्वद् ब्राह्मणांश्चापि भोजयेत् ॥
तदसम्भवे प्रभूतकनकान्नगोमहीदानादिका शान्तिः कर्त्तव्येति। फलपाकः समयस्त्वाह पराशरः--निर्घातस्तु त्रिभिर्मासैरिति।

इति निर्घाताद्भुतम्।

## अथेन्द्रधनुरद्भुतम्

तत्र धनुःस्वरूपमाह काश्यपः--

"अनन्तकुलजाता ये पन्नगाः कामरूपिणः।
तेषां निःश्वाससम्भूतं शक्रचापं प्रचक्षते ॥"

वराहः--"सूर्यस्य विविधवर्णाः पवनेन विघटिताः कराः साभ्रे।
वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः ॥"

अथ शुभसूचकेन्द्रधनुः--

काश्यपः -"स्निग्धवर्णं घनश्यामं सर्वत्र दिशि दृश्यते ।
बहूदकं सुभिक्षञ्च शिवं शस्यप्रदं भवेत् ॥"

तथा---"अच्छिन्नमवनिगाढं द्युतिमत्स्निग्धं घनं विविधवर्णम् ।
द्विरुदितमनुलोमं वा प्रशस्तमम्भः प्रयच्छति च ॥"

वराहः--"चापमैन्द्रमनुलोममखण्डं प्रोज्वलं बहलमातपमिष्टम् ॥"

अनुलोममिति यात्रासमये बोद्धव्यम् । यात्रायामेव बहुभिरेवम्भूतस्ये-न्द्रधनुषः प्राशस्त्याभिधानात् ।

नन्दी-बहुवर्णमविच्छिन्नं द्विरुद्गतं स्निग्धममरपतिचापम् ।
पश्चात्पार्श्वे चापि प्रयाणकाले रिपुबधाय ॥"

ऋषिपुत्रः-"द्विरुद्गतमविच्छिन्नं स्निग्धमिन्द्रायुधं महत् ।
पृष्ठतो विजयाय स्याद्विच्छिन्नं परुषं न च ॥"

अथ वर्णफलमाह वराहः--

"पाटलपीतकनीलैः शस्त्राग्निभयकृता पीडा ॥"

पराशरः--रक्तमाञ्जिष्ठे श्यामारुणनीलपीतके भयम् । परुषे राज-मृत्युः सर्वस्मिन्नेव स्निग्धे समग्रवर्षासु वर्षणम्, अन्यस्मिनतौ भयमिति ।

औशनः--श्वेतमिन्द्रायुधं विप्रान्रक्तं क्षत्रं विनाशयेत् ।
वैश्यांस्तु पीतकं रात्रौ कृष्णं शूद्रं विनाशयेत् ॥"

मयूरचित्रे—सन्नाहकाले सैन्यानां रक्तमिन्द्रधनुर्यदि ।
पक्षयोरुभयोर्मृत्युस्तदेत्याहुर्मनीषिणः ॥"

अथ दिक्फलमाह काश्यपः-

अनावृष्ट्यां भवेद्वर्षमैन्द्र्यां वर्षत्यवर्षणम् ।
पश्चिमायां भवेद्वर्षं सदा कार्मुकसंस्थितौ ॥"

पराशरः-पश्चिमतश्चेत् सूर्ये तिष्ठत्यनुदेशं पुरस्ताद् दृश्येत क्षेमाय, तनुवर्षाय च। विपरीतं वर्षविघाताय। प्रागुत्तरस्यान्दिशि श्वेतवर्णेन्द्रचापदर्शनं दुर्भिक्षभयायेति।

वराहः---"विदिगुद्भूत दिक्स्वामिनाशनं व्यभ्रजं मरककारि"।

काश्यपः--"ऐन्द्र्यां दिशि यदा रात्रौ दृष्टं भूपवधो भवेत्।
याम्यां सेनापतिस्तस्य विनाशमधिगच्छति॥
पश्चिमायान्तु सन्दृष्टं प्रधानं नाशनृच्छति।
उत्तरस्यां यदा रात्रौ दृष्टं मन्त्रिविनाशनम्"॥

अथ स्थाफलन्तत्र वराहः-

जलमध्येऽनावृष्टिर्भुवि शस्यवधस्तरौ स्थिते व्याधिः।
वल्मीके शस्त्रभयं निशि सचिववधाय धनुरैन्द्रम्"॥

पराशरः--सूर्यं भूमिञ्चेद्दृष्टम्भयति तदा पुरोहितवधः। सन्ध्ययोश्च सूर्याचन्द्रमसौ परिरभ्य मन्त्रिसेनापतिनायकानामामयङ्कुर्यात्। शत्रुभिरुपरुद्धे पुरे यदि सपरिषात्सूर्यात्सादितमिन्द्रधनुर्भवति तदा पुरमोक्षदं भवति न नृपतिविरोधप्रदमिति। मयूरचित्रे निशि परिविष्टे चन्द्रे इन्द्रधनुःफलम्--

"उपरुद्धे निशानाथे रात्राविन्द्रधनुर्यदि।
तदा क्षोभः पुरस्य स्यात्परचक्रागमस्तथा"॥

मत्स्यपुराणे "निरभ्रे वा तथा रात्रौ श्वेतं याम्योत्तरेण तु।
इन्द्रायुधं समालोक्य उल्कापातन्तथैव च॥
परचक्रागमं ब्रूयाद्देशोपद्रवमेव च"॥

विष्णुधर्मोत्तरे--"रात्राविन्द्रधनुश्चेद्व्यभ्रे च महाहवाय। व्यभ्रधनुर्मरककारि च।

नारदः--'रात्राविन्द्रधनुर्यत्र दृश्यते द्विजसत्तम।
अशुभन्तत्र विज्ञेयं शान्तिञ्चेमां समादिशेत्॥
औदुम्बर्याः सहस्राणि समिधो जुहुयाद् द्विजः।
मध्वक्तानि घृताक्तानि जातवेदांसि मन्त्रवित्॥

विप्राय दक्षिणान्दद्याद् धेनुञ्च वृषभन्तथा ।
एकरात्रोषितो भूत्वा ततः सम्पद्यते शुभम् " ॥

आथर्वणाद्भुते-"इन्द्रायुधसवर्णानि वस्त्राण्याभरणानि च ।
दद्याद्गाञ्च हिरण्यञ्च तदा तच्छमयेद्भयम्" ॥

मत्स्यपुराणवराहसंहितयो-र्वृष्टिविकारविहिता शान्तिः कर्त्तव्येति ।

अत्रानुक्तविशेषशान्तिषु इन्द्रधनुरुत्पातेषु फलगुरुलाघवमवगम्य सावित्रीमन्त्रकरणकलक्षहोमादिका अभयाख्या वा प्रभूत कनकान्नगोमहीदानादिका शान्तिः कर्त्तव्या । चन्द्रादित्यावरोधे त्विन्द्रधनुषि चन्द्रादित्यपूजापूर्विका शान्तिरवगन्तव्या । फलपाकस्तु — "सद्यः सप्तरात्राद्वेति पराशरः ।

इतीन्द्रधनुरदभुतम् ।

## अथ सन्ध्याद्भुतम्

तत्स्वरूपमाह वराहः--

अर्द्धास्तमयात्सूर्य्यातिसन्दृष्टास्तारका यावत् ।
तेजः परिहानिमुखाद्भानोरर्द्धोदयं यावत् ॥

शस्ता शान्तद्विजमृगजुष्टा सन्ध्या स्निग्धा मृदुपवना च" ॥

अथाशुभसूचकसन्ध्यामाह-

वार्हस्पत्ये—तमोधूमरजस्काभ्रदीप्त -द्विजमृगावृताः ।
प्रदीप्तलक्षणाः सन्ध्याः सर्वा एवाहितावहाः ॥
भृशमुद्घातिनी सन्ध्या कुरुते विग्रहागमम् ॥"

तथा- "प्रातःप्रदोषा रजसा निरुद्धा अनभ्रवत्योऽपि घनानुरूपाः ।
क्रूराश्च सन्ध्या रुधिरप्रकाशा भयानि राज्ञः प्रतिवेदयन्ति ।"

वराहः--पांशुध्वस्ता जनपदनाशन्धत्ते रूक्षा रुधिरनिभा वा ॥"

तथा —दीप्तविहगशिवामृगजुष्टा दण्डरजपरिघादियुता च ।
प्रत्यहमर्कविकारयुता वा देशनरेशसुभिक्षबधाय ॥"

शीघ्रमत्रिणि कुरुपाण्डवपैन्यक्षयनिमित्तम् —

"उभे सन्ध्ये प्रकाशेते दिशोदाहसमन्विते ।।" अथ **वर्णफलम्** —

**वार्हस्पत्ये**—"सन्ध्याः कमलकिञ्जल्कतडित्कल्पा शुभावहाः ।।"

**पराशरः**—स्निग्धा गौरी योगक्षेमाय । श्वेतायां वस्त्रवृद्धिः । हरितायां शस्त्रभयम् । रक्तायां भयम् । माञ्जिष्ठायामग्निम् । हरितालवर्णायां प्रथमामात्यस्य शस्त्रेण वधम् । आम्रकोरकवर्णायां वर्षम् । नीलरक्तायामवग्रहम् । कृष्णायामवर्षम् । रक्तगौर्याम् पशुघातम् । वातकपिलायामस्तमितमात्रे सूर्येचेदतिमात्रप्रकाशा स्यात्प्रभा सा तस्यां वर्षं विद्यात् । प्रत्यूषसि तद्रूपायामेव राज्ञः सेनापतेर्वा वधम् । लोहितश्यामायां चौरवृद्धिः । सर्वा एव चतूरागाः पञ्चरागा वा युद्धायेति ।

अत्रानुक्तविशेषशान्तिषु सन्ध्योत्पातेषु औत्पातिकफलगुरुलाघवमवगम्य सावित्रीमन्त्रकरणकलशहोमादिका प्रभूतकनकान्नगोदानादिका वा शान्तिः कर्त्तव्या । **अथ विशेषशान्तयः**—

**मयूरचित्रे**—"गोमूत्राभाऽऽज्यमण्डाभाः स्निग्धाः हिङ्गुलसन्निभाः ।
लाक्षाविद्रुमकान्तिश्च सन्ध्या वृष्टिरणाय च ।।
तमोयुक्ता रजोयुक्ता सन्ध्या राष्ट्रनृपान्तकृत् ।
ऋतुस्वभावजा सा तु सुभिक्षक्षेमकारिणी ।।
अत्र साधारणी शान्तिः कर्त्तव्या गर्गभाषिता ।
निःप्रभा च यदा सन्ध्या रूक्षा भस्मरजःसमा ।।
तदा पित्तज्वरोद्भूतैः पीड्यन्ते व्याधिभिर्जनाः ।
शान्तिश्चतुर्द्दशी कार्या सन्ध्योल्कायान्तथोदिता ।।"

सप्ताहात्सन्ध्ययोः फलपाक इति ।

इति सन्ध्याद्भुतम् ।

## अथ सन्ध्याकालिकरविकिरणाद्भुतम्

**वराहः**--"उद्योतिनः प्रसन्ना ऋजवो दीर्घाः प्रदक्षिणावर्त्ताः ।
किरणाः शिवाय जगतो वितमस्के नभसि भानुमतः ॥
शुक्लाः करा दिनकृतो दिवादिमध्यान्तगामिनः स्निग्धाः ।
अव्युच्छिन्ना ऋजवो वृष्टिकरास्ते त्वमोघाख्याः ॥
विच्छिन्नविषमविध्वस्तविस्तृतकुटिलापसव्यपरिवृताः ।
तनुह्रस्वविकलकलुषाश्च विग्रहा वृष्टिदाः किरणाः ॥
कल्माषबभ्रुकपिला विचित्रमञ्जिष्ठहरितशवलाभाः ।
त्रिदिनानुबन्धिनो वृष्टयेऽल्पभयदास्तु सप्ताहात् ॥
हरिताः पशुशस्यवधं धूम्रसवर्णा गवां नाशम् ।
माञ्जिष्ठाभाः शस्त्राग्निसम्भ्रमं बभ्रवः पवनवृष्टिम् ॥
भस्मसदृशास्त्ववृष्टिं तनुभावं शवलकल्माषाः ॥"

**पराशरः**--"बन्धूजीवनिकाशेन तपनीयनिभेन वा ।
उदये रजसा सूर्यः सम्वृतः शस्त्रमावहेत् ॥"

**वराहः**--बन्धूकपुष्पाञ्जनवर्णसन्निभं सान्ध्यं रजोऽभ्येति यदा दिवाकरम् ।
लोकस्तदा रोगशतैर्निपीड्यते शुक्लं रजो लोकविवृद्धिशान्तये ॥

अत्रानुक्तविशेषशान्तिषु सन्ध्याकालिकरविकिरणाद्भुतेषु फलगुरुलाघवमवगम्य सावित्रीमन्त्रकरणकलक्षहोमादिका अभयाख्या वा प्रभूतकनकान्नगोमहीदानादिका शान्तिः कर्त्तव्या ।

इति सन्ध्याकालिकरविकिरणाद्भुतम् ।

## अथ दिग्दाहाद्भुतम्

**वार्हस्पत्ये**--"यदाऽस्तमित आदित्ये वह्निज्वाला प्रदृश्यते ।
दिशान्दाहन्तु तं विद्याद्भार्गवस्य वचो यथा ॥"

अथ शुभसूचकदिग्दाहलक्षणमाह **वराहः**--

नभः प्रसन्नं विमलानि भानि प्रदक्षिणं वाति सदा गतिश्च ।
दिशाञ्च दाहः कनकावदातो हिताय लोकस्य सपार्थिवस्य ॥"

अथ वर्णफलम् , वराहः—

"दाहो दिशां राजभयाय पीतो देशस्य नाशाय हुताशवर्णः ।
यश्चारुणः स्यादपसव्यवायुः शस्यस्य नाशं प्रकरोति दृष्टः ॥"

बार्हस्पत्ये--"श्वेता रक्ताश्च पीताश्च दाहाः कृष्णाश्च वर्णतः ।
ब्रह्मक्षत्रियविट्शूद्रविनाशाय प्रकीर्त्तिताः ॥
रक्ताः शस्त्रभयं कुर्युः पीता व्याधिप्रकोपनाः ।
अग्निवर्णास्तथा कुर्युरग्निशस्त्रभयं महत् ॥
लाक्षाक्षतजमाञ्जिष्ठ--बन्धूयावकवर्णकाः ।
सुपीतपरुषश्याम - मेचकारुणसन्निभाः ॥
सर्वा एव क्षुधामृत्युरोगशस्त्राग्निकोपनाः ।
ऋतौ तु वर्षन्तीन्नं स्यात्सैन्यविद्रव एव च ॥"

छायाव्यञ्जकदिग्दाहफलम् , विष्णुधर्मोत्तरे--

"अतिप्रदीप्ते छाया व्यञ्जके राजमरणं विद्यात् ।"

वराहः -याऽतीवदीप्त्या कुरुते प्रकाशं छायामभिव्यञ्जयतेऽर्कवद्यः ।
राज्ञो महद्वेदयते भयञ्च शस्त्रप्रकोपं क्षतजानुरूपम् ॥

अथ दिक्फलन्तत्र वराहः--

"प्राक्क्षत्रियाणां सनरेश्वराणां प्राग्दक्षिणे शिल्पिकुमारपीडा ।
याम्ये सहोग्रै परुषैश्च वैश्या दूताः पुनर्भूः प्रमदाश्च कोणे ॥
पश्चात्तु शूद्राः कृषिजीविनश्च चौरास्तुरङ्गैः सह वायुदिक्स्थे ।
पीडां व्रजन्त्युत्तरतश्च विप्राः पाखण्डिनःस्युर्वणिजश्च साव्याम् ॥"

पराशरः– अथ दिग्दाहेषु प्राच्यादिदिक्षु दह्यमानासु तत्रैव देशे । अष्टमासाभ्यन्तरेऽनावृष्टिभयम् । त्रिमासाद्रोगं महोत्पातञ्च । नवमासादग्नि-

भयम् । दशमासाद्बलक्षयम् । मासाद्राज्ञः शस्त्रभयम् । अष्टाभ्यः सर्वतो भयम् । सप्तभ्यो युवराजभयम् । षड्भ्यः कन्याभयम् । सप्ताहात्सर्वासु वा वर्षम् ।

मयूरचित्रे--"विदिक्षु च दिशान्दाहस्त्रिरात्रं यदि दृश्यते ।
शस्त्रसम्पातमाचष्टे दुर्भिक्षं मरकन्तथा ॥
गगने मेघसंछन्ने दिग्दाहश्चेन्महोदयः ।
दिवा वा यदि वा रात्रौ जायते नृपतेर्बधः ॥
वर्षारात्रौ च दिग्दाहे दुर्दिने नृपतेर्वधः ॥"
वर्षारात्रेषु निर्घाते दिशां दाहो महान्भवेत् ।
क्षिप्रञ्च भयमाख्याति देशस्य च नृपस्य च ।
अत्र साधारणी शान्तिः कर्त्तव्य गर्गभाषिता ॥"

वार्हस्पत्ये--"यथोक्ता तु महाशान्तिर्यथोत्तविधिना कृता ।
सर्वं दिग्दाहजं घोरं शमयेत्सा सदक्षिणा ॥"

यथोक्तेति - अन्तरिक्षोत्पातविहिताऽभयाख्या महाशान्तिरित्यर्थः ।

सा च सावित्रीमन्त्रकरणकलक्षहोमादिका प्रचुरकनकान्नगोमहीदानादिका वा शान्तिरवगन्तव्या । षण्मासाद्दिग्दाहफलपाक इति ।

इति दिग्दाहादभुतम् ।

## अथ छायाद्भुतम्

मत्स्यपुराणे--"विरजस्के रवौ व्यभ्रे यदि छाया न दृश्यते ।
दृश्यते तु प्रतीपा वा तदा देशभयम्भवेत् ॥

आथर्वणाद्भुते--"यदा चानभ्रविमले सूर्ये छाया न दृश्यते ।
दृश्यते सा प्रतीपा वा तदा देशभयं भवेत् ॥"

पराशरः--"दिवा व्यभ्रे विरजसि वा रवौ छायादर्शनं तत्प्रतिलोमदर्शनं वा जनमारभयायेति ।"

मत्स्यपुराणे हिरण्यकशिपुवधनिमित्तम्--

"तदा च सर्वभूतानां छाया न परिवर्त्तते।
अपराह्णगते सूर्ये लोकानां युगसंक्षये ॥"

अत्रानुक्तविशेषशान्तिस्तु वृष्ट्यद्भुतप्रकरणस्था सामान्यशान्तिः।

मयूरचित्रे--छाया वै यत्र भूतानां परिवृत्तिं न गच्छति।
अपराह्णगते सूर्ये न च छायाऽवलम्बते॥
अमात्यसार्थवाहानां श्रेष्ठानाञ्च वदेद्वधम्।
प्राजापत्या ततः शान्तिरभीक्ष्णकलहोदिता॥

अत्रानुक्तफलपाकसमयविशेषे - षाण्मासिकः फलपाको बोद्धव्यः।

इति छायाद्भुतम्।

## अथ तमोधूमरजोनीहाराद्भुतम्

पराशरः--अथ तमांसि स्थानदिग्वर्णविशेषैः शुभाशुभं निवेदयति प्रजानाम्। स्थानफलमाह--भूम्याश्रिते तमसि वर्षं विद्यात्। नभसि महावर्षमिति।

मत्स्यपुराणादौ देवानां पराजयनिमित्तम्--

"निवेशरूपिणी काली कालमेघावगुण्ठिता।
द्यौर्न भात्यभिभूतार्का घोरेण तमसाऽऽवृता॥"

स्थानफलमाह पराशरः—सरःसरित्सु अन्नप्राचूर्यमुदक्चराणां प्राणिनामुपद्रवम्, पर्वतेष्वौषधीनामभावः। ग्रामनगरे ग्रामनगरजनपदपीडनमिति।

आरण्यकाण्डे जनस्थाननिवासिवधनिमित्तम् -

"तमसा चैव घोरेण समुद्भूतेन सर्वतः।
प्रच्छादितं जनस्थानं नीचाकाशे समन्ततः" ॥

मत्स्यपुराणे--अनैशानि तमांसि स्युर्यत्र तत्राशु नश्यति"।

दिक्फलमाह पराशरः--दिक्षु जनपदपीडनम ।

मत्स्यपुराणादौ तारकयुद्धे देवतापराजयनिमित्तम् —

"तिमिरौघपरिक्षिप्ता न राजन्ते दिशो दश" ।

गदापर्वणि दुर्योधनबधनिमित्तम् —

"वभूवुश्च दिशः सर्वास्तिमिरेण समावृताः" ।

अथ रजोवर्णादिफलम् —

पराशरः— पांशुषु रजोऽरुणप्रभेषु वृष्टिः, श्वेते ब्राह्मणपीडा, पीतेऽवृष्टिः लोहिते शस्त्रकोपं, नीले शस्यक्षयमवर्षणञ्च । प्रदोषे महाभयमिति ।

मत्स्यपुराणे —"रजसा वाऽपि धूमैर्वा दिशो यत्र समाकुलाः ।
आदित्यचन्द्रताराश्च विवर्णा भयवृद्धये" ॥

द्रोणपर्वणि द्रोणबधनिमित्तम् —

ततस्तुमुलमाकाशमावृणोत् सदिवाकरम् ।
वातोद्धतं रजस्तीव्रं कौशेयनिकरोपमम् ॥"

हरिवंशे कंशवधनिमित्तम् —

"अपराह्णगते सूर्ये लोकानां क्षयकारिणि ।
न प्रकाशन्ते च दिशो रक्तरेणुसमाकुलाः" ॥

अत्र तमोधूमाद्युत्पातेषु सावित्रीमन्त्रकरणकलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य प्रभूतकनकान्नेत्यादि शान्तिः कर्त्तव्या ।

वराहेणतु--अग्निवैकृतप्रकरणमध्ये "धूमोग्निसमुत्थो रजस्तमश्चाग्निजं महाभयदमिति" लिखित्वा मन्त्रैराग्नेयाद्यैरित्यादिना आग्नेयी शान्तिर्विहिता । सा चाग्न्यद्भुतप्रकरणे अनुसन्धेयेति ।

अत्रानुक्तविशेषफलपाकयोस्तमोनीहारयोरान्तरिक्षत्वात् षाण्मासिकः फलपाक इति ।

धूमरजसोस्तु फलपाकसमयो गार्गीये--"धूलिकापांशुवर्षेषु फलं मासाद्विपच्यते" इति ।

इति तमोधूमरजोनीहाराद्भुतम् ।

## अथोल्कादभुतम्

**गर्गः** — "अस्त्राणि विसृजन्त्येते शुभाशुभनिवेदकाः ।
लोकपाला महात्मानो लोकानां ज्वलितानि च" ॥

लोकानां शुभाशुभनिवेदका इत्यन्वयः **वटकणिकायाम्** -

"अस्त्राणि लोकपाला लोकाभावाय यानि विसृजन्ति ।
तान्युल्काः केषाञ्चित्पुण्यकृतस्ते च्युताः स्वर्गात्" ॥

**वराहः**--"दिवि भुक्तशुभफलानां पततां रूपाणि यानि तान्युल्काः" इति । अस्मिन्नपि पक्षे शुभाशुभसूचकत्वमुक्तम् ।

**बार्हस्पत्ये**--तेषां निपतनं विप्र यत्र यत्रेह जायते ।
तत्र तत्रैव विविधं प्रजानां जायते भयम्" ॥

अत्र सामान्येन पततो ज्योतिर्विशेषस्योल्कासंज्ञा प्रतिपादितेति ।

**वराहः** -उल्काथ पञ्चरूपा धिष्ण्योल्काविद्युतोऽशनिस्तारा ।

**बार्हस्पत्ये**--"ताराधिष्ण्यास्तथोल्काश्च विद्युतोऽशनयस्तथा ।
विकल्पाः पञ्चधा चैषां परस्परबलोत्तराः" ॥

अथ तद्रूपाण्याह **बृहत्संहितायाम्** —

तारा तु हस्तदीर्घा शुक्ला ताम्राब्जतन्तुरूपा च ।
तिर्यगधश्चोर्ध्वं वा याति वियत्युह्यमाने च" ॥

**काश्यपः** - पद्मताम्राकृतिस्तारा हस्तमात्रायता मता" ।

धिष्ण्यालक्षणन्तु **बार्हस्पत्ये** —

"ज्वलिताङ्गारसङ्काशा जिह्मगाप्यथ शीघ्रगाः ।
विना पुच्छावकाशेन द्विहस्तातिकृशेन वा ॥
देशान्तराणि धनुषः पञ्च वापि प्रदृश्यते ।
उल्काविकारो बोद्धव्यो धिष्ण्या इत्यभिसंहतिः"

अथ विद्युल्लक्षणम्, बृहत्संहितायाम्—

"विद्युत्समनुत्रासं जनयन्ती तटतटस्वना सहसा ।
कुटिलविशाला निपतति जीवेन्धनराशिषु ज्वलिता" ॥

वराहः विद्युत्तटतटा शब्दा ज्वालामालाकुला पतति ।

अथाशनिलक्षणम्, वटकणिकायाम्—

"अशनिः प्राणिषु निपतति स्फालयति धरातलं वृहच्छब्दा ।"

अथोल्कालक्षणन्तत्र काश्यपः—

"बृहच्छिरास्तु सूक्ष्माङ्गी नतमानशिखोज्वला ।
पौरुषी तु प्रमाणेन उल्का नानाविधा भवेत ।।"

वटकणिकायां— 'उल्काग्रतो विशाला बहुप्रकारा पुरुषमात्रा च ।"

तथा—"उल्का शिरसि विशाला निपतन्ती वर्द्धते प्रतनुपुच्छा ।
दीर्घा भवति च परुषं भेदा बहवो भवन्त्यस्याः ॥

बार्हस्पत्ये—"सूक्ष्माऽमूला विशालाऽग्रा पतन्ती वापि वर्धते ।
कृशा नारीव दीप्तास्या सविषाङ्गारवर्षिणी ।।
उद्योतयन्ती गगनं काञ्चनेनैव कर्मणा ।
पीतेन चापि वर्णेन धूमधूम्राऽरुणेन वा ॥
नरप्रमाणा विज्ञेया उल्का बहुविधा तु सा ।
एवं पञ्चविधा ह्येताः शौनकेन प्रकीर्त्तिताः ॥
स्वर्गच्युतानां पततां लक्षणं पुण्यकर्मणाम ।
प्रकृत्या पौरुषी योऽल्का तस्या भेदान्निवोधत ॥
पद्मशंखादिसंस्थानाः काश्चिदुल्का भवन्ति हि ।
वंशगुल्मनिभाः काश्चित् काश्चिदिन्द्रध्वजोपमाः ॥
काश्चिदिन्द्रायुधप्रख्याः काश्चिन्मण्डलसन्निभाः ।
छत्रवच्चापि दृश्यन्ते चक्रवन्निपतन्ति च ।
दण्डवच्चापि दृश्यन्ते प्रधावन्ति च सर्पवत् ॥

प्रकीर्णेन कलापेन खे गच्छन्ती च बर्हिणः ।
खण्डखण्डङ्गताः काश्चिद् विलीनाश्च भवन्ति वा ॥
काश्चित्प्रतीपगा वायोः काश्चिदम्बरमागताः ।
तन्तुनैव हि सम्बद्धा धूयमानेन वायुना ॥
पतन्ती दृश्यते काचित् काचिद्भ्रमति चाम्बरे ।
उल्कासंघैः परिवृता पतेत्काचिन्नभस्तलात् ॥
तेजांसि विकिरन्त्यन्याः पधावन्ति च गोलवत् ॥
प्रनृत्यत्प्रेतमार्जारखराहानुगतास्तथा ।
सस्वना विस्वनाश्चापि तथा चायुधसन्निभाः ।
एताश्चान्याश्च विविधाः पतन्ति च नभस्तलात् ॥
एतासां फलमुक्तानां प्रवक्ष्यामि पृथक् पृथक् ।
शङ्खपद्मेन्दुवज्राहिमत्स्यध्वजनिभाः शुभाः ॥
श्रीवृक्षस्वस्तिकावर्त्तहंसद्विरदवत् तथा ॥"

गार्गीये—"छत्रध्वजझषाकारा भ्रमन्ती निपतेद्यदि ।
महोल्का सप्तरात्रेण सा निहन्ति नृपोत्तमम् ॥"

मयूरचित्रे—"इन्द्रध्वजरथाकारा भ्रमन्ती निपतेद्यदि ।
महोल्का सप्तरात्रेण सामात्यं हन्ति पार्थिवम् ॥
नागाश्वरथरूपाश्च ससैन्यं हन्ति पार्थिवम् ।
महीधरनिभा सा तु हन्ति देशं सराजकम् ॥"

बार्हस्पत्ये—"राज्यमिन्द्रायुधप्रख्या मन्त्रिणञ्चक्रसन्निभाः ।
विलीयमाना नभसि निहन्त्युल्का पयोधरान् ॥
प्रजावैकल्यकारिण्यो वायोश्च प्रतिलोमगाः ।
नभोमध्यं च या यान्ति याश्च कुर्युर्ग[illegible]ागतम् ॥
मयूरपुच्छानुगता कुर्यादुल्का जनक्षयम् ।
स्त्रीणामनिष्टदा सा तु या च सर्पति सूर्यवत् ॥
उल्कासंघैः परिवृता याः पतन्ति नभस्तलात् ।
अनुसारिण्य उल्कास्ता राजराष्ट्रभयावहाः ॥"

**वराहः** —"अम्बरमध्यात् पूर्वाह्णे पतिता राजराष्ट्रनाशाय।"
आकाशमध्यादन्यत्र राजभयमिति सागर इति।

**वार्हस्पत्ये** —"लोकविभ्रममत्यर्थं भ्रमन्ती गगनोपरि।"
करोतीति सम्बन्धः।
"या चाकाशे चिरं तिष्ठेद्दण्डवद् भूपभीतिदा।
तथा तन्तुवृता हन्ति नृपमिन्द्रध्वजोपमा" ॥

**वराहः** —"हन्ति मण्डला पुरं छत्रवत् पुरोहितम्।
वंशगुल्मसंस्थिता राष्ट्रदोषकारिणी ॥"
क्ष्वेडास्फोटितवादितगीतोत्क्रुष्टस्वना भवति यदा।
उल्का निपातसमये भयाय राष्ट्रस्य नृपस्य ॥

**वार्हस्पत्ये** —"क्ष्वेडास्फोटितश्रेष्ठा निष्ठावादित्रनिःस्वना।
उल्का निपातसमये राजराष्ट्रभयावहा ॥"

**मयूरचित्रे** —"सघोषा रक्तवर्णा च ज्ञेया शस्यविनाशिनी।
महाशब्दञ्च कुर्वाणा यदोल्का निपतन्ति हि।
विपत्तिविषयं याति सदारो नृपतिस्तदा ॥"

**गार्गीये**—"अग्निवर्णा सनिर्घाता उल्का च निपतेद्यदि।"
तदा हि योधलक्षस्य मही पिवति शोणितम् ॥

**वार्हस्पत्ये** —"अधोमुखी नृपं हन्यात् ब्राह्मणानूर्ध्वगामिनी।
तिर्यगाराजपत्नीश्च श्रेष्ठिनः प्रातिलोमिनी ॥"

**वराहः**—"हन्यादधोमुखी भूपान् ब्राह्मणांश्च तथोर्ध्वगा।
तिर्यगानृपभार्यश्च श्रेष्ठिनश्च प्रतीपगा ॥

**अथ वर्णफलन्तत्र गर्गः**—

"यदा विनिपतन्त्युल्काः कुन्देन्दुरजतप्रभाः।
राजा विजयमाप्नोति सुभिक्षं क्षेममेव च ॥"

मयूरचित्रे – "वैदूर्यत्विग्भिश्च वदन्ति राज्ञां क्षेमं सुभिक्षं रजतप्रभासु ।
अग्निप्रकोपं कनकप्रभासु रक्तासु संग्राममुदाहरन्ति ॥
श्यामा रूक्षा च विध्वस्ता शस्यपीडावहा मता ।
चन्द्रमण्डलवर्णाभा पावकार्चिःप्रभा तथा ॥
उल्का विनिपतेद्यत्र सुरराजवधम्वदेत् ॥

अत्र च रूक्षविध्वस्तेति सार्वत्रिकमेव बोद्धव्यम् । तेन केवलं स्निग्धस्य राजक्षेमकारकत्वम् । तेन न पूर्वापरविरोधः । क्रूरग्रहर्क्षलग्नाद्युत्पन्नत्वेन वा धवलस्यापि निष्फलं बोद्धव्यम् सागर लिखनात् ।

वराहः – शुक्ला रक्ता पीता कृष्णा चोल्का द्विजादिवर्णघ्नी ।
क्रमशश्चैतान् हन्युर्मूर्द्धोरःपार्श्वपुच्छस्थाः ॥

एताः शुक्लवर्णोल्काः यथाक्रमं कूर्मस्य यथोक्तक्रमेण मूर्द्धोरःपार्श्व पुच्छस्थान् जनपदान् हन्ति ।

वार्हस्पत्ये – "निहन्ति शुक्ला मूर्द्धस्था मध्यस्थान् क्षतजप्रभान् ।
पार्श्वस्था पीतकान्हन्ति पादस्था पुच्छपातिनः ।
शुक्ला देवद्विजान् हन्यात्क्षत्रियान् क्षतजप्रभा ।
पीता वैश्यान् तथा हन्ति शूद्रान्हन्यात्सितेतरा ॥"

अत्र च शुक्लाद्युल्कादीनां कूर्ममूर्द्धादिस्थितदेशीयब्राह्मणादीनां मुख्यतया हन्तृत्वमवगन्तव्यम् ।

गार्गीये – "श्वेता च सस्फलिङ्गोल्का ब्राह्मणानां भयावहा ।
क्षत्रिकृष्णयान्तु संरक्ता वैश्यानां पीतवर्णिका ॥
कृष्णा सधूमा शूद्राणां भयमाख्याति दारुणम् ॥"

मयूरचित्रे – रजउल्कापातावद्युद्दिग्दाहाः प्रभवन्ति चेत् ।
श्वेता रक्तास्तथा पीताः कृष्णा विप्रादिनाशनाः ॥
अनुवर्णं क्रमेणोल्का यथा गर्गेण भाषितम् ॥"

अथदिक्फलम्, तत्र पराशरः – श्वेतरक्तपीतकृष्णवर्णाः सौम्यादिदिगनु-

गामन्यो ब्राह्मणादिवर्णघाताय अन्यदिशमभिपतन्त्युभयवर्णमभिहन्यात् ।

गार्गीये--"यस्य राज्ञस्तु नक्षत्रमुल्कया प्रतिहन्यते ।
स राजा नश्यति क्षिप्रं यदि शान्तिं न कारयेत् ।।"

मयूरचित्रे--"यस्य वा जन्मनक्षत्रमुल्कया प्रतिहन्यते ।
क्षिप्रं स हीयते राजा यदि शान्तिं न कारयेत् ।।"

अत्रानुक्तविशेषशान्तिषूल्कापातेषु सावित्रीमन्त्रकरणकलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या। प्रभूतकनकान्नगोमहीदानादिका लक्षहोमाद्यनुकल्पतया वा कार्येति सागरः ।

मयूरचित्रे--अत्र साधारणी शान्तिः कर्त्तव्येति लिखितम् । अत्र प्रतिपदोक्तप्रतिक्रियासाधारणीभूतधनत्वस्य धनतन्मूल्यकान्नादिदानेन प्रशमनम् । परन्तु न कायपरिश्रमनियमादिकमिति तात्पर्यम् ।

भार्गवीये -"यस्मिन्देशे पतत्युल्का भास्करे गगनस्थिते ।
स देशो राजभृत्यश्च राजा चैव विनश्यति ।"

गगनस्थिते-मध्याह्ने ।

नारदः--"उल्का वा पतते विप्र मध्याह्ने चार्द्धरात्रतः ।
उदये प्रातस्सन्ध्यायामपराह्णे विशेषतः ।।
तद्देशे म्रियते राजा दुर्भिक्षञ्च भवेत्ततः ।
देशस्तत्र विनश्येत षड्भिर्मासैर्न्न संशयः ।।"

अर्द्धरात्र एव तु यदोत्तरस्यां पतति तदा महावर्षङ्करोति , राजनरणादिकञ्चेति ।

पराशरः--सौम्यान्दिशमर्द्धरात्रे पतन्ती महावर्षायेति । मध्याह्ने यदा सधूमोल्कापातो भवति तदा सप्ताहाभ्यन्तरे फलम्भवति ।

मयूरचित्रे--"मध्याह्ने चेदुल्कापातो ज्वालाधमसमाकुला ।
ससैन्यं सप्तरात्रेण नृपव्यूहं विनाशयेत् ।।"

ज्वालासमाकुला नृपं ससैन्यं हन्ति, धूमसमाकुला व्यूहमिति।

भार्गवीये---"मध्याह्ने चेत्पतेदुल्का ज्वलन्ती वह्निसन्निभा।
ससैन्यं सप्तरात्रेण सा हन्यान्मेदिनीपतिम् ॥"

उदये सस्फुलिङ्गा सधूमोल्कापाते नृपमरणम्। अन्यथा दुर्भिक्षादिकमवगन्तव्यम्।

मयूरचित्रे--उदये स्वस्फुलिङ्गा सा सधूमा राजमृत्यवे।
सायं सधूमज्वालोल्का ज्वलन्ती वह्निसन्निभा ॥
सामात्यंहन्ति राजानं सकोषबलवाहनम् ॥"

अथ सन्ध्योल्कापातेऽपरमपि फलम्मयूरचित्रे—

"पौराणां पूर्वसन्ध्यासु यायिनामपरासु च।
एवं पश्चिमसन्ध्यासु यज्विनां भयमादिशेत् ॥"

अपरासु – मध्याह्नसन्ध्यास्विति बोद्धव्यम्।

गार्गीये---"प्राक् सन्ध्यायां नागराणां मध्याह्ने यायिनान्तथा।
ततः पश्चिमसन्ध्यायां यज्विनाम्भयमादिशेत् ॥"

मध्याह्नादिषूल्कापाते शान्तिमाह—

नारदः--अत्र शान्तिं प्रवक्ष्यामि येन सम्पद्यते शुभम्।
दधिमधुसमायुक्तं सिद्धान्नं घृतमिश्रितम् ॥
चारुं चाथ स्वदैवत्यं कृत्वा चैवं विधानतः।
जुहुयात्पञ्चसाहस्रं जातवेदसि मन्त्रवित् ॥"

स्वदैवत्यमग्निदैवत्यमिति।

वराहः--तारा फलपादकरी फलार्द्धदात्री च कीर्त्तिता धिष्ण्या।
तिस्रः सम्पूर्णफला विद्युदथोल्काशनिश्चापि ॥

धिष्ण्योल्के पक्षफले त्र्यहाच्चैवाशनिः षडहमन्ये"। अन्ये - विद्युत्तारे।

इत्युल्काद्भुतम्।

अथ विद्युदद्भुतम्

**मयूरचित्रे**--"मुक्तावलीनिभां स्निग्धां विद्युतं रजतप्रभाम्।
मेघमध्यगतां दृष्ट्वा सुभिक्षं क्षेममादिशेत्।।
उदक्पश्चिमपूर्वासु दिक्ष्वेशान्याञ्च विद्युतः।
वृष्टिर्वायव्यभागे च विज्ञेयः पवनोद्गमः।।
रक्तभानीलपर्यन्ता यदा विद्युत्प्रकाशते।
आग्नेयेऽथ दिशो भागे स्वल्पम्बर्षति वासवः।।
शस्त्रसम्पातभूयिष्ठं याम्ये तु भयमादिशेत्।
समन्ताद्यदि दृश्येरन दिक्षु सर्वासु विद्युतः।
सप्तरात्रं महावर्षं घोरञ्चैव विनिर्दिशेत्।।"

**वराहः**--तन्वी प्रलम्बा विजयाय दीर्घा तडिद्घनस्फूर्जितवर्जिता च।"

आषाढचतुर्थ्यां पञ्चम्यां वा विद्युत्स्फुरणवाताभ्यां साम्वत्सरिकशुभाशुभं निरूपणीयम। तदाह **भार्गवीये**--

"आषाढशुक्ले नियतं विद्युल्लक्षणमद्भुतम्।
वर्णरूपविकारांश्च दिशो भागान शुभाशुभान।।
चतुर्थीं पञ्चमीञ्चैव परीक्षेत प्रयत्नतः।
अतिवृष्टिमनावृष्टिं भावाभावौ तथैव च।।
सर्वशस्येषु निष्पत्तिं विद्युतो दर्शयन्ति हि।
ऐन्द्र्यां चेत्स्फुरते विद्युदैन्द्रश्चापि हि मारुतः।।
सुभिक्षं क्षेममारोग्यं निवृत्तिञ्च विनिर्दिशेत्।
आग्नेय्यां चेदुभौ स्यातां भयन्तत्र महद्भवेत्।।
अनावृष्टिञ्च लोकस्य शस्त्राग्निभयमेव च।
याम्यायां स्फुरते विद्युद्याम्यश्चापि हि मारुतः।।
विषमां तु समां विद्याद्व्याधिमृत्युभयाकुलाम्।"

**समा**—सम्वत्सरम्।

"कनीयसी तु नैरृत्यां तथा वह्नीतिका समा।
मध्यमा शस्यसम्पत्स्याद्वारुण्यां व्याधिसंकुलाम्।।

पतङ्गदंशमशका वायव्यां मध्यशस्यदाः ।
अतिवारिभयम्विद्यात्सौम्यायां भूरि सम्पदम् ॥
निवृतिः शस्यसम्पत्तिः प्रधानैशानगोचरे ।
प्रतिलोमे मेघवाते ईतिबाहुल्यमादिशेत् ॥
शुभायां स्पन्दमानायामनिष्ठा स्पन्दते यदि ।
सम्पद्यते महाशस्यं महांश्च स्यादुपद्रवम् ॥
अशुभा स्पन्दते पूर्वा यदा पश्चाच्च शोभना ।
सुवृष्टिमेव तत्राहुर्न्न च शस्यं समृद्धति ॥
यदा तु स्पन्दते सर्वाः विषमां वृष्टिमादिशेत् ॥"

अत्रानुक्तविशेषशान्तिषु विद्युदुत्पातेषु सावित्रीमन्त्रकरणकलक्षहोमादिका शान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या।

मयूरचित्रे--"साधारणी शान्तिः कर्त्तव्ये" त्युक्तम्। मत्स्यपुराणादौ वृष्टयद्भुतोक्ता शान्तिरित्युक्तम्। "फलपाकस्तु षाण्मासिक" इति।

## इति विद्युदद्भुतम्।

## अथ वाताद्भुतम्

मत्स्यपुरणे--"वायुः सशर्करो रूक्षः सर्वविघ्नसमन्वितः ।
प्रतिलोमस्तथाऽतीव विज्ञेयो भयकृद्द्विज ॥

मौशले वृष्णिक्षयनिमित्तम्--

"ववुर्वाताः सनिर्घाता रूक्षाः शर्करवर्षिणः ॥"

वनपर्वणि सौगन्धिकाहरणे भीमपराजयनिमित्तम्--

ततो वायुर्महान् शीघ्रो नीचैः शर्करवर्षिणः ।
प्रादुरासीत्खरस्पर्शः सङ्ग्राममभिचोदयन् ॥"

बार्हस्पत्ये- "वाति चाकालजो वायुर्घोरः शवर्करवर्षिणः ।
पातयन् वृक्षवेश्मादि गर्जयन्निव भीषणम् ॥

सप्ताहमथवा पक्षमनुबध्नाति दारुणम् ।
ततो यदि न वर्षेत घोरं शस्त्रभयं भवेत् ॥"

अथ दिक्फलम् । तत्र गर्गः-

"पूर्वोऽभ्रजननो वायुरितरोऽभ्रविनाशनः ।
उदग्जनयते वृष्टिम्वर्षत्येव च दक्षिणः ॥"

उदग्जनयते वृष्टिमिति हिमसमयव्यतिरेकेण पराशरः - तत्र पूर्वो मेघानां संजननः । पश्चिमो विनाशनोऽन्यत्र नभोनभस्योः । नित्यं वर्षायोत्तरः । दक्षिणोऽभ्रसंप्लवकरो मन्दवर्षाणि यच्छत्यपि वाऽन्यजातजं वर्षम् । नैर्ऋतो वायव्यश्चाभ्रवान् महावर्षाय । ऐशान्यो मृदुरपि वर्षाय । नानावातसम्पातो महावर्षाय । सर्वेषां चान्यवातकृतानामभ्राणामुपसृष्टवर्षाणां तत्प्रतिलोमो विनाशाय । अनुपसृष्टवर्षाणान्तु महावर्षाय । पूर्वश्चेन्महाशब्दो नीचैर्बलाहकानामाकर्षी महावर्षायैव स्यात् । यस्याञ्च दिशि पूतिगन्धिनो निमित्तमागच्छेयुस्तस्यां दिशि शस्त्रकोपजननं विद्यात् ।

अथ समयफलम्, तत्र पराशरः-"ग्रीष्महेमन्तयोश्चैन्नाभिवर्षेद्वर्षाणां सम्पदङ्कुर्यात् । आधानकाले शर्करावर्षिणो नीचैःस्वराः खरवपुश्च शस्यन्ते ।

पूर्वादिदिग्वातफलमभिधायाह पराशरः--सर्वेष्वेवातिमात्रेष्ववर्षेषु शीर्णेषु सप्तरात्रपरेषु भयं महावर्षम्बिद्यात् । द्वादशरात्रपरेषु महावर्षं राजमृत्युं वा । पक्षपरेषु भयमेव च । तत्र क्षुद्भयमैन्द्रे । आग्नेये क्षुच्छस्त्रभयं दस्युतो राजदेशविनायोरन्यतरम् । याम्ये मूलफलपुष्पघातमुत्पातातङ्कपिटकभयम् । नैर्ऋते कृमिपतङ्गदंशमशकक्लेशशस्त्रप्रादुर्भावमीतिञ्चाधिकाम् । वारुणे फलपुष्पदमारोग्यं वा । वायव्ये क्षुच्छस्त्रभये राजदेशविनाशयोरेकतरम् । सौम्ये क्षेमसुभिक्षम् । ईशाने शस्यसम्पदम् । सर्वतो दिग्भ्यस्तु युगपन्महाराजभयं सर्वदेति ।

आषाढपौर्णमास्यान्तु विशेषमाह पराशरः--अतोऽनन्तरमाषाढीसंयुक्ते शशिनि सुरभिरनुकूलः स्पर्शवान्मारुतः पूर्वः पूर्वोत्तर उत्तरो वर्षशस्यातिवर्षकरः । नैर्ऋत्याग्नेययाम्यवारुणवायव्यो मध्यशस्यवर्षकराः । एतद्विपर्यये-

विपर्ययाय। आधानविसर्गान्तभागेषु निमित्तानि प्रावृष्याद्यन्तेषु मध्येषु च फलन्तीति। अथ शान्तिमाह--

मत्स्यपुराणे-"त्र्यहातिरिक्ते पवने रूक्षे सर्वदिगुद्भवे।
वैकृते वातजे वाऽपि वायव्या शान्तिरिष्यते॥

वायोश्च पूजा द्विजशक्तुभिश्च हुत्वा तदुक्तांश्च जपेच्च मन्त्रान्।
दद्यात्प्रभूतं परमान्नमत्र सदक्षिणन्तेन शमोऽस्य भूप॥"

वराहः--वायव्येष्वेषु नृपतिर्वायुं शक्तुभिरर्चयेत्।
अवायोरिति पञ्चार्चा जप्तव्याः प्रयतैर्द्विजैः।
ब्राह्मणान् परमान्नेन दक्षिणाभिश्च तर्पयेत्।
वह्वन्नदक्षिणाहोमाः कर्त्तव्याश्च प्रयत्नतः॥

वार्हस्पत्ये -वायव्येष्वेषु नृपतिर्वायुं शक्तुभिरर्चयेत्।
द्वाविमौ वाताविति च जप्तव्यं प्रयतैर्द्विजः॥
वह्वन्नदक्षिणाहोमाः कर्त्तव्याश्च प्रयत्नतः।
वायव्यामेव शान्तौ च वायोः सवितुरीरयेत्॥
आदावन्ते च मध्ये च तथैव मनुजो जपेत्।
गुरवे दक्षिणान्दद्याद्वायवीं शान्तिमद्भुताम्॥"

मयूरचित्रे -वहन्ति वाताः खरं निरभ्राःस्तनितस्वनाः।
भयन्तत्र विजानीयाच्छान्तिः साधारणी त्विह।

इति वाताद्भुतम्।

## अथ मेघाद्भुतम्

तत्राषाढे स्वातीसंयुक्ते चन्द्रमसि शुभाशुभमेघलक्षणमाह पराशरः--स्वातिसंयुक्ते चन्द्रमसि घनस्निग्धस्तनयित्नुविद्युन्मण्डलनिरम्भोदैर्नभसोऽवच्छादन सुभिक्षक्षेमाय। वातप्रादुर्भावोल्कानिर्घातकम्पोपघातैस्तद्विपर्ययाय च।

वराहः -"ध्वजातपत्र -- पर्वतद्विपाश्वरूपधारिणः।
जयाय सन्ध्ययोर्घना रणाय रक्तसन्निभाः॥

पलालधूमसञ्चयस्थितोपमा वलाहकाः ।
बलाल्परूक्षमूर्त्तयो विबर्द्धयन्ति भूभृताम् ॥
निन्दितसत्त्वपिशाचविचित्राः पिशितभुगाकृतयः परुषाश्च ।
वज्रमुचः क्षतजास्रमुचो वाऽनलभयमाशु घनाः कथयन्ति" ॥

अथ गर्जनफलम्, **बृहद्यात्रायाम्** —

"स्फूर्जितं सलिलकुम्भनिषेकज्योतिषार्णवमथं विजयाय" ।

अथ वर्णफलम्, **भार्गवीये** —

"श्वेतः श्यामो हरित्कृष्ण इति वर्णा व्यवस्थिताः ।
प्रोक्ता मेघेषु चत्वारो व्यक्ताः स्निग्धाश्च पूजिताः ॥
स्निग्धेषु व्यक्तवर्णेषु चतुर्ष्वेतेषु नारद ।
सन्ध्योपमाभ्रवर्णेषु वर्षन्तेष्वति - निर्दिशेत् ॥
रूपेषु चम्पकाभेषु मेघष्वपि च वर्षति ।
एभ्यश्च विपरीता ये ते वृष्टिक्षयदा घनाः ॥
मयूरगलपद्मेन्दुकांस्यनीली - निभानि तु ।
सन्ध्यास्वभ्राणि दृश्यन्ते तीव्रं वर्षमुपस्थितम् ॥
काञ्चनाभे जनारिष्टं सर्पिः सर्पनिभेषु च ।
हेमपावकवर्णेषु विपुलेषु जनक्षयः" ॥

**मयूरचित्रे** — "पद्मिनीपत्रसंकाशा घना मत्स्यसमत्विषः ।
चन्द्रार्कावपगूहन्ते घना यच्छन्ति भूरपि: ॥
आषाढ्यामैन्द्रदिग्भागे मेघस्तनितवायुषु ।
समग्रांश्चतुरो मासान् सम्यग्वर्षति वासवः" ॥

अथ रोहिणीचन्द्रयोगे विशेषो **वराहसंहितायाम्** —

"पूर्वोद्भूतैः शस्यनिष्पत्तिरब्दैराग्नेयाशासम्भवैरग्निकोपः ।
याम्ये शस्यं क्षीयते नैर्ऋते ऽर्धं पश्चाज्जातैः शोभना वृष्टिरब्दैः ॥
वायव्योत्थैर्वातवृष्टिः क्वचित्तु पुष्टा वृष्टिः सौम्यकाष्ठासमुत्थैः ।

पुष्टं शस्यं स्थाणुदिक्संप्रवृद्धिर्वायुश्चैवं दिक्षु धत्ते फलानि" ॥
आषाढशुक्लचतुर्थीपञ्चम्योर्विशेषमाह **भार्गवीये** --

"चतुर्थी पञ्चमी चैव प्रतीक्षेत्त यदा शुचिः ।
आषाढशुक्ले नियतं विद्युद्दर्शनमद्भुतम् ॥
सविद्युतः सस्तनिता दर्शयन्ति यदा शुभम् ।
पूर्वोत्तरान्दिशं मेघाः सुवृष्टिं ताम्बिजानते ॥
पूर्वतः पूर्ववृष्टेषु दृश्यन्ते यदि तोयदाः ।
दक्षिणावर्त्त शुभदाः सुवृष्टिमिति निर्द्दिशेत् ॥
आग्नेयेष्वतिवृष्टिः स्याच्छस्यञ्चापि विपद्यते ।
याम्येषु विषमावृष्टिर्व्याधिं मृत्युञ्च निर्द्दिशेत् ॥
वर्धयित्वा नैर्ऋतेषु सामान्यफलदायिनी ।
वारुणेषु पयोदेषु मध्यमं शस्यमादिशेत् ॥
वायव्यां मध्यमं शस्यं यदि वर्षति वासवः ।
तत्रातिवृष्टिर्भवति स्वल्पं वीजानि वापयेत् ॥
वर्णस्नेहोपपन्नाश्च पूर्ववृष्टाः पयोधराः ।
सौम्या यत्र प्रवर्षेयुस्तत्र सर्वगुणाः स्मृताः" ॥

**मयूरचित्रे** --"नानापक्षिमृगाकाराः शृगालोष्ट्राश्वसन्निभाः ।
उदयास्तमये मेघाः कुर्वन्ति जगतो भयम् ॥
अत्र साधारणी शान्तिः कर्त्तव्या गर्गभाषिता ।
प्रावृट्काले च मेघेषु दण्डशूलोर्मिभेषु च ॥
दस्युस्तेयक्षयो युद्धं भयञ्चैव महद्भवेत् ।
अविच्छिन्ना यदा व्यक्ता गदायाः सदृशास्तथा ॥
कपालसदृशाकारा मेघा दस्युभयावहाः ।
वज्रपरिघतुल्येषु युद्धं मेघेषु जायते ॥
एषूत्पातेषु दिव्योक्ता प्रथमा शान्तिरिष्यते ।
रथाङ्गसदृशाकारा मेघाः प्रासादसन्निभाः ॥
कबन्धशिरः संकाशा नृणामाहुर्महद्भयम् ।

द्वितीया शान्तिरेतेषु कर्त्तव्या दिव्यचोदिता ।।
पताकाध्वजसंकाशाश्चक्रवर्त्तिवधं घनाः ।
ब्रुवते दस्युसम्भूतिं शस्यनाशं रणन्तथा ।।
प्रथमां वा द्वितीयां वा दिव्यकाण्डप्रचोदिताम् ।

शान्ति कुर्यादिति शेषः । **फलपाकस्तु** "आन्तरिक्षत्वात्षाण्मासिकः फलपाकः" इति । एतदशक्तौ प्रभूतकनकान्नगोमहीदानादिका शान्तिरौत्सर्गिकीति ।

**पराशरः**--अथाभ्रविकारेषु वृक्षपरिघस्तनितसंचयात्मकेषु सद्यः फलमादिशेत् । अत्र सप्तरात्राद्वा षण्मासात्तु गर्भकालजं वर्षम् । तत्र वृक्षेष्वेव तावद्यदि सन्ध्यायां पीतमाञ्जिष्ठो दृश्येताभ्रवृक्षः शान्तायां दिशि राज्ञो विनाशाय स्यात् । स एव दीप्तायां दक्षिणतो वाऽर्कस्य हस्त्यश्वयोधानामन्यतमश्रेष्ठविनाशाय । कपिलः कृष्णो वा तथा भाग एव राज्ञो भयाय स्यात् । श्वेतो विजयाय । सन्ध्याकृतिश्चेत् पीतमाञ्जिष्ठनीलो वा हन्याद्राजानम् । पीतवर्णोऽर्कस्य पच्यमानः सद्यो वल्कोपाय । पीताग्रश्चेद्घनः सन्ध्यायां प्रकाशिताहितक्षयाय । बहुकपिलस्तु ब्राह्मणानां पीडायै । लोहितः क्षत्रियाणाम् । हरितो वैश्यानाम् । कृष्णः शूद्राणाम् । चित्रो गणकानाम् । वहवश्चेद् गर्दभरूपिणोऽरुणवर्णा विलपिनः परुषाः सर्ववर्णोपतापाय । धूम्रश्चेद् दृश्यमान आदित्यमियादभ्रवृक्षाकारोऽपि महते भयाय स्यात् । अच्छिन्नश्वेताग्रेण नभसो मध्यस्पृक् सद्यो वर्षाय । तथैव सूर्यमावृत्य तिष्ठन् नीलश्वेताग्रो यदि वा वंशवीरणगुल्माभ्रवृक्षादुदीयादस्तमियाद्वार्कः । एवमेव त्रिरूपेषु मूलवत्सु विशालेषु स्तनयित्नुनिर्घोषः सतडित्कलापस्तमधिसप्ताभिहन्याच्छादयंस्तामभियुञ्जीत राजेति ।

**वराहः**—"दधिसदृशाग्रो नीलो भानुच्छादी खमध्यगोऽभ्रतरुः ।
पीतच्छुरिताश्च घना घनमूलास्ते भवन्ति वृष्टिकराः ।।
अनुलोमगेऽभ्रवृक्षो समुद्गते यायिनो नृपस्य वधः ।
बालतरुप्रतिरूपे युवराजामात्ययोर्मृत्युः ।।"

**पराशरः**--"आषाढीसंयुक्ते शशिनि स्निग्धाभ्रवृक्षप्रादुर्भावः प्रावृड्वृद्धये ।"

पराशरः--अथाभ्रपरिघस्त्रिवर्णो भानुमावृत्य तिष्ठेन्महते जनक्षयाय स्यात। कपिलो वातवर्षाय, रक्तः शस्त्रकोपाय, मञ्जिष्ठोऽग्निभयाय, अरुणो वाताय, पीतोऽन्नक्षयाय द्विपदानाञ्च रोगाय, कृष्णछिद्रः सद्योवर्षाय, ताम्रः शस्त्रोत्पाताय पशूनाञ्च हरणाय, श्यामो गन्धर्वपीडायै चौरवृद्धये वा, स्निग्धनीलो महावर्षाय, श्वेतः सुभिक्षायेति।

वृहद्यात्रायां वराहः—

"नृपविपत्तिकरः परिघः सितः क्षतजतुल्यवपुर्बलकोपनः।
कनकरूपधरो वलवृद्धिदः सवितुरुद्गमकालसमुत्थितः॥"

स्कन्दपुराणे तारकवधनिमित्तम्—

"रक्तनीलाश्च परिघास्तिष्ठन्त्यावृत्य भास्करम्।"

भीष्मपर्वणि कुरुपाण्डवक्षयनिमित्तम्—

"सकवन्धश्च परिघो भानुमावृत्य तिष्ठति।"

पराशरः - अथान्तः सूक्ष्मा रक्ताः परुषा नैर्ऋत्यान्दिशि प्रपद्यमाना राजवधाय स्युः। शेषा रश्मिभिः समानफलाः। अथाभ्राणि संचितानि सेनानगरकवन्धरूपाणि संग्रामाय। तत्र दिक्षु वर्णेषु यथास्वं जयपराजयं विद्यात्। विमूढानि घनानि महान्ति प्राकारशिखररूपाणि महावर्षाय पारावतमयूरवर्णानि च। तथा नृपजलचरामोदाय घटरूपाण्युपरिमण्डलवाद्याकृतीनि। तथा विद्युत्स्तनयित्नुमन्ति सुजातानि सूर्यस्य पुरस्तात् तान्यर्यमनाम्नः प्रदक्षिणपरिवर्त्तीनि। मध्याह्नरात्र्योश्च वायुस्तनयित्नुमन्त्यभिवर्षाय। पीतलोहितापीतनीलातिमात्रसंचयान्यनृतौ शस्त्राय वर्षाय च। सूक्ष्माणि त्वव्यक्तरागाणि विच्छिन्नमूलान्यनर्थायातिवातवेगाय वा। तथा वराहाश्वखरदंष्ट्रिरूपाणि शीघ्रनिपातीनि शस्यपरोधायावग्रहाय वेति।

अत्रानुक्तविशेषशान्तिषु प्रथमा द्वितीया वा प्रभूतकनकान्नदानादिका शान्तिर्वा कर्त्तव्येति।

वराहः - "अन्नं जगतः प्राणाः प्रावृट्कालस्य चान्नमायातम्।
यस्मादतः परीक्ष्यः प्रावृट्कालः प्रयत्नेन॥

केचिद्वदन्ति कार्तिकशुक्लान्तमतीत्य गर्भदिवसाः स्युः ।
नतु तन्मतं बहूनां गर्गादीनां मतम्वक्ष्ये ॥
मार्गशिरःसितपक्षप्रतिपत्प्रभृतिक्षपाकरेऽषाढाम् ।
पूर्वाम्वा समुपेते गर्भाणां लक्षणं ज्ञेयम् ॥
मृगशिर्षाद्या गर्भा मन्दफलाः पौषशुक्लजाताश्च" ॥

**पराशरः** - माघेन श्रावणम्बिद्यान्नभस्यं फाल्गुनेन तु ।
चैत्रेणाश्वयुजं प्राहुर्वैशाखेन तु कार्त्तिकम् ॥
शुक्लपक्षेण कृष्णन्तु कृष्णपक्षेण चेतरत् ।
रात्र्यह्नोश्च विपर्यासं गर्भकाले विनिश्चयेत् ॥"

**वटकणिकायां**—"पौषासितपक्षाद्यैः श्रावणशुक्लादयो विनिर्द्देश्याः ।
कृष्णेन शुक्लपक्षः सितेन कृष्णो निशा दिनोत्थेन ॥
रात्र्याहः सन्ध्यायां सन्ध्यादिगव्यत्ययाज्जलदाः ॥"

**वराहः**—'पौषस्य कृष्णपक्षेण निर्दिशेच्छ्रावणस्य सितम् ।
माघसितोत्था गर्भाः श्रावणकृष्णे प्रसूतिमायान्ति ॥
माघस्य कृष्णपक्षेण विनिर्दिशेद भाद्रपदशुक्लम् ।
फाल्गुनशुक्लसमुत्था भाद्रपदस्यासिते विनिर्देश्याः ॥
तस्यैव शुक्लपक्षोद्भवाश्च ये तेऽश्वयुक्शुक्ले ।
चैत्रसितपक्षजाताः कृष्णेऽश्वयुजश्च वारिदा गर्भाः ।
चैत्रासितसम्भूताः कार्त्तिकशुक्लेऽभिवर्षन्ति ॥
सितपक्षभवाः कृष्णे शुक्ले कृष्णा द्युसम्भवा रात्रौ ।
नक्तप्रभवाश्चाह्नि सन्ध्याजाताश्च सन्ध्यायाम् ॥
पूर्वोद्भूताः पश्चादपरोत्थाः प्राग्भवन्ति जीमूताः ।
शेषास्वपि दिक्ष्वेवं विपर्ययो भवति वायोश्च ॥"

**वटकणिकायां**—सार्धैः षड्भिर्मासैर्गर्भविपाकः स्वनक्षत्रे ।
**वराहः** - यन्नक्षत्रमुपगते गर्भश्चन्द्रे भवेत्स चन्द्रवशात् ।
पञ्चनवते दिनशते तत्रैव प्रसवमायाति ॥

पञ्चनिमित्तैः शतयोजनं तदर्धार्धमेकहान्याऽतः।
वर्षति पञ्चनिमित्ताद्रूपेणैकेन यो गर्भः॥
वर्षा पञ्चनिमित्तो द्रोणो वृष्ट्याढकास्त्रयो मरुता।
षड् विद्युता नवाभ्रैः स्तनितेन द्वादश प्रसवेत॥"

गर्भहेतूनाह वटकणिकायाम् —

"पञ्चनिमित्तैः शतयोजनं तदर्धार्धमेकहान्याऽतः।
वर्षति पञ्चनिमित्ताद्रूपेणैकेन यो गर्भः॥
वर्षा पञ्चनिमितो द्रोणो वृष्ट्याढकास्त्रयो मरुता।
षड् विद्युता नवाभ्रैः स्तनितेन द्वादश प्रसवे॥
शस्तानि मार्गशीर्षाच्छीतहिममेघवायुपृषतानि।
स्तनिततडिज्जलमारुतघनतापान्यतिशयं च वैशाखे।
पृथुला वहुलजलदास्त्वतिपृथुलजलचारिसत्वनिभाः।
स्निग्धसितवहुलपरिवेषपरिवृतौ हिमकरोष्णकरौ॥
नृखगमृगा मुदिता निरुपहतास्तरवः।
वियदमलञ्च यदा भवति तदा सुसमा॥
स्निग्धतडित्प्रतिसूर्यकमत्स्याः शक्रधनुः प्रथमापरसन्ध्या।
शान्तरवा मृगपक्षिमनुष्याः शक्रशशीश्वरदिङ्मरुतश्च॥"

वृहत्संहितायां — ह्लादि मृदूदकशिवशक्रदिगुत्थमारुते वियद्विमलम्।
स्निग्धसितबहुलपरिवेषपरिवृतौ हिममयूखार्कौ॥
पृथवहुलस्निग्धघनं घनसूचीक्षुरकलोहिताभ्रयुतम्।
काकाण्डमेचकाभं वियद्विशुद्धेन्दुनक्षत्रम्॥
सुरचापमेघगर्जितविद्युत्प्रतिसूर्यकाः शुभाः सन्ध्याः।
शशिशिवशक्राशास्था शान्तरवाः पक्षिमृगसङ्घाः॥
विपुलाः प्रदक्षिणचराः स्निग्धमयूखा ग्रहा निरुपसर्गाः।
तनवश्च निरुपसृष्टांकुरा नरचतुष्पदा हृष्टाः॥
गर्भाणां पुष्टिकराः सर्वेषामेव योऽत्र तु विशेषः।
स्वर्तुस्वभावजनितो गर्भविवृद्ध्यै तमभिधास्ये॥

पौषेऽथ मार्गशीर्षे सन्ध्यारागोम्बुदाः सपरिवेषाः ।
नात्यर्थं मृगशीर्षे शीतं पौषेऽति हिमपातः ॥
माघे प्रबलो वायुस्तुषारकलुषद्युती रविशशाङ्कौ ।
अतिशीतं सघनस्य च भानोरस्तोदयौ संस्थौ ॥
फाल्गुनमासे रूक्षश्चण्डः पवनाभ्रसम्प्लवाः स्निग्धाः ।
परिवेषाश्चासकलाः कपिलस्ताम्रो रविश्च शुभः ॥
पवनघनवृष्टियुताश्चैत्रे गर्भाः शुभाः सपरिवेषाः ।
घनपवनसलिलविद्युतस्तनितैश्च हिताय वैशाखे ॥
मुक्तारजतनिकाशास्तमालनीलोत्पलाञ्जनाभासाः ।
जलचरमत्स्याकारा गर्भेषु घनाः प्रभूतजलाः ॥
तीव्रदिवाकरकिरणाभितापिता मन्दमारुता जलदाः ।
रुषिता इव धाराभिर्विसृजन्त्यम्भः प्रसवकाले ॥"

**वटकणिकावराहसंहितयोः--**

"पवनसलिलविद्युद्गर्ज्जिताभ्रान्वितो यः
स भवति बहुतोयः पञ्चरूपाभ्युपेतः ।
विसृजति बहुतोयं गर्भकालेऽतिभूरि
प्रसवसमयमित्वा शीकराम्भः करोति ॥"

**वटकणिकायां**--गर्भोपघातलिङ्गान्युल्काशनिभूमिकम्पनिर्घाताः ।
ग्रहयुद्धभङ्गं शिखिनः खपुरं रजो वाऽपि ॥"

**वृहद्यात्रायां**--गर्भोपघातलिङ्गान्युल्काशनिपांशुपातदिग्दाहाः ।
क्षितिकम्पखपुरकीलककेतुग्रहयुद्धनिर्घाताः ॥
रुधिरादिवृष्टिवैकृतपरिवेषेन्द्रधनूंषि दर्शनं राहोः ।
इत्युत्पातैरेतैस्त्रिविधैरन्यैश्च क्षीयते गर्भः ॥
स्वर्तुस्वभावजनितैः सामान्यैर्यैश्च लक्षणैर्वृद्धिः ।
गर्भाणां विपरीतैस्तैरेव विपर्य्ययो भवति ॥
भाद्रपदाद्वयविश्वाम्बुदेवपैतामाहेष्वथर्क्षेषु ।
सर्वेष्वृतुषु विवृद्धो गर्भो बहुतोयदो भवति ॥"

वराहः-"मार्गशिरादिष्वष्टौ षट्षोडशविंशतिश्चतुर्युक्ता।
विंशतिरथ दिवसत्रयमेकतमर्क्षेण पञ्चभ्यः ॥
क्रूरग्रहसंयुक्ते करकाशनिमत्स्यवर्षदा गर्भाः।
शशिनि रवौ वा शुभसंयुतेक्षिते भूरिवृष्टिकराः॥
गर्भसमयेऽतिवृष्टिर्गर्भाभावाय निर्निमित्तकृता।
द्रोणाष्टांशेऽभ्यधिके वृष्टेर्गर्भः स्रुतो भवति॥
गर्भः पुष्टः प्रसवे ग्रहोपघातादिभिर्यदि न वृष्टिः।
आत्मीयगर्भसमये करकामिश्रन्ददात्यम्भः ॥
काठिन्यं याति यथा चिरकालधृतं पयः पयस्विन्याः।
कालातीतं तद्वत्सलिलं काठिन्यमुपयाति ॥"

काश्यपः-"ज्येष्ठस्य शुक्लाष्टम्यान्तु नक्षत्रे भगदैवते।
चत्वारो धारणाः प्रोक्ता मृदुवातसमीरिताः॥
नीलाञ्जननिभैर्मेघैर्विद्युत्स्तनितमारुतैः ।
विस्फुलिङ्गरजोधूमैश्छन्नौ शशिदिवाकरौ॥
एकरूपाः शुभा ज्ञेया अशुभाः सान्तराः स्मृताः।
अनार्यैस्तस्करैर्घोरैः पीडा चैव सरीसृपैः॥"

पराशरः-विशेषतो ज्येष्ठबहुलपक्षद्वादश्यादिदिनचतुष्टयन्धारणङ्गर्भाणां क्रमात्सप्ताहोरात्रस्रावो मासविघाताय।

श्रीपतिसंहितायां-पौषे मूलभरण्यन्तं चन्द्रचारेण गर्भति।
आर्द्रादितो विशाखान्तं सूर्यचारेण वर्षति॥
एवं चैत्रे तथा ज्येष्ठे ज्ञात्वा गर्भं वदेत्फलम्॥

अत्रानुक्तविशेषशान्तिषु सावित्रीमन्त्रकरणकलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्येति।

## इति मेघाद्भुतम्।

## अथ प्रवर्षणाद्भुतम्

वराहः-"ज्यैष्ठ्यां समतीतायां पूर्वाषाढादिसंप्रविष्टेन।
शुभाशुभं वा वाच्यं परिणामं वाऽम्भसस्तज्ज्ञैः॥

येन धरित्री मुदिता जनिता वा बिन्दवस्तृणाग्रेषु ।
वृष्टेन तेन वाच्यं परिमाणं वारिणः प्रथमम्" ॥

**वटकणिकायां**--"द्वादश शक्रा आशास्तत्त्वानि नृपा धृतिर्नखास्तिथयः ।
विश्वे मनवोऽसुकरास्तत्त्वानि नृपा नृपा वेदाः ॥
विंशतिरिन्द्रा वेदाः शक्राः क्षितिपा नखाश्चतुर्दश तु ।
भूपा वेदास्तिथयस्तत्त्वानि नृपाः क्रमाद् द्रोणाः ॥
अश्विनिपूर्वेष्वेते ज्ञेया निरुपद्रवेषु पूर्णफलाः ।
पापग्रहाभिभूतेषु वृष्टी रोगातिभयजनकः" ॥

वसुकराः--पञ्चविंशतिः । **बृहत्संहितायाम्** –

रविरविसुतकेतुपीडिते भे क्षितितनयत्रिविधाद्भुताहते च ।
भवति नहि शुभं नचापि वृष्टिः शुभसहिते निरुपद्रवे शिवं च ॥

प्रवर्षणकाले यत्र नक्षत्रे देशे वा वृष्टिस्तदुक्तं **वराहसंहितायाम्**--

केचिद्यथाभिवृष्टं दशयोजनमण्डलं वदन्त्यन्ये ।
गर्गवशिष्ठपराशरमतमेतद्द्वादशान्तपरम्" ॥

यथाऽभिवृष्टमिति प्रवर्षणकाले यत्र देशे वृष्टिः प्रसवकालेऽपि तत्रैव वर्षतीत्याहुः ।

**काश्यपः**—"यत्र प्रवर्षणे वृष्टौ वासवस्तत्र वर्षति ।
वर्षाकालं समासाद्य यद्युत्पातो न दृश्यते" ॥

दशयोजनं मण्डलं वदन्त्यन्य इति । प्रवर्षणकाले यत्र देशे वृष्टिस्ततो दशयोजनान्तराले वर्षतीत्येवं वदन्त्यन्ये । तथा च

**देवलः** "प्रवर्षणे यदा वृष्टो वर्षमाणः शतक्रतुः ।
वर्षाकालं समासाद्य वर्षते दशयोजनम्" ॥

**गर्गः**---आषाढादिषु वृष्टषु वर्षाकाले विनिर्दिशेत् ।
योजनानि दशद्वे च वर्षते पाकशासनः" ॥

**वराहः**-- 'येषु च भेष्वतिवृष्टं भूयस्तेष्वेव वर्षति प्रायः ।
यदि नाप्यादिषु वृष्टं सर्वेषु तदा त्वनावृष्टिः" ॥

वटकणिकायां "युग्माजगोमत्स्यगते शशाङ्के रविर्यदा कर्कटकं प्रयाति।
जलं शताढं हरिकार्मुकेऽर्द्धमुक्तञ्च कन्यामृगयोरशीतिः॥
कुलीरकुम्भालितुलाभिधाने संवृद्धियुक्ता नवतिः समन्तात्"॥

पुनर्वसुप्रभृतिनक्षत्रयुतशुक्लप्रतिपत्सु प्रवर्षणजलप्रमाणमाह **पराशरः**— इह खलु शुक्लप्रतिपत्प्रभृतिवर्षं दशाकुलमाचक्षते। तस्यां यावदभिवृष्टे देशे वर्षतोऽपां प्रमाणमन्नशस्यप्रजाक्षेमलक्षणं वार्षिकमुपदेशयामः। **तत्रा-दित्ये** विंशतिद्रोणाभिवर्षा सर्वशस्यक्षेमारोग्याय। **पुष्ये** अष्टादशद्रोणेन पश्चादभिवृद्धवर्षाय जघन्यशस्यसम्पदे। **आश्लेषायां** वर्षवीजक्षेममाधूजनविघाताय त्रयोदशवष्टये। **पित्र्ये** शस्योदकविघातकरपर्वतीयनृपनिवृद्धि चतुर्दशद्रोणाभिवर्षणञ्च। **भाग्ये** चतुष्षष्टिमाढकाणां वर्षत्यपि च शस्यरोगवृद्धये। **आर्यम्णे** शतमाढकाणामभिवृष्टो जनानभिनन्दयति। **हस्ते** पञ्चदशद्रोणान् क्षेमशस्यसम्पदं विन्द्यात। **त्वाष्ट्रे** पञ्चषष्टिद्रोणाभिवर्षी सर्वजन्तवृद्धये। **स्वातौ** चतुरः शस्यविघातमक्षेमं चादिशेत्। **ऐन्द्राग्ने** विंशतिद्रोणाभिवर्षी राज्ञां विरोधकृद्भवति। **मैत्रे** द्विसप्तकद्रोणाभिवष्टे नरेन्द्रोद्योगवणिग्बीजक्षीररोगवृष्टि विन्द्यात। **ऐन्द्रे** चतुर्द्रोणाभिवर्षी वीजान्युच्छेदयति। **मूले** तच्चतुर्गुणः सर्वशस्याभावायाक्षेमाय। **आप्ये** म्लेच्छसर्वशस्यव्याधिप्रावल्यम्। अष्टादशग्रहावसाने द्रोण न् षोडश वर्षन्ति। **हेमन्ते** वा **वैश्वदेवे** शस्यवृद्धिः क्षेमायाभीक्ष्णविंशतिपर्यन्तं द्रोणवर्षाय। **श्रवणे** मुखरोगातिसारज्वरशस्यप्रावल्यं वृष्टिद्रोणाश्चात्र षोडशैव। **वासवे** शीर्णरोगप्रावल्यम षोडशद्रोणवृष्टिश्च। **वारुणे** तच्चतुर्भागमपि च शस्त्रं दुर्भिक्षजननञ्च विद्यात। **आजे** अष्टादशद्रोणप्रततवर्षाप्रधानभूपतिविरोधाय। **आहिर्बुध्न्ये** चतुर्दशाढकवर्षा कुक्षिरोगशस्यदम्। **रेवत्यां** षोडशद्रोणाभिवर्षी शस्यक्षेमञ्च विद्यात। **अश्विन्यां** द्वादशद्रोणान् पश्चादभिवृष्टे एकदेशे निम्नेषु शस्यं निष्पादयति। **भरण्यां** पञ्चदशद्रोणाभिवर्षी भवत्यग्निचौरक्षुद्व्याधिकरः। **आग्नेये** अग्निदंष्ट्रिशस्त्रभयाय षोडशद्रोणवर्षाय च। **रोहिण्याम्** आढकशतवर्षा सर्वजगदामोदाय। **सौम्ये** विप्रशास्त्रव्याधिवृद्धये षोडशद्रोणवर्षाय। **आर्द्रायाम्** अष्टादशाढकवर्षा बीजशस्यभयायेति।

तथा–"आढकांश्चतुरो द्रोणानपां विद्यात्प्रमाणतः।
धनुः प्रमाणं मेदिन्यां विद्याद् द्रोणाभिवर्षणम् ॥
चतुर्विंशाङ्गुलानाहे द्विचतुष्काङ्गुलोच्छ्रिते।
भाण्डे वर्षाम्बुसपूर्णे ज्ञेयमाढकवर्षणे" ॥

वराहसंहितायाम् –

"हस्तविशालं कुण्डकमधिकृत्वाऽम्बुप्रमाणनिर्देशः।
पञ्चाशत्पलमाढकमनेन मिनुयाज्जलं पतितम्" ॥

अत्र प्रवर्षणोत्पातेषु वृष्टिविकारविहिता शान्तिः कर्त्तव्येति।

इति प्रवर्षणाद्भुतम्।

## अथातिवृष्ट्यद्भुतम्

वराहः–"दुर्भिक्षमनावृष्ट्यामतिवृष्टौ क्षुद्भयं परभयञ्च" ॥

वृद्धयात्रायां- सप्ताहं सततोऽन्यर्तौ वृष्टिर्हन्ति नराधिपम्" ॥

पराशरः–"त्र्यहादूर्ध्वं यदा वर्षेत्प्रबृद्धः पाकशासनः।
अनृतौ तस्य देशस्य प्रधानानाम्बधो भवेत्"।

वार्हस्पत्ये—"अनृतौ वर्षतेऽभीक्ष्णमृतुष्वेव न वर्षति।
अनारोग्यं भयञ्चैव प्रजानामभिनिर्द्दिशेत्" ॥

शोणितादिवृष्टौ–शोणिताभिवर्षं परचक्रागमाय" ॥

वार्हस्पत्ये–शोणितम्वर्षते यत्र तत्र देशे भयम्भवेत्" ॥

भयम् – शस्त्रभयम्। तथाहि

मात्स्ये- शोणितम्वर्षते यत्र तत्र शस्त्रभयम्भवेत्" ॥

भीष्मपर्वणि सेनावधनिमित्तम्-"प्रादुरासीदनभ्रे च वर्षं रुधिरकर्द्दमम्।
तथा शोणितवर्षञ्च पांशुवर्षञ्च भारत" ॥

मयूरचित्रे—रक्तवर्षे तथाऽकाशे सशब्दे नृपतेर्बधः।
पांशुतैलवसासर्पिर्वृष्टौ माण्डलिनाम्बधः" ॥

मात्स्ये अङ्गारपांशुवर्षे च नगरन्तद्विनश्यति।

मज्जास्थिस्नेहमांसानां जनमारभयम्भवेत् ।
पांशुजन्तूपलानान्तु वर्षे स्याद्रोगजम्भयम्" ॥

**विष्णुधर्मोत्तरे**—"फलपुष्पशमीधान्यं हिरण्यं वा भयावहम्" ॥

वृष्टिमिति सम्बन्धः ।

**औशनसे**--'अङ्गारम्बालुकाधान्यं यत्र देवः प्रवर्षति ।
क्षिप्रन्तत्र भयं घोरं प्रवर्त्तेत चतुर्विधम् ॥
मांसवर्षञ्च मघवा यत्र देशेषु वर्षति ।
अस्थीनि रुधिरं मज्जां वसां चैतेषु वै ध्रुवम् ॥
परचक्रागमः शीघ्रं विज्ञेयं सुमहद् भयम् ।
अहिताश्चात्र जायन्ते विपुला विकृतात्मकाः" ॥

**पराशरः**--लोमोपलासवक्षीरदधिमधुघृततैलमत्स्यभेकपक्षिशस्यवर्षणं दुर्भिक्षायेति ।

**औशनसे**--"सर्पान्मत्स्यान्पक्षिणो वा यत्र देवः प्रवर्षति ।
तत्र शस्याभिघातः स्याद्भयं चैव प्रवर्द्धते ॥
सुरासवं तथा क्षौद्रं सर्पिस्तैलं पयो दधि ।
यत्र वर्षति पर्जन्यः क्षुद्रोगस्तत्र जायते" ॥

**वृहद्यात्रायां**--"धान्यरसमद्यभोजनफलपुष्पस्नेहमांसवस्त्राणाम् ।
सिकतारजोवसासृक्सशर्कराङ्गारवर्षेषु ॥
सुतपत्नीक्षुद्रोगा नृपवेशचमूमरण - संक्लेशैः ।
भेदोपजापमन्त्रिव्याधिभयविनाशभयशोकाः ॥

**वार्हस्पत्ये**—"सूर्येन्दुवायुपर्जन्यो यष्टव्या वर्षवैकृते ।
अन्नानि सहिरण्यानि धान्यं गावश्च दक्षिणाः ॥
वैश्वदेवाश्च होतव्याः सर्वाद्भुतविनाशनाः ।
चतुर्णामपि वर्णानामभयं विद्यते ततः ॥
गुरवे च हयः श्वेतः सर्वलक्षणलक्षितः ।
शतं निष्काश्च दातव्या अलाभे तु गवां शतम ॥
वृष्टिर्यदा वर्षति रेणुवर्षं तस्योपरिष्टाद्धरितालवर्षम् ।

अदृष्टपूर्वं च यदा प्रवर्षेत्तदा वलं नश्यति पार्थिवस्य" ॥

मात्स्ये—सूर्येन्दुपर्जन्यसमीरणानां यागस्तु कार्यो विधिवन्नरेन्द्रैः ।
धनानि गोकाञ्चनदक्षिणाश्च देया द्विजानामघनाशनाय ॥

करकावृष्टौ च-"व्यलिखन्नः सितक्राभाः करका वदरोपमाः ।
शीतजातफलाकाराः पतन्त्य क्षेमकारणम् ।
छत्रध्वजरथाकाराश्चक्र - स्वस्तिकसन्निभा ।
शङ्खपद्मनिभै राज्ञः करकैर्भयमादिशेत् ।
मत्स्यकच्छपमण्डकशुक्तिशम्बूकसन्निभाः ।
वदन्त्युत्पातमास्तोयं दीयमानं जनैर्बहु ।
विल्वोदुम्वरतारादि कपित्थाम्रशिरोपमाः ।
पाताम्वश्निसङ्काशाः करका घ्नन्ति भूपतिम् ।
अत्र साधारणी शान्तिः कर्त्तव्या गर्गचोदिता" ।

मयूरचित्रे—"हेमरक्तास्तु पाषाणाः कर्दमैस्तु विशेषतः ।
पुष्पायस्ताम्रकेशैश्च वृष्टौ सौर्या चरुक्रिया ॥
दिव्ये सूर्याय स्वाहेति प्रभृत्युक्तातिदिश्यते ।
प्रावट्काले यदा मेघः पांशुवृष्टिं विमुञ्चति ॥
चक्रवर्त्तिवधः प्रोक्तस्तथा गर्गेण भाषितम् ।
द्वितीया शान्तिरेतेषु कर्त्तव्या दिव्यचोदिता"

फलपाकस्तु गार्गीये—

घृततैलवसावर्षे सद्यः फलमुदाहृतम्" ॥

अनभ्रवृष्टौ च भवेन्मासादिति । अन्यासान्त्वान्तरिक्षाद्भुतानां षाण्मासिकः फलपाक इति ।

## इत्यतिवृष्ट्यद्भुतम् ।

## अथ कबन्धाद्भुतम्

गदापर्वणि पाण्डवशिविरबधनिमित्तम्--

"बहुपादैर्बहुभुजैः कबन्धैर्घोरदर्शनैः ।
नृत्यद्भिर्भयदैर्व्याप्ता दिशस्तत्राभवन्नृप" ॥

लङ्काकाण्डे धूम्राक्षवधनिमित्तम्—

"रुधिरार्द्रो महाश्वेतः कबन्धो निपपात ह" ।

अत्रापि सावित्रीमन्त्रकरणकलक्षहोमादिका शान्तिः कर्त्तव्येति ।

इति कबन्धाद्भुतम् । इत्यन्तरिक्षाश्रयः ।

## अथ भौमाद्भुते भूकम्पाद्भुतम्

तत्र दौ भूकम्पोत्पत्तिकारणं विष्णुपुराणे—

"यदा विजम्भतेऽनन्तो मुदा घर्णितलोचनः ।
तदा चलति भूरेषा साद्रिद्वीपाब्धिकानना ॥"

तत्र वराहसंहितायां काश्यपगर्गवशिष्ठवृद्धगर्गाणां क्रमेण मतम्—

"क्षितिकम्पमाहुरेके महान्तर्जलनिवासिसत्त्वकृतम् ।
भूभारखिन्नदिग्गजनिःश्वाससमुद्भवं चान्ये ॥
अनिलोऽनिलेन निहतः क्षितौ पतन् सस्वनं करोत्यन्ये ।
केचित्त्वदृष्टकारितमिदमन्ये प्राहुराचार्याः ॥"

काश्यपः—"अर्णवस्योपरि पृथ्वी सशैलवनकानना ।
स्थितास्तन्मध्यगाः सत्त्वाः संक्षोभाच्चालयन्ति ताम् ॥"

गर्गः—"चत्वारः पृथिवीं नागा धारयन्ति चतुर्दिशम् ।
वर्द्धमानः सुवृद्धश्च अतिवृद्धः पृथुश्रवाः ॥
वर्धमानो दिशं पूर्वां सुवृद्धो दक्षिणां दिशम् ।
पश्चिमामतिवृद्धश्च सौम्याशान्तु पृथुश्रवाः ॥
नियोगाद ब्रह्मणो ह्येते धारयन्त्यम्बुसंस्थिताः ।
ते वसन्ति सदा श्रान्ताः स वायुं श्वसते महान् ।
वेगान्महीं चालयते भावाभावनिदर्शकः ॥"

**वशिष्ठः**:-- "यदातिबलवान् वायुरन्तरिक्षानिलाहतः।
पतत्याशु स निर्घातो भवते वायुसंभवः॥
तस्य योगान्निपततश्चलत्यद्‌भ्यो हता क्षितिः॥"

**वृद्धगर्गः**:--"प्रजाधर्मरता यत्र तत्र कम्पः शुभो भवेत।
जनानां श्रेयसे नित्यं विसृजन्ति सुरोत्तमाः॥
विपरीतस्थिता यत्र जनास्तत्राशुभम्भवेत्।
विसृजन्ति प्रजानान्तु दुःखशोकाभिवृद्धये॥"

**औशनसे**—"चत्वारीमानि भूतानि कम्पयन्ति वसुन्धराम्।
आपः शचीपतिश्चैव हव्यवाहः प्रभञ्जनः॥
पूर्वां सहस्रनयनो दक्षिणां हव्यवाहनः।
आपः पश्चादुदीचीञ्च स चचाल प्रभञ्जनः॥"

**वराहः**—गिरिभिः पुरा सपक्षैर्वसुधा प्रपतद्भिरुत्पतद्भिश्च।
आकम्पिता पितामहमाहामरसदसि सव्रीडम्॥
भगवन्नाम ममैतत्त्वया कृतं यदचलेति तन्न तथा।
क्रियतेऽचलैश्चलद्भिः शक्ताहं नास्य खेदस्य॥
तस्याः सगद्गदगिरं किञ्चित्स्फुरिताधरं विनतमीषत्।
साश्रुविलोचनमाननमालोक्य पितामहः प्राह॥
मन्युं हरेन्द्र धात्र्याः क्षिप कुलिशं शैलपक्षभङ्गाय।
शक्रः कृतमित्युक्त्वा मा भैरिति वसुमतीमाह॥
किन्त्वनिलदहनसुरपतिवरुणाः सदसत्फलावबोधार्थम्।
प्राग्द्वित्रिचतुर्भागेषु दिननिशोः कम्पयिष्यन्ति॥

आथर्वणाद्भुतमयूरचित्रयोः—

"प्राग्द्वित्रिचतुर्भागेषु दिनरात्र्योर्यथाक्रमम्।
अनिलाग्नीन्द्रवरुणाः कम्पयन्ति वसुन्धराम्॥

**गर्गः**:--"कृत्वा चतुर्द्धाऽहोरात्रं द्विधाऽहोऽथद्विधा निशाम्।
देवताश्रययोगाच्च चतुर्धा भगणन्तथा॥

पूर्वे दिनार्द्धे वायव्यमाग्नेयोऽर्धेऽथ पश्चिमे ।
ऐन्द्रः पूर्वेऽथ रात्र्यर्द्धे पश्चिमार्द्धे तु वारुणः ॥
चत्वार एवमेते स्युरहोरात्रविकल्पजाः ।
निमित्तभूता लोकानामुल्कानिर्घातभूचलाः ॥

इति गार्ग्यमतमनादेयम्, मत्स्यादिविरोधात् दिनस्य चतुर्षु भागेषु रात्रेश्चत्वारो वायव्यादयो मण्डला भवन्तीति भार्गवीयादिवचनदर्शनाच्च ।

मत्स्यपुराणविष्णुधर्मोत्तरयोः--

'प्रथमे दिनयामे तु रात्रौ च मनुजेश्वरः ।"

इत्यादि मण्डलप्रकरणे लिखितमिति दिवाचतुर्षु भागेषु क्रमेण वायु-वरुणदहनसुरपतयो मण्डलपतयः । रात्रौ च सुरपतिदहनवरुणवायवश्चेति उशनः स्वरसः । तथाहि आथर्वणाद्भुते--

"आद्यद्वित्रिचतुर्थे दिनयामे तद्विलोमतो रात्रौ ।
अनिलवरुणाग्नीन्द्रजमण्डलचक्रं वदन्त्युशनाः" ॥

औशनसे – "उदीच्यां यदि कम्पेत वायव्ये सप्तके गणे ।
दिनाद्ययामे रात्र्यन्ते वायव्यः कम्प उच्यते ॥
वायुना ध्वस्तवेश्मानो नराः कलहसङ्कुलाः ।
परस्परविरोधेन परस्परवधनेन च ॥
ईतयश्चापि जायन्ते वायुदोषसमुद्भवाः ।।"

अयञ्चोशनसो वेलामण्डलक्रमो न सर्वसम्मत इति ।

अथ नक्षत्रमण्डलानि । तत्र वायव्यमण्डमाह वार्हस्पत्ये--

"हस्ताश्विनौ तथा चित्रा ऋक्षमर्यमदैवतम् ।
ब्राह्मं मृगशिरः स्वाती वायव्यं मण्डलं स्मृतम् ॥
यदात्र चलते भूमिर्निर्घातोल्के तथैव च ।
अशरीराश्च नर्दन्ते कम्पन्ते दैवतानि च ॥

आदित्यो वा विगृह्येत सोमो वाप्युपरज्यते ।
वायव्यन्तद्विजानीयादक्षेमञ्चात्र निर्दिशेत् ।।
पांशुवर्षन्तथा घोरं क्षीरे सर्पिर्न जायते ।
प्रासादतोरणादीनि प्रपतन्ति महीतले ।।
मद्रका यवनाश्चैव शकाः काम्बोजवाह्लिकाः ।
गान्धाराश्चैव नश्यन्ति एतैस्सार्द्धन्तथा किल ।।
गजवाजिन उष्ट्राश्च वृका नकुलवेष्टकाः ।
पीड्यन्ते व्याधितास्सर्वे ये च शस्त्रोपजीविनः ।।
पुरे श्रेष्ठा विनश्यन्ति गणेषु गणसम्मताः ।
गृहाणि रमणीयानि विशीर्यन्ते च सर्वशः ।।
आयासश्चोल्वणस्तत्र शस्त्रत्रासं समन्ततः ।
एतै रूपैस्तु विज्ञेयं वायव्ये चलदर्शनम् ।।"

मत्स्यपुराणगर्गकाश्यपविष्णुधर्मोत्तरमयूरचित्राथर्वणाद्भुतेषु धनिष्ठानक्षत्रस्थाने मृगशीर्षमभिजिन्नक्षत्रस्थाने पुनर्वसुनक्षत्रञ्चोक्तम् ।

**तथा च मत्स्यादौ**—"प्रथमे दिनयामे तु रात्रौ च मनुजेश्वर ।
हस्ते स्वातौ च चित्रायामादित्ये चाश्विने तथा ।।
आर्यम्णे सोमदैवत्ये वायव्या शान्तिरुच्यते ।।"

**गर्गः**—"सौम्यादित्यार्यम्णहस्तचित्रस्वात्यश्विनीषु वा ।
कम्पो वायुकृतश्चण्डो वायुनापि विधूननः ।।
रूक्षारुणत्वं च दिशां रूक्षश्चण्डानिलस्तथा ।
शस्यमल्पतरं विद्याद् वृष्टिर्वध्येत वायुना ।।
सप्तमेऽहनि कम्पश्च महान् स्याद्वायुसम्भवः ।।"

**काश्यपः**—"उत्तराफाल्गुनीहस्तं चित्रास्वातीपुनर्वसु ।
अश्विनी सौमदैवत्यं वायव्यं मण्डलं स्मृतम् ।।
अत्र वाता महाघोराः सशर्कररजोत्कराः ।
गर्भस्थाश्च निपात्यन्ते रोगक्षुद्भयपीडिताः ।।

कलिङ्गाः शबराः म्लेच्छास्तङ्गणाः क्षितिवासिनः ।
शान्ति सामीरणीं कुर्यादुत्पातो यदि दृश्यते ॥"

**आथर्वणाद्भुते**—"हस्तचित्राऽश्विनीस्वातिमृगशीर्षपुनर्वसु ।
उत्तराश्चैव फल्गुन्य एतद्वायव्यमण्डलम् ॥
वायव्ये शस्त्रकोपः स्यात् क्षीरे सर्पिर्न जायते ।
पांशुवृष्टिर्महाघोरा स्यादायासस्तथोल्वणः ॥
प्राकारतोरणारामाः प्रपतन्ति महीतले ।
पक्षिणो भूतल यान्ति वायुवेगसमाहताः ॥
मद्रका यवनाश्चैव काम्बोजा वाह्लिकास्तथा ।
गान्धाराश्च विरुध्यन्ते विनश्यन्ति पुराणि च ॥"

**मयूरचित्रे**—"स्वातिहस्ताश्विनीचित्रामृगशीर्षपुनर्वसु ।
उत्तराफाल्गुनी चेति वदन्त्येनं च मारुतम् ॥
अस्त्रवर्षं महाघोरं ज्वरदाहः प्रवर्त्तते ।
प्रासादतोरणं वेश्म प्रपतन्ति महीतले ॥
चैत्यवृक्षास्तथा हर्म्यं तथा देवकुलानि च ।
भूमौ प्रणिपतन्त्याशु वायुवेगसमीरिताः ॥
वारुणा वाह्लिका मत्स्या हूणाः पारसिकास्तथा ।
परस्परं विरुद्धाः स्युर्व्याधयोः प्रभवन्ति च ॥
न च वर्षति पर्जन्यो नष्टशस्या वसुन्धरा ।
सधूमाश्च दिशः सर्वाः शुष्यन्ति सलिलाशयाः ॥"

**वराहसंहितायां** चत्वार्यार्यम्णाद्यान्यादित्यं मृगशिरोऽश्वयुक्चेति ।
मण्डलमेतद्वायव्यमस्य रूपाणि सप्ताहात् ॥
धूमाकुलीकृताशे नभसि नभस्वानूजः क्षिपन्भौमम् ।
विरुजन् द्रुमांश्च विचरति रविरपटुकरावभासी च ॥
वायव्ये भूकम्पे शस्याम्बुवनौषधीक्षयोऽभिहितः ।
श्वयथुश्वासोन्मादज्वरकासभवो वणिक् पीडा ॥

रूपायुधभृद्वैद्या स्त्रीकविगन्धर्वपण्यशिल्पिजनाः ।
पीड्यन्ते सौराष्ट्रककुरुमगधदशार्णमत्स्याश्च ॥"

**भुजवलभीमे**—"प्राकाराट्टालचैत्याः पृथुगृहतरवो गोपुरा भूधराश्च
आमूलं शीर्यमाणाः पवनरयवसाद्यान्ति भूतागमांश्च ।
नारीगोगर्भपातस्तदनु च नियत स्वल्पशस्या धरित्री
दुर्भिक्षञ्चातिकष्टं भवति च महती व्याधिपीडा नराणाम् ।"

यदि नक्षत्रसन्धौ वेलासन्धौ वा मुनिमतभेदाद्वा मण्डलसंशयो भवति तदा तदुक्तफललक्षणद्वारेण मण्डलनिर्णयं कृत्वा प्रतिविधानमाचरणीयम् ।

**वार्हस्पत्ये**—"कम्पितायाञ्च भूमौ चेत् सप्ताहाभ्यन्तरेण च ।
अतिप्रचण्डो विपुलो वयुर्वहति दारुणः ॥
शर्करोत्कर्षणश्चापि दिक्षु चैव विदिक्षु च ।
तदैतल्लक्षणोपेतं विद्याद्वायुप्रकम्पितम् ॥
तस्मिन् विनश्यते देशः शौनकस्य वचो यथा ।
शस्त्रैरावरणं कुर्यात् प्राकारं परिखास्तथा ॥
न यथा प्रविशेद्राजा ज्ञात्वात्मानञ्च गोपयेत ।
सङ्ग्रामाश्चात्र विद्यन्ते मरणानि भवन्ति च ॥
राजपुत्रसहस्राणां भूमिः पिवति शोणितम् ।
मासं विंशतिरात्रं वा देवस्तत्र न वर्षति ॥
अश्वारूढैः ससन्नद्धैर्वारणैश्च निरुत्तरम् ।
मासं विंशतिरात्रं वा संग्रामस्तुमुलो भवेत् ॥
द्वाभ्यां गताभ्यां मासाभ्यां परं स्याद्बहुलं जलम् ।
उष्णं दूषयते धान्यं क्षेत्रवन्धं यथाधिकम् ॥
सर्वेषामेव कम्पानां गर्हितं वायुकम्पितम् ॥"

एतेनैतदुक्तम्भवति—सति मण्डलसन्देहे यदि सप्तदिनाभ्यन्तरे वात्या विंशतिदिनं मासम्वा न वृष्टिर्मासद्वयानन्तरमतिवृष्टिस्तदा वायव्यां बुधैः तच्छान्तिः कर्त्तव्येति ।

अस्य च फलपाको मासद्वयेन तदाह वटकणिकायाम्—

"आर्यम्णपूर्वं भचतुष्टयञ्च शशाङ्कमादित्यमथाश्विनेयम्।
वायव्यमेतत्पवनः प्रचण्डो मासद्वयेनाशुभदः प्रजानाम् ॥

मयूरचित्रे—"शान्तिन्तत्र प्रवक्ष्यामि सर्वोपद्रवनाशिनीम्।
पूजयेत्तत्र वायुम्वै चरुं कुर्यात्तथाऽशनम् ॥
आवायोवृयेत्यनेन मन्त्रेणाष्टोत्तरं तथा।
सहस्राणि तु पञ्चैव जुहुयात् समिधः शुचिः ॥
औदुम्वरीं घृतेनाक्तां वाञ्छयन शान्तिमुत्तमाम्।
पायसं मधुसंयुक्तं दधिक्षीरं गुडोदनम् ॥
ब्राह्मणान् भोजयेच्चैव हुत्वान्ते भूरिदक्षिणाम्।
सुवर्णं रजतं कांस्यं गृहन्दासीसमन्विताम् ॥
अनड्वाहञ्च धेनुञ्च ब्राह्मणेभ्यो निवेदयेत् ॥"

एतच्छान्त्यशक्तौ प्रभूतकनकान्नगोमहीदनादिका शान्तिः त्रिविधोत्पात-प्रशमनाय स्वस्त्ययनञ्च कार्यमिति।

अथाग्नेयमण्डलम्, मात्स्ये—

"द्वितीये दिनयामे तु रात्रौ च रविनन्दन।
पुष्याग्नेयविशाखासु पित्र्याजभरणीषु च ॥
उत्पाता ये तथा भाग्ये आग्नेयीन्तेषु कारयेत्।

काश्यपः—"कृत्तिकापित्र्यपुष्याश्विविशाखाभरणीभगाः।
पूर्वभाद्रं तथाऽग्नेयं मण्डलं भयकारकम् ॥
अनिलानलसंयोगान्महावह्निः समुत्थितः।
ग्रामाश्च तेन दह्यन्ते काननानि वनानि च ॥
मध्यदेशं कुरुक्षेत्रं द्विजा यज्ञसमन्विताः।
आभीराः सिन्धगान्धारा विरुधयन्ते परस्परम् ॥

नद्यः शोषं प्रयास्यन्ति गवां क्षीरं न जायते ।
स्नेहान्नरसहानिश्च शान्तिमग्नेस्तु कारयेत् ।।"

**मयूरचित्रे**—कृत्तिकाभरणीपुष्या अजेन्द्राग्निमघास्तथा ।
प्राक्फल्गुनीति चाग्नेयं चलत्यस्मिन्मही यदि ।।
उल्का वा यदि वा वज्रं निर्घातो यदि वा पतेत ।
देहिनां देहनाशः स्याद् गावोऽल्पपयसस्तथा ।।
व्याधिभिर्द्विजपीडा च पित्तज्वरसमुत्थितैः ।
मूढगर्भाः स्त्रियश्च स्युर्वह्निदाहश्च सर्वशः ।।
ईतिर्भवति शस्यानां प्रीतिश्चापि न विद्यते ।
दह्यते च तथा भूमिर्न च वर्षति वासवः ।।"

**वराहः**—पुष्याग्नेयविशाखाभरणीपित्र्याजभाग्यसंज्ञानि ।
वर्गो हौतभुजोऽयङ्करोति रूपाण्यथैतानि ।।
तारोल्कापातावृत्तमादीप्तमिवाम्बरं सदिग्दाहम् ।
विचरति मरुत्सहायः सप्तार्चिस्सप्तदिवसान्तः ।।
आग्नेयेऽम्बुदनाशः सलिलाशयसंक्षयो नृपतिवैरम् ।
दद्रूविचर्चिकाज्व विसर्पिकाः पाण्डुरोगाश्च ।।
दीप्तौजसः प्रचण्डाः पीड्यन्ते चश्मकाङ्गवाह्लिकाः ।
तङ्गणकलिङ्गवङ्गद्रविडाः शवराश्चानेकविधाः ।।"

विदेहश्चात्र पततीति **पराशरमतम्** । यदा च नक्षत्रसन्धौ वेलासन्धौ वा मुनिमतभेदाद्वा मण्डलसंशयो भवति तदोक्तलक्षणेन निर्णयम् ।

**भीमपराक्रमे**—"आग्नेये ऋक्षयोगे यदि चलति मही चन्द्रसूर्यग्रहो वा
निर्घातोल्काशनीनाङ्कथमपि पतनं दर्शनं धूमकेतोः ।
दह्यन्ते काननानि प्रबलपुरगृहास्तीव्रतेजाः पतङ्गाः
रोगैः पितज्वराद्यैर्निखिलमनुगतैः पीड्यते जीवलोकः" ।।

**वार्हस्पत्ये**—"प्रकम्पितायां भूमौ चेत्सप्ताहाभ्यन्तरेण तु ।
यमजिह्वोपमा भीमा उल्का भवति भास्वरा ।।

ताम्रः सूर्यश्च चन्द्रश्च दीप्ताश्च मृगपक्षिणः ।
दिशस्सर्वा भवेयुश्च सूर्योदयसमप्रभाः ।
तदेतल्लक्षणोपेतं विद्यादग्निप्रकम्पनम् ।
तस्मिन् भवति निर्देशः शौनकस्य वचो यथा ॥
हिरण्यञ्च सुवर्णञ्च यच्चान्यद्विद्यते गृहे ।
सर्वमेतत्परित्यज्य कर्त्तव्यो धान्यसंग्रहः ॥
राष्ट्राणि सन्दहेदग्निः ग्रामांश्च नगराणि च ।
सङ्ग्रामाश्चात्र जायन्ते मांसशोणितकर्द्दमाः ॥
राजानश्च विरुध्यन्ते देवश्चात्र न वर्षति ।
एवमेतत् कम्पानां गर्हितं ह्यग्निकम्पितम्" ॥

अस्य तु फलपाकः सार्द्धमासेनेति प्राह **वटकणिकायाम्** --

"अजैकपादं वहुलाभरण्यौ भाग्यं विशाखा गुरुभं मघा च ।
क्षुदग्निशस्त्रामयकोपकारि पक्षैस्त्रिभिर्मण्डलमग्निसंज्ञम्" ॥

**मयूरचित्रे** — "अत्राग्नेयं चरुं कृत्वा पूजामग्नेस्तथैव च ।
वैश्वानरेत्याद्य भयमन्त्रेण जुहुयादपि ॥
अष्टोत्तरसहस्रं हि विल्वस्य समिधां शुचिः ।
पायसं मधु संयुक्तं प्राशयित्वा द्विजोत्तमम ॥
सुवर्णं रजतं दत्वा हुतान्ते भूरिदक्षिणाम्" ॥

अथेन्द्रमण्डलमौशनसे--

"यदा चलति पूर्वेण ऐन्द्राद्ये सप्तके गणे ।
चतुर्थयामे प्रदोषे ऐन्द्रः कम्पः स उच्यते ॥
तत्र बीजानि बर्द्धन्ते सुभिक्षं चैव जायते ।
स्वधर्मस्था हि राजानः सुक्षेमं शान्तिरेव च" ॥

**चतुर्थयामे** —दिनस्य चतुर्थयामे । प्रदोषे-प्रथमप्रहरे, रात्रेरित्यर्थः ।

**काश्यपः**--"श्रविष्ठा श्रवणं ज्येष्ठा तथाषाढोत्तराऽभिजित् ।

अनुराधा रोहिणी च माहेन्द्रं मण्डलं स्मृतम् ॥
ऐन्द्र्या श्रियाऽभिसंशन्ति पृथिव्यां पार्थिवर्षभा ।
प्रजासु क्षेममारोग्यं सर्वशस्यसमन्वितम् ॥

**मयूरचित्रे**- "ज्येष्ठानुराधारोहिण्यः श्रवणा चाभिजित्तथा ।
वैश्वदेवं धनिष्ठा च माहेन्द्रमिदमुच्यते ॥
दिग्दाहोल्कामहीकम्पैर्गावोऽतिपयसस्तथा ।
बहुपुष्पफला वृक्षा उल्कापाते विशेषतः ॥
सर्वशस्यवती पृथ्वी क्षेमारोग्यसुवृष्टयः ।
वेदाध्ययनसम्पन्नाः स्वकर्मनिरता द्विजाः" ॥

यदि च सन्धौ नक्षत्रविशेषे वा सन्देहस्तदेतदुक्तफलद्वारेण निर्णीय प्रतिविधानमिति ।

**भार्गवीये** —"सप्ताहाभ्यन्तरे कम्पे भवेद्वज्रधरात्मके ।
सस्वनैर्व्याप्तमत्यर्थं स्वस्तिवाग्भिर्घनैर्नभः ॥
नभसोऽन्ते च चारिण्यो विद्युतश्चार्कसन्निभाः ।
प्रान्तेष्वसम्वृताश्चापि शीतशीताश्च मारुताः" ॥

**वार्हस्पत्ये**-"प्रकम्पितायां भूमौ तु सप्ताहाभ्यन्तरेण च ।
गभीरगर्जमानस्तु मेघ आयाति पार्थिव ॥
स्निग्धो ह्यञ्जनसङ्काशो सुमहातोयदोपमः ।
वित्रासयन् दिशस्सर्वा द्रुतञ्चापि प्रवर्षति ॥
इन्द्रायुधं भवेच्चात्र विद्युत्स्तनितमेव च ।
सुवृष्टिः क्षेममारोग्यं सुभिक्षं परमं पदम् ॥
यज्ञोत्सवैश्च मोदन्ते आनन्दैर्मुदिताः प्रजाः ।
एतेषां भूमिकम्पानां प्रशस्तं हीन्द्रकम्पितम् ॥
जानीयाल्लक्षणैरेतैः सर्वमेव शुभाशुभम्" ॥

ऐन्द्रमण्डलस्य शोभनफलकत्वे शुभाशुभङ्कथमुक्तमित्याशङ्कायां देशविशेषे चाशुभफलमाह--

**काश्यप:** –"काशी कुशीति राजा च काश्मीरद्रविडान्धका: ।
एते देशा: प्रपीड्यन्ते शान्तिरत्र पुरन्दरी" ॥

**पराशर:**–प्रथितकुलाधिपतिसुराष्ट्रचीनकाश्मीराभिसारप्राच्यशककिरात-पौरवाच्युकरार्णव - मालवपह्लवदण्डक - काशिकार्षक - कैलाशमल्लहलवहलाना-मुपतापायेति ।

**वराह:**-"ऐन्द्रस्तुत्कुलजातिख्यातावनिपालगणपर्विध्वंसि ।
अतिसारगलग्रहवदनरोगकृच्छर्दि - कोपाय ॥
काशियुगन्दारपौरवकिरातकीराभिसारहलमद्रा: ।
अर्बुदसुराष्ट्रमालवपीडाकरमिष्टबृद्धिकरम्" ॥

इष्टबृद्धिकरम्--सज्जनबृद्धिकरम् । अतएवास्मिन्मण्डले विष्णुधर्मादौ शान्तिरुक्तेति । **भीमपराक्रमे**--

"लोका नित्यप्रमोदी विनययुतमना नष्टरोगावकाशो
दाने भोगे च शक्त: सकलशुभयुतो दु:खसंघैर्विमुक्त: ।
कीर्त्तिं विस्तीर्य रम्यां त्रिभुवनफलके वर्धयेद्धर्मवृद्धिं
कोषै: पूर्णो नरेन्द्रो जनपदसहितो बर्द्धते श्रीसमेत:" ।

विष्णुधर्मोक्तां शान्तिमाह–

"ऐन्द्री तेषु प्रयोक्तव्या महाशान्ति: कुलोद्वह" ।

अशक्तौ कनकान्नगोमहीदानादिका शान्ति: कर्त्तव्येति तत्तद्देशे च राज्ञा अवश्यमेव शान्ति: कर्त्तव्या ।

फलपाकस्तु **सप्ताहाभ्यन्तरमेव** । तदाह **वटकणिकायाम्**—

प्राजापत्यं, वैष्णवं मैत्रमैन्द्रं विश्वेशं स्याद्वासवं चाभिजिच्च ।
ऐन्द्रं ह्येतन्मण्डलं सप्तरात्रात्कुर्यात्तोयं संप्रहृष्टा: प्रजाश्च" ॥

अथ वारुणमण्डलमौशनसे--

"प्रतीच्यां यदि कम्पेत वारुणे सप्तके गणे ।
द्वितीययामे रात्रौ च तृतीये वारुणं स्मृतम् ।।
अत्र वृष्टिश्च महती शस्यबृद्धिस्तथैव च ।
प्रजा धर्मरताश्चैव भयरोगविवर्जिताः" ।।

द्वितीययामे -दिनस्येति ।

**काश्यपः**-"मूलर्क्षं प्रागषाढा च तथा भाद्रपदोत्तरा ।
रेवतीवारुणञ्चार्द्राऽऽश्लेषा तद्वारुणं स्मृतम् ।।
माञ्जिष्ठकापोतनिभैर्नीलाञ्जनचयप्रभैः ।
पद्मिनीपत्रसङ्काशैर्घनैर्वर्षति वासवः ।।
शालिषष्टिकगोधूमयवकार्पासकोद्रवैः ।
शोभिता गोकुलवती वत्सहस्ता रवेर्मही" ।।

**वराहः**-"पौष्णयाप्यार्द्राऽऽश्लेषामूलाहिर्बुध्न्यवरुणदैवतानि ।
मण्डलमेतद्वारुणमस्यापि भवन्ति रूपाणि ।।
नीलोत्पलालिभिन्नाञ्जनत्विषो मधुररावीणो बहुलाः ।
तडिदुद्भासितदेहा धाराङ्कुरवर्षिणो जलदाः ।।
वारुणमर्णवसरिदाश्रितघ्न - मतिवृष्टिदं विगतवैरम् ।
गोनर्दचेदिकुकुरान् किरातवैदेहकान् हन्ति" ।।

**भीमपराक्रमे**—"गर्जन्ते वारिवाहा जलधरनमिताः पूर्यमाणाः क्षणेन
क्रीडन्ते मीनहंसाः पयसि जनपदा हर्षिणः कामभाजः ।
वृक्षाः पुष्पैः समेताः फलभरनमिताः क्षीरवत्यश्च गावः
शस्यैः पूर्णा धरित्री सुखभरनमिता जन्तवः सर्वदैव" ।।

अत्र च पूर्वलिखितवन्मण्डलसन्देहे कथितफलं निर्णीय भूपादिभिः शान्तिः कर्त्तव्येति, तदुक्तं **बार्हस्पत्ये**-

"प्रकम्पितायां भूमौ चेत्सप्ताहाभ्यन्तरेण तु ।
वर्षन्तास्तु समायान्ति महामेघाः समन्ततः ।।

नक्राश्च शिशुमाराश्च कूर्ममकरसंस्थिताः ।
अभ्राकृतिषु दृश्यन्ते ग्रसन्तश्चन्द्रभास्करौ ॥
तदेतल्लक्षणोपेतं विद्यादम्बु - कम्पितम् ।
तस्मिन् भवति निर्देशः शौनकस्य वचो यथा ॥
पर्वतेषु वपेद्बीजमूषरे जाङ्गले तथा ।
तत्रोप्तमुद्यते बीजमन्यत्र तु विनश्यति ॥
औद्भजानि तु पुष्पाणि मूलानि च फलानि च ।
गच्छन्ति तत्र वृद्धिं हि सत्त्वान्युदकजानि च ॥
क्षेमं सुभिक्षमारोग्यं सुवृष्टिञ्चात्र निर्दिशेत् ।
एवमेवञ्च कम्पानां सामान्यं त्वम्बुकम्पितम्" ॥

इदञ्च मण्डलं केषाञ्चिदशोभनमपि भवति । तदाह—

**पराशरः**--अतीसारहिक्काक्षिरोगकृदपि वा विशेषतस्तु किरातकाश्मीरपारतावन्तकौकुरेयशौर्यारकचेदिवत्ससैन्धवोदकपात्रकोदधिनदनदीसंश्रितांश्च देशानुपहन्तीति ।

**वराहः**---"वारुणमर्णवसरिदाश्रितघ्नमतिवृष्टिदं विगतवैरम् ।
गोनर्दचेदिकुकुरान् किरातवैदेहकान् हन्ति" ॥

**काश्यपः**—"अभ्रकाः सकरुषाश्च सिंहला जलजीविनः ।
नश्यन्ति विषयाश्चैव शान्तिङ्कुर्यात्तु वारुणीम्" ॥

**मात्स्ये**—"चतुर्थदिनयामे तु रात्रौ च रविनन्दन ।
सार्पे पौष्णे तथाऽऽर्द्रायामाहिर्बुध्न्ये च वारुणे ।
मूले वरुणदैवत्ये ये भवन्त्यद्भुतास्तथा ।
वारुणी तेषु कर्त्तव्या महाशान्तिर्महीक्षिता" ॥

वरुणदैवत्ये - पूर्वाषाढे इति । अस्य तु फलपाकः--सद्य एव । तदाह **वटकणिकायाम्** —

आहिर्बुध्न्यं वारुणं मूलमाप्यं पौष्णं सार्पं मन्मथारीश्वरञ्च ।
सद्यः पाकं वारुणं नाम शस्तं तोयप्रायं हृष्टलोकं प्रशान्तम्" ॥

अथैन्द्रादिकफलं भार्गवीये—"सुभिक्षक्षेमदौ कम्पौ विज्ञेयाविन्द्रवारुणौ ।
आग्नेयवायुजौ कम्पौ राजराष्ट्रभयावहौ" ॥

येषामद्भुतानां फलपाको नोक्तस्तेषामयं फलपाककालो बोद्धव्यः ।

वराहः— "पक्षैश्चतुर्भिरनिलस्त्रिभिरग्निर्देवराट् च सप्ताहात् ।
सद्यः फलति च वरुणो येषु न पाकोऽद्भुतेषूक्तः" ॥

भूकम्पे तु —"षड्भिर्मासैः कम्पो द्वाभ्यां पाकञ्च याति निर्घातः" ।

बार्हस्पत्ये तु विशेषः—

"आग्नेयो भूमिकम्पो यः सार्द्धमासाद्विपच्यते ।
वारुणस्य फलं सद्यो वायव्यस्य त्रिमासिकः ॥
माहेन्द्रस्य फलं विद्यान्मासमर्द्धन्तथैव च" ॥

अथ वायव्याग्नेयवारुणान्यधिकृत्य भूकम्पशान्तिमाह—

बार्हस्पत्ये – "एतेषु त्रिषु कम्पेषु आथर्वः शास्त्रकोविदः ।
माहेन्द्रीममृतां वापि कुर्याच्छान्तिं सदक्षिणाम्" ॥

ऐन्द्रमण्डले तु भूकम्पशान्तिस्तत्रैव—

"ऐन्द्रकम्पे तु विधिवदैन्द्रमन्त्रैर्विधानतः ।
तत्फलस्य प्रबद्धार्थी जुहुयाच्च जपेत्तथा" ॥

तथा शमयन्त्यासप्ताहोत्कम्पादिकृतं निमित्तमथवा अति कर्षणोपवासव्रतदीक्षाहवनानि । प्रभूतकनकान्नदानादिका सामान्या शान्तिर्वा कर्त्तव्या ।

पराशरः—"योऽन्यस्मिन्नक्षत्रे भागे वाऽन्यत्र भूचलो भवति ।
स भवेद्व्यामिश्रफलस्तन्मे गदतो निबोध त्वम्" ॥

अथेन्द्रवारुणसंयोगफलम्--

काश्यपः—"माहेन्द्रवारुणौ चेतौ वेलानक्षत्रयोगजौ ।
सुभिक्षक्षेमनैरुज्यसत्यधर्मप्रवर्त्तकौ" ॥

वराहः—"वारुणपौरन्दरयोः सुभिक्षशुभवृष्टिहार्दयो लोके ।
गावोऽतिभूरिपयसो निवृत्तवैराश्च भूपालाः" ॥

## अथ वायव्याग्नेयसंयोगफलम्--

काश्यपः—"वायुरग्निर्विमिश्रस्तु वेलामण्डलयोगतः ।
दुर्भिक्षावृष्टिरोगैश्च पीड्यन्ते तत्र वै जनाः" ॥

वराहः—प्रथितनरेश्वरमरणव्यसनाग्नेयवायुमण्डलयोः ।
क्षुद्भयमरकावृष्टिभिरुपतप्यन्ते जनाश्चापि" ॥

अथ वारुणवायव्यमण्डलसंयोगफलम् –

पराशर—"आवन्तकाः पुलिन्दा विदेहकाश्मीरदरदचीनाद्याः ।
ऐन्द्र्याश्रिताश्च वायव्यवारुणे प्राप्नुयुः पीडाम्" ॥

## अथैन्द्राग्नेयमण्डलसंयोगफलम्---

पराशर.--"ऐक्ष्वाकुवेश्मरथ्यान् पाटच्चराभीरचीनमरुकच्छान् ।
ऐन्द्राग्नेयः कम्पो हिनस्ति राज्ञश्च समुदीर्णान्" ॥

अथैन्द्रवायव्यमण्डलसंयोगफलमाह पराशरः—

प्राच्यशकचीनपह्लवयौधेयकर्पदियज्ञवद्गोमान् ।
शरदण्डमगधवन्धकिविनाशनः शक्रवायव्यः ॥

अथ वारुणाग्नेयमण्डलसंयोगफलमाह पराशरः—

"ससरित्सरः समुद्राश्रितांश्च गोनर्दमङ्गनाराज्यम् ।
क्षत्रियगणांश्च हन्यात्कम्पो वरुणाग्निदैवत्यः" ।

ऐन्द्रवायव्यसंयोगस्य वारुणाग्नेयमण्डलसंयोगस्य च निष्फलत्वमाथर्वणाद्भुते कथितम् । तद्यथा –

"परस्परं विघातः स्यादैन्द्रवायव्ययोर्द्वयोः ।
वारुणाग्नेययोश्चैवं वेलानक्षत्रभेदतः" ॥

**वराहः**—"हन्त्यैन्द्रो वायव्यं वायुश्चाप्यैन्द्रमेवमन्योन्यम् ।
वारुणहौतभुजावपि वेलानक्षत्रजाः कम्पाः" ॥

अथ मण्डलद्वयसंयोगशान्तिर्मत्स्यपुराण - विष्णुधर्मोत्तरयोः—

भिन्नमण्डलवेलासु ये भवन्त्यद्भुताः क्वचित् ।
तेषु शान्तिद्वयङ्कार्यं निमित्ते सति नान्यथा ॥
निमित्ताय कृता शान्तिर्निर्निमित्ताय जायते" ॥

**निमित्ताय** अशुभसूचकनिमित्ताय । एतैर्मण्डलैरन्येऽप्युत्पाताश्चिन्तनीयाः ।

**वराहः**—अन्यान्यप्युत्पातानि जगुरन्यैर्मण्डलैरेभिः ।

**गर्गः**—"निर्घातोल्कामहीकम्पाः स्निग्धगम्भीरनिःस्वनाः ।
मेघस्तनितशब्दाश्च सूर्येन्दुग्रहणन्तथा ॥
मण्डलैरेव बोद्धव्याः शुभाशुभफलप्रदाः" ॥

**वटकणिकायां**—

"उल्का हरिश्चचन्द्रपुरं रजश्च निर्घातभूकम्पककुप्प्रदाहाः ।
वातोऽतिचण्डो ग्रहणं रवीन्द्वोर्नक्षत्रताराग्रहवैकृतानि ॥
व्यभ्रे वृष्टिर्वैकृतञ्चातिवृष्टिर्धूमोऽनग्नौ विस्फुलिङ्गार्चिषो वा ।
वन्यं सत्त्वं ग्राममध्ये विशेद्वा रात्रावैन्द्रं दृश्यते कार्मुकं वा ॥
सन्ध्याविकारः परिवेषदण्डा नद्यः प्रतीपादिवितूर्यनादाः ।
अन्यच्च यत्स्यात्प्रकृतेः प्रतीपं तन्मण्डलैरेव विचिन्तनीयम्" ॥

अथ शुभसूचकभूकम्पलक्षणमाह पराशरः—स्निग्धस्वनाः प्रदक्षिणानुयायिनोम्बुधरधाराभिषिक्ताः पर्वसु च सर्व एव प्रशस्यन्ते ।

अथाशुभसूचकभूकम्पलक्षणन्तत्रहरिवंशे **कंसबधनिमित्तम्**—

चलत्यपर्वणि मही गिरीणां शिखराणि च ।

**पराशरः** --अवनेर्विदरणमतिमात्रचलनं महाभयाय ।

**विष्णुधर्मोत्तरे** —"सनिर्घाते दीर्घभूमिचाले राजमरणं स्यात् ।

**मयूरचित्रे** —"सन्ध्ययोर्भूमिकम्पे तु नृपस्यादिवधः स्मृतः ।
प्राजापत्या ततः शान्तिः कृता चेच्छं भविष्यति ॥"

**औशनसे** "यदा कम्पेत वसुधा सर्वेषु दिवसेषु च ।
शान्त्यर्थं योजयेद्विप्रान् प्रतिपूज्याश्च देवताः" ॥

देवताः-- मण्डलदेवता इति । भूमिकम्पदिवसात्तृतीये चतुर्थे सप्तमे वा दिवसे पक्षे मासे सार्द्धमासे वा भूकम्पफलमाह—

**काश्यपः** —"अर्द्धमासे चतुर्थेऽह्नि मासे सार्द्धे हि सप्तमे ।
कम्पते धरणी चेत्स्यान्नृपतेः श्रेयसः क्षयः" ॥

श्रेष्ठनृपतिविनाश इत्यर्थः ।

**पराशरः** त्रिचतुःसप्तरात्रे पक्षमासत्रिपक्षान्तरे प्रततानुभूकम्पिनः प्रवर-नरपतिविनाशाय ।

**वराहः** —"त्रिचतुर्थे सप्तमदिने पक्षे मासेऽथवा त्रिपक्षे च ।
यदि भवति भूमिकम्पः प्रधाननृपनाशनो ज्ञेयः" ॥

अथ स[कल]भूकम्पादिदोषशान्तिमाह [प]राशरः--

शमयन्त्यासप्ताहात् कम्पादिकृतं निमित्तमाश्वेव ।
अभिवर्षणोपवासव्रतदीक्षाजप्यहवनानि" ॥

अथ पूर्वोक्तदोषशान्त्यर्थं पाठादि, **मार्कण्डेयपुराणे**—

**देवीवाक्यम्** —"तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम" ।

अथ मण्डलानां भूमिकम्पयोजननिर्णयः--

**मार्गवीये** --"वायव्यं विंशतिशतमाग्नेयन्नवतिञ्चलेत् ।
अशीतिन्तु चलेदैन्द्रं सप्ततिम्वारुणञ्चलेत्" ॥

**वराहः**--"चालयति पवनः शतद्वयं शतमनलो दशयोजनान्वितम् ।
सलिलपतिरशीतिसंयुतं कुलिशधरोऽप्यधिकञ्च षष्टितः" ॥

यान्दिशं भूकम्पो गच्छति तान्दिशं नृपतिरभियुञ्जीत । तथाहि

मत्स्यपुराणे--"भूचालो यान्दिशं याति याञ्च केतुः प्रधूपयेत् ।
योगक्षेमशमिच्छन् ताञ्च यायान्नराधिपः" ॥

विष्णुधर्मोत्तरे--यान्दिशं भूचालो याति तान्दिशं जायाद्राजेति ।

इति भूकम्पाद्भुतम् ।

अथ जलाशयाद्भुतम्

गार्ग्ये—"जलाशयगतं वारि यत्र भ्राम्यति चक्रवत् ।
वर्द्धते हीयते वाऽपि तत्र राजभयं भवेत् ॥"

वराहः--"वहुतोयोऽपि संशोषः कूपे सृक्पूतिगन्धिता ।
राजोऽब्दार्द्धाद्विधङ्कुर्यात् स्रोतोऽन्यत्वे परागमः ॥"

अन्यत्वे – प्रतीपगामित्वे इति ।

मात्स्ये ---"नगरादपसर्पन्ते समीपमुपयान्ति वा ।
अशोष्या वापि शुष्यन्ति प्रतीपं प्रवहन्ति वा ॥
नद्यो ह्रदाः प्रस्रवणा विरसा वा भवन्ति च ।
विवर्णं कलुषं तप्तं फेनवज्जन्तुसंकुलम् ॥
क्षीरस्नेहसुरारक्तं वहन्ते व्याकुलोदकम् ।
षण्मासाभ्यन्तरे तत्र परचक्रागमो भवेत् ।"

औशनसे--"यस्य राज्ञो जनपदे नदी वहति कर्द्दमम् ।
काष्ठं तृणं चोपलं वा मृतकं मत्स्यजालकम् ॥
परस्य वा जनपदे प्रतिस्रोतो नदी वहेत् ।
अष्टमासाज्जनपदो हन्यते शस्त्रपाणिभिः ॥"

पराशरः--"नोपयोग्यानां नदीह्रदपल्वलानामपक्रमं परिशोषणमपां वैरस्यं पुरविनाशाय । सरितां प्रतिस्रोतोऽभिगमनं क्षीरस्नेहमधुसुरापूयशोणित-कुणपमांसविण्मूत्रगन्धविलुलितसलिलप्रवणमहीयूकमपां गाधागाधपरिवर्त्तन-मुच्छोषणञ्च परचक्रागमाय नरपतिभयाय वेति ।"

**वृद्धगर्गः**--"नगरादपसर्पन्ति परिभ्राम्यन्ति निम्नगाः।
अशोष्या श्चापि शुष्यन्ति विमार्गं प्रवहन्ति वा॥
ह्रदपल्वलकूपाना - मुदधेर्वापि नर्दनम्।
अचिरात्तत्पुरं शून्यं भवतीत्यभिनिर्दिशेत्॥
प्रतिस्रोतो वहन्ते वा विरसं चारुनिम्नगाः।
विवर्णं कलुषं तप्तं फेनवज्जन्तुसंकुलम्॥
क्षीरस्नेहं सुरारक्तं वहन्ते व्याकुलोदकम्।
षण्मासाभ्यन्तरे तत्र परचक्रागमो भवेत्॥"

**वराहः**--"सलिलोत्पत्तिरखाते रसगन्धविपर्ययोऽत्र तोयानाम्।
सलिलाशयविकृतौ वा महद्भयन्तत्र शान्तिरियम्॥"

सा शान्तिश्चाग्रे निरूपयिष्यते।

**मत्स्यपुराणे**--"जलाशया विमर्द्दन्ति प्रजल्पन्ति कथन्ति वा।
प्रमुञ्चन्ति सुजिह्वाञ्च ज्वालाधूमं सृजन्ति च॥
अखाते वा जलोत्पत्तिः सगन्धा वा जलाशयाः।
सगीतशब्दाः श्रूयन्ते जनमारभयम्भवेत्॥"

**विष्णुधर्मोत्तरे**--"जलाशया विनिर्दन्ति प्रज्वलन्ति कथन्ति वा।
विमुञ्चन्ति तथा ब्रह्मन् ज्वालाधूमरजांसि च॥"

अन्यन्मत्स्यपुराणतुल्यमिति।

**गार्गीये**--"जले धूमोऽथवा वह्निर्यस्मिन्देशे प्रतीयते।
तत्र राजविनाशः स्यात् क्षिप्रमेव न संशयः॥
उत्तिष्ठन्ति घटाः कूपादकस्माद्यत्र कुत्रचित्।
तत्र प्रधाननाशः स्यादिति वेदविदो विदुः॥"

**अत्र शान्तिर्मत्स्यपुराणे**—

जलाशयविकारे च वारुणी शान्तिरिष्यते॥"

**वराह:**--"सलिलविकारे कुर्यात्पूजां वरुणस्य वारुणैर्मन्त्रैः ।
तैरेव च जपहोमं शममेवं पापमुपयाति ॥"

**विष्णुधर्मोत्तरे**--'जलाशयानां वैकृत्ये प्रयतस्तु जलाशये ।
स्थालीपाकेन पशुना वरुणं पूजयेद् द्विजः ॥"

**मात्स्ये** - दिव्यमम्भः पयस्सर्पिर्मधुनाचमनेन च ।
जप्तव्या वारुणा मन्त्रास्तैश्च होमो जले भवेत् ॥
मध्वाज्ययुक्तं परमान्नमत्र देयं द्विजानां द्विजभोजनार्थम् ।
गावश्च देया सितवस्त्रयुक्तास्तथोदकुम्भाः सकलार्थशान्त्यै ॥"

**मयूरचित्रे**--"वापीकूपतडागाणामतिवारि यदा भवेत् ।
दुर्भिक्षं मरणञ्चैव जायते च तदाभयम् ॥
अन्यस्तत्र भवेद्राजा तथैवान्यः पुरोहितः ।
शान्तिस्तु षोडशी कार्या या सा दिव्यप्रचोदिता ।।
वरुणस्येति मन्त्रेण बृद्धौ वाप्यादिकस्य वा ।
अपामार्गस्य समिधो जुहुयादभ्रश्च दक्षिणा ॥
गायत्री जपहोमौ वा कूपस्योद्गिरणे स्मृतः ।
तर्पयेद्ब्राह्मणांश्चैव घृतक्षीरगुडोदनैः ॥
पायसैर्मधुसंयुक्तैः क्षीरशान्तिञ्च कारयेत् ।
प्रतिस्रोतोवहा नद्यः कूलान्यपहरन्ति च ॥
तथा उन्मार्गगामिन्यः शुष्यन्ति च जलाशयाः ।
प्रद्रवन्ति सफेनाश्च वधाय नृपतेर्मताः ॥
उद्गिरन्ति जलं कूपाः पुष्करिण्यो ह्रदास्तथा ।
घटे वाऽप्यथवा धूमस्तेभ्यः सन्दृश्यते यदि ॥
गर्जत्यम्बुदनिर्घोषो राज्ञो निधनमादिशेत् ।
दुर्भिक्षं क्षुद्भयञ्चैव ग्रामस्योत्सादनम्भवेत् ॥
एकादशी ततः शान्तिः कर्त्तव्या दिव्यचोदिता ॥"

**आत्रेये**--उद्गिरत्युदक यत्र कर्करीकलशादिकम् । कूपादिरिति सम्बन्धः ।

वरुणं पूजयेत्तत्र वारुणीं शान्तिमाचरेत् ।।
महाव्याहृतिभिर्होम आपुष्वैरपराजितैः ।
चन्द्रस्वस्तिकमन्त्रेण चाज्य हुत्वा विशेषतः ।।
सम्पातानावपेत्पात्रे जलपूर्णे ततो जलम् ।
हुत्वा शान्युदकन्तत्र तेनाभ्युक्षेत् सर्वतः ।।
तिलधेनुर्दक्षिणा चात्र होत्रे देया यथाविधि ।
उदपात्रञ्च देवाय स्वस्थाने विनिवेशयेत् ।।
ध्रुवोऽसीत्यादि मन्त्रेण पूरयेदुदकेन तत् ।
हिरण्यवर्णा इत्यादि सूक्तेन द्विजपुङ्गवः ।।"

**बैजवाप:--**"कूपप्रपतने सौम्यां शान्तिङ्कुर्याद्यथाविधि ।
सोमञ्च पूजयेत्सम्यग्वरुणञ्च जलाधिपम् ।।

**आथर्वणे--** कूपस्योद्गिरणेऽकस्माद् गर्जने शोषणे तथा ।
धूमायति ज्वलयते कुम्भे च स्वयमुत्थिते ।।
शुक्राद्भुतं विजानीयात्तद्वारे तं सुपूजयेत् ।
दधिमध्वाज्यसहिता येनाचरदिति स्फुटम् ।।
उदुम्बरस्य समिधो जुहुयाद घृतमेव च ।
वस्त्रं सुवर्णं धेनुञ्च दद्याद्विप्राय दक्षिणाम् ।।"

फलपाकसमयो **मयूरचित्रे--**

"मासत्रयस्य मध्ये च पच्यते च जनक्षयः ।।"

**वराह:--**"शोषश्चाशोष्यानां स्रोतोऽन्यत्वञ्च वर्षार्धम् ।
लोष्टस्य चाम्बुतरणं त्रिभिरेव विपच्यते मासैः ।।"

इति जलाशयाद्भुतम् ।

## अथाग्न्यद्भुतम्

**पराशर:--**अग्निज्वलनमग्नेरज्वालनं नृपतिविनाशायेति ।
अग्नेरज्वलनमिन्धनवतोऽप्यग्नेरज्वलनमित्यर्थः ।।

वराहः--"राष्ट्रे यस्यानग्निः प्रदीप्यते दीप्यते च नेन्धनवान् ।
मनुजेश्वरस्य पीडा तस्य सराष्ट्रस्य विज्ञेया ॥"

मनुजेश्वरस्य पीडा विनाशरूपा । प्रदीप्यत इति सातिशयज्वलनमाह--

अतोऽग्निज्वलने पुंसां व्याधिराश्वेव जायते । इति बृहद्यात्रावचन-मीषज्ज्वलनपरमिति ।

विष्णुधर्मोत्तरे--"अनग्निर्दीप्यते यत्र राष्ट्रे भृशमनिन्धनः ।
न दीप्यते चेन्धनवान् सराष्ट्रः पीड्यते नृपः ॥"

वार्हस्पत्ये--"अग्निस्तु दीप्यते राष्ट्रे यत्राकस्माद विनेन्धनम् ।
न दीप्यते चेन्धनवान् सराष्ट्रः पीड्यते नृपः ।।
प्रज्वलेदम्बु मासं वा तथार्द्रं वापि किञ्चन ।
अग्निं विना च शुष्काणि नियतं नृपतेर्बधः ॥"

मात्स्ये- प्रासाद-तोरणद्वार नृपवेश्मसुरालयम् ।
एतानि यत्र दह्यन्ते तत्र राजयभम्भवेत् ॥
विद्युता वा प्रदह्यन्ते तत्रापि नृपतेर्भयम् ॥"

वराहः—प्रासादभवनतोरणकेत्वादिषु चानलेन दग्धषु ।
तडिता वा षण्मासात् परचक्रागमो भवति ॥"

वार्हस्पत्ये--"प्रासादतोरणद्वारं प्राकारं कशिपुं गृहम् ॥
शयनासनपानञ्च ध्वजं छत्रं सचामरम् ॥
यद्यनग्निः प्रदह्येत वैद्युते वाऽपि निर्दहेत् ।
सप्ताहाभ्यन्तरे तत्र नृपतेर्नियतं बधः ॥"

प्रासादोऽत्र - राज्ञो मन्दिरम । कशिपुमाच्छादनवस्त्रादि । अतएव कशिपुभं जाच्छादनस्यैवोक्त्या - कशिपोः पुंसीति मेदिनीकारलिखनात् "कशिपु" इति पाठः क्वाचित्कोऽयुक्तः, अतिलक्षणाप्रसङ्गात् । शयन इति यस्य शयनादौ दाहस्तस्य फलमिति सागरः ।

बृद्धगर्गः--"पुरवाहनयानानां ज्वलनञ्च मुहुर्मुहुः ।
दृश्यते यत्र सप्ताहात् तत्र चाशु भयम्भवेत् ॥
प्रदीप्यते च सहसा चतुष्पात् पक्षिमानुषः ।
वृक्षा वा पर्वता वाऽपि परचक्रभयम्भवेत् ॥"

पराशरः – चतुष्पत्पक्षिमनुष्याणामङ्गेषु धूमादिदर्शनं परचक्रागमायेति ।

विष्णुधर्मोत्तरे – 'पुरवाहनयानेषु चतुष्पाद मृगपक्षिषु ।
विनाग्नि विस्फुलिङ्गश्चेद्दृश्यते यत्र कुत्रचित् ॥
विकाराश्चायुधानाञ्च तत्र सङ्ग्राममादिशेत् ॥"

पराशरः--प्रासादचैत्यधूमप्रादुर्भावो महते भयायेति ।

बृद्धगर्गः--"प्रासादेषु च चैत्येषु यदि धूमो विनाग्निना ।
भवति च बिना धूममग्निर्वाऽपि भयाय तत् ॥"

बार्हस्पत्ये--"छत्र गृहे वाऽथ रथे ध्वजे वा धूमः समुत्तिष्ठति यत्र तूर्णम् ।
स पार्थिवः साश्वमनुष्यकोषैः पराभवं याति जनक्षयञ्च ॥"

वृद्धगर्ग.--"शयनाशनयानेषु केशप्रावरणेषु च ।
दृश्यतेऽग्निस्फुलिङ्गो वा धूमो वा मरणाय तत् ॥"

यस्य शयनादौ तस्य मरणमित्यर्थः ।

वराहः--"धूमाग्निविस्फुलिङ्गैश्शय्याम्बरमूर्द्धजैर्मृत्युः ॥"

गार्गीये--"अग्निरुदीप्यते यत्र राष्ट्रे यस्य त्वनिन्धनः ।
न दीप्यते दीप्यते तद्राष्ट्रं पीड्यते नृपम् ॥
विद्युत्तारा प्रदह्यन्ते तत्रापि नृपतेर्भयम् ।
मलिनानि तु यानि स्युर्विना पांशुरजादिभिः ॥
धूमश्चानग्निजो यत्र तत्र विद्यान्महद्भयम् ॥"

अत्र शान्तिमाह--

वृद्धगर्गः---"समिद्भिः क्षीरिवृक्षाणां सर्षपेन ससर्पिषा ।
होतव्योऽग्निः स्वकैर्मन्त्रैः सुवर्णञ्चात्र दक्षिणा ॥

**बैजवापः**-"अनग्नावग्निज्वलने अनग्नौ धूमसम्भवे ।
आममांसस्य ज्वलने दाहे च नववाससः ।।
अग्न्यपत्यभये चैव हेम्नो बृद्धिविनाशयोः ।
एष्वद्भुतेषु विधिवदाग्नेयीं शान्तिमाचरेत् ।।"

**मयूरचित्रे**- अनग्नावग्निज्वलने द्वितीयां दिव्यचोदिताम् ।
आग्नेयीं यदि वा शान्तिं तत्र कुर्यात्समाहितः ।।
वैश्वानराय स्वाहेति मन्त्रेण घृतसम्प्लुताः ।
वैकङ्कतस्य समिधो जुहुयात्संशितव्रतः ।।
हुत्वा सप्तसहस्राणि चरुङ् कुर्यात्तथाऽशनम् ।
तर्पयेद्ब्राह्मणांश्चैव दधिक्षीरगुडोदनैः ।।
पायसैर्मधुसंयुक्तैः क्षीरशान्तिञ्च कारयेत् ।
ताम्रपात्रं तिलैः पूर्णं गृहं धेनुसमान्वितम् ।।
अनड्वाहं सुवर्णञ्च दद्यादन्ते हुतस्य च ।
अनग्नौ धूमसम्पत्तौ स्वामीपत्नीवध स्मृतः ।।
शान्तिरेवैव कर्त्तव्या सर्वोपद्रवनाशनी ।
अथवा वक्ष्यते चैव हिरण्यस्यापहारतः ।।
आग्नेयी तत्र कर्त्तव्या शान्तिरत्र विपश्चिता ।
अङ्गारः पतितो दृष्टो ज्वलन् वृक्षे गृहेऽथ वा ।।
प्रभोर्द्रष्टुश्च नाशाय होमो व्याहृतिभिः स्मृतः ।
आम्रस्यौदुम्बराणाञ्च गौर्देया विप्रभोजनम् ।।

आम्रस्यौदुम्वरस्य च समिद्भिर्होम इत्यर्थः । गौर्देया, ब्राह्मणभोजनञ्च कारयितव्येत्यर्थः ।

धान्यकोष्ठे यदा धूमस्तदा सञ्जायते भयम् ।
दधिमधुघृताक्तानामुपोष्य समिधन्ततः ।।
जुहुयादयुतं संख्या हेमन्दद्याद् द्विजाय च ।।"

**नारदः**– "गृहे दाहो भवेद्यस्य अङ्गदाहस्तथैव च ।
केशाश्चापि तु दह्यन्ते पटो वा दह्यते यदि ।।

स्नानन्तत्र प्रकुर्वीत शान्तिञ्चेमां समाचरेत् ।
तिलधान्ययवानाञ्च घृतेन मधुना सह ॥
आहुतीनां सहस्रन्तु जुहुयाच्च समाहितः ।
इषेत्वोर्जेति मन्त्रेण धेनुन्दद्याच्च दक्षिणाम् ॥
क्षीरन्तत्र प्रकर्त्तव्यं ततः शान्तिर्भविष्यति ।
मासमेकं द्विजश्रेष्ठ क्षेपयद् ब्रह्मचर्यया ॥
यात्रोद्वाह न कुर्वीत मासमेकं न सशयः ।
अन्यथा पुत्रदाराणां मरणञ्च भविष्यति ॥
षड्भिर्मासैश्च सम्पूर्णैः स्वयमेव विनश्यति ।
तस्माद्यत्नेन कर्त्तव्यमिति दोषस्य दर्शनात् ॥"

**मयूरचित्रे** — "अपहारे हिरण्यस्य प्रदाहे भवनस्य च ।
शिलामण्डपदाहे च दाहे देवकुलस्य च ॥
देहदाहेऽथ देवानां नृत्ये हसितवम्पयोः ।
गाने धूमायने स्वेदे क्रीडने ज्वलने तथा ॥
रक्तधाराश्रुतौ चैव दाहे च नववाससः ।
कुटम्बस्य क्षये विद्वान् शुभकर्मसमारभे ॥
आग्नेयीं कारयेच्छान्ति विशेषः श्रूयतामिह ।
आग्नेयचरुहोमान्ते चरोरेवाहुतिद्वयम् ॥
अग्निमूर्द्धेति मूर्द्धानमिति मन्त्रद्वयेन च ।
तस्योपरिष्टादाज्यस्य सावित्र्या चाहुतिद्वयम् ॥
कनकं रजतं ताम्रं दद्याद्धोत्रे च दक्षिणाम् ॥"

अग्निमूर्द्धा दिव इत्यादि, ओं मूर्द्धानन्दिवो अरतिमित्यादि मन्त्रद्वयेन च चर्वन्नं द्विधा, सावित्रीमन्त्रेण च घृतं द्विधा, एवमाहुतिचतुष्टयन्दद्यादित्यर्थः । अथ होमाद्भुतानि, **विष्णुधर्मोत्तरे**---

प्रदक्षिणावर्त्त शिखस्तप्तजाम्बूनदप्रभः ।
रथौघमेघनिर्घोषो विधूमश्च हुताशनः ॥
अनुलोमः सुगन्धश्च स्वस्तिकाकारसन्निभः ।

वर्धमानाकृतिश्चैव नन्द्यावर्त्तनिभस्तथा ॥
प्रसन्नार्चिर्महाज्वालः स्फुलिङ्गरहितो हितः ।
स्वाहावसाने ज्वलनः स्वयन्देवमुखं हविः ॥
यदा भुंक्ते महाराज तदा राज्ञो हितं वदेत् ।
हविषस्तु यदा वह्नेर्न स्यात्सिमसिमायितम् ॥
न व्रजेयुश्च मध्येन मार्जारमृगपक्षिणः ।
पिपीलिकाश्च कर्मज्ञ तदा ब्रूयाज्जयं नृपे ॥
मुक्ताहारगुणाभे च वह्नौ राज्ञां जयं वदेत् ।
तथैव च जयं ब्रूयात्प्रस्तरस्याप्रदायिनि ॥"

**योगयात्रायां**—"कृतेऽपि यत्नेऽतिकृशः कृशानुर्यातव्यकाष्ठाविमुखो नतार्चिः ।
वामीकृतावर्त्तशिखोऽतिधूमो विच्छिन्नसोत्कम्पविलीनमूर्त्तिः ॥
सिमसिमायित चास्य हविर्हुतं सुरधनुः सदृशः कपिशोऽथवा ।
रुधिरपीतकबभ्रुहरिच्छविः परुषमूर्त्तिरनिष्टकरोऽनलः ॥
खरकरभवानरानुरूपो निगडविभीषणशस्त्ररूपभृद्वा ।
शवरुधिरवसास्थिवस्त्रगन्धो हुतभृगनिष्टफलः स्फुलिङ्गकृच्च ॥
वर्णविपाटनतुल्यनिनादो जर्जरशब्दविरूक्षरवो वा ।
आकुलयंश्च पुरोहितमर्त्यान् धूमलवैर्न शिवाय हुताशः ॥
अग्न्याश्रितं यत्फलमुक्तमस्मिंस्तज्जातकर्मादिषु पौष्टिकेषु ।
यज्ञेषु सर्वेषु च वह्निकार्येष्वेवं वदेद्यस्य यथानुरूपम् ॥"

**फलपाकस्तु गार्गीये**—"अनग्निज्वलने विद्यात्सद्यः फलम् ।"

**पराशरेण तु**—"अग्निजाः सप्तरात्रेणेत्युक्तम् ।"

इत्यग्न्यद्भुतम् ।

## अथ दीपाद्भुतम्

**वराहः**—"वामावर्त्तो मलिनकिरणः सस्फुलिङ्गोऽल्पमूर्त्तिः
क्षिप्रं नाशं व्रजति विमलः स्नेहवर्त्यन्वितोऽपि ।

दीप: पापं कथयति फलं शब्दवान्वेपथश्च
व्याकीर्णार्चिर्विशलभमरुद्यश्च नाशं प्रयाति ॥
दीप सहतमूर्त्तिरायततनुर्निर्वेपथुर्दीप्तिमान्
निःशब्दो रुचिरः प्रदक्षिणगतिर्वैदूर्यहेमद्युतिः।
लक्ष्मीं क्षिप्रमभिव्यनक्ति सुचिरं यश्चोद्यतं दीप्यते
शेषं लक्षणमग्निलक्षणसमं योज्यं यथाशक्तितः ॥"

शलभाहतिम्मरुतञ्च विना निर्वाणमित्यर्थः। एतद्विपरीतः शुभ इत्यवसेयम्। अत्रानुक्तविशेषशान्तिषु दीपोत्पातेषु अग्न्यद्भुतप्रकरणस्था आग्नेयी शान्तिः कर्त्तव्या। सप्ताहेनाऽस्य फलपाक इति।

## इति दीपाद्भुतम्।

## अथ देवप्रतिमाद्भुतम्

**औशनसे** -"देवतानि प्रसर्पन्ति यस्य राज्ञो हसन्ति वा।
उदीक्षन्ते प्रधावन्ति तत्र विद्यान्महद्भयम् ॥"

**वराहः**--"अनिमित्तचलभङ्गस्वेदाश्रुनिपातजल्पनाद्यानि।
लिङ्गार्चनायतनानां नाशाय नरेन्द्रदेशानाम् ॥"

**मात्स्ये** --"देवतार्चाः प्रनृत्यन्ति वेपन्ते प्रज्वलन्ति च।
आरटन्ति च रोदन्ति प्रस्विद्यन्ति हसन्ति च ॥
पूजन्ते विक्षिपन्ते वा शस्त्रप्रहरणध्वजान्।
अवाङ्मुखाश्च तिष्ठन्ति स्थानात्स्थानं व्रजन्ति च ॥
वमन्त्यग्निं तथा धूमं स्नेहं रक्तं पयो वसाम्।
एवमाद्याः प्रदृश्यन्ते विकाराः सहसोत्थिताः ॥
लिङ्गायतनचैत्येषु तत्र वासं न कारयेत्।
राज्ञो वा व्यसनन्तत्र स देशो वा प्रलीयते ॥
क्षुच्छस्त्रमरणैर्वाऽपि किञ्चित्तन्नावशिष्यते ॥"

**औशनसे** -"विहसन्ति निमीलन्ति हसन्ति च रुदन्ति च।
विक्रोशन्ति च गम्भीरं धूमायन्ते ज्वलन्ति च ॥

प्रतिमाः सर्वदेवानां कथयन्त्यो महद्भयम् ।
मांस शोणित गन्धीनि यत्र तत्र महद्भयम् ॥
यत्र चित्रमुदीक्षेत गायते चेष्टते मुहुः ।
तत्र त्वष्टममासेषु राज्ञो मरणमादिशेत् ॥"

**मात्स्ये त्रिपुरदाहनिमित्तम्**–"अट्टासं प्रमुञ्चन्ति हयाः काष्ठमयास्तथा ।
निमेषोन्मेषणञ्चैव कुर्वन्ति चित्रकर्मगाः ॥"

**औशनसे**- "चित्राणि यत्र लिङ्गानि तथैवायतनानि च ।
विकारं भजतेऽत्यर्थं तत्र विद्यान्महाभयम्॥

**वराहः**--"ऋषिधर्मपितृब्रह्मप्रोद्भूतं वैकृतं द्विजातीनाम् ।"

**औशनसे**---"पितामहे च यच्च स्यात् सोमे धर्मे ऋषिष्वपि ।
निमित्तमशुभन्तच्च ब्राह्मणानां भयावहम् ॥"

**वृद्धगर्गः**---"गुरुशुक्राग्निजानि स्युर्यानि तानि पुरोहिते ।"

**औशनसे**- -"बृहस्पतौ वा शुक्रे वा पवके पाकशासने।
यद्रूपं दृश्यते तत्त विप्रे भाण्डारिके जने ॥"

**पराशरः**---"शक्रधनदयमवरुणरविशशाङ्कानां प्रवरनरपतीनाम्भयदमिति ।

**औशनसे**---"मणिभद्रादयो यक्षा गन्धर्वाश्चित्रयोनयः ।
तज्जम्भयममात्यानां प्रधानानाभिवभावयेत् ॥
गन्धर्वेषु निमित्तं यत्तदन्यस्मिन् प्रदृश्यते ।
सेनापतिनां भयकृत्सचिवानां भयाय च ।"

**वराहः**—"स्कन्दविशाखसमुत्थं माण्डलिकानां नरेन्द्रणाम् ।
यद्रुद्रलोकपालोद्भवं पशूनामनिष्टन्तत् ॥
धातरि च विश्वकर्मणि लोकाभावाय निर्दिष्टम् ॥

**मात्स्ये**- "विप्राश्च पूज्या मधुरान्नपानैः सदक्षिणैस्सप्तदिनं नरेन्द्रैः ।
प्राप्तेऽष्टमेऽह्नि क्षितिगोप्रदानैस्सकाञ्चनैश्शान्तिमुपैति पापम् ।"

वराहः - "बुद्ध्वा देवविकारं शुचिः पुरोधास्त्र्यहोषितः स्नातः।
स्नानकुसुमानुलेपनवस्त्रैरभ्यर्चयेत्प्रतिमाः ॥
मधुपर्केन पुरोधा भक्ष्यैर्बलिभिश्च विधिवदुपतिष्ठेत्।
स्थालीपाकं जुहुयाद्विधिवन्मन्त्रैश्च तल्लिङ्गैः॥
इति विबुधविकारे शान्तयः सप्तरात्रम्
द्विजविबुधगणार्चा गीतनृत्योत्सवश्च।
विधिवदवनिपालैर्यैः प्रयुक्ता न तेषाम्
भवति दुरितपाको दक्षिणाभिश्च रुद्धः॥

बार्हस्पत्ये—"देवतार्चाविकारेषु शुचिर्विद्वान् पुरोहितः।
त्रिरात्रोपोषितो भूत्वा नवशुक्लाम्बरः शुभः॥
देवतां स्नाप्य चाच्छाद्य गन्धाद्यैश्च विभूषयेत्।
मधुपर्केण विधिवदुपतिष्ठेत् समन्ततः।
धूपदीपै — रसनैवेद्यैस्तिललाजाक्षतैस्तथा।
भक्ष्यैर्भोज्यैश्च पेयैश्च मन्त्रभिर्बलिभिस्तथा।
गोदानं भूमिदानञ्च गीतनृत्योत्सवक्रिया।
रौद्री चात्रैव कर्त्तव्या सर्वाद्भुतविनाशिनी॥
नृपश्च गुरवे दद्यादिष्टां भूमिं सदक्षिणाम्॥

इष्टम् —इच्छाविषयीभूतम्। आथर्वणाद्भूते--

अथ यत्र देवता बहुविधा हासादिचेष्टाः कुर्युस्तत्रान्यराजागमनोदकबज्ररोगानावृष्टिशस्त्रकृन्मारजनपदाभ्युत्थानानि राजविनाशश्चेति। तत्र चतुष्पथे रुद्रादिपूजनमुपक्रमेत् ईशानं प्रपद्ये, भूः प्रपद्ये, स्वः प्रपद्ये, महः प्रपद्ये, जनः प्रपद्ये वेदिदेशं प्रपद्ये, अतोग वामष्टशतस्य क्षीरेण पायसं श्रपयित्वा रौद्रैः शान्तां-सर्पिः पायसञ्च जुहुयादुपतिष्ठेत्संस्नाप्य शुक्लाः सुमनसो निवेद्य "भव सर्वासां देवताना" मिति पुनरुपस्थापयेत्। ततस्तस्यां सर्वाः शान्त्युदकेन स्नापयित्वा संपातकृते "नमस्ते गन्धः" इति तिसृभिरनुलिप्य "नतं पक्ष्म ऐन्द्रदेवा" इति गुग्गुल-कुष्टधूपं दद्यात्। एवं स्वपुरदारामात्याय राज्ञे जनपदेभ्यो मन्त्रवर्जं ब्राह्मणान् भोजयित्वा एभ्य एव गाः प्रदद्यादिति।

मयूरचित्रे--"प्रतिमा शिवलिङ्गञ्च स्विद्यते यदि वाऽपि हि ।
दुर्भिक्षं शस्त्रसम्पातो मरणञ्च तदा भवेत् ॥
दधिमधुघृताक्तानां समिधामयुतन्ततः ।
औदुम्बरीणां जुहुयादेकरात्रोषितः शुचिः ॥
बृषभन्ददयादियञ्चापि शान्तिः कार्या विपश्चिता ।
वाप्यादीनां पयोवृद्धौ चूडाशाखा प्रभेदने ॥
यद्वा लिङ्गस्य संस्वेदे विश्वतश्चक्षुरित्यथ ।
अर्कहोमो विधातव्यः शान्तिरन्यापि कथ्यते ॥
अहनि स्नापयेत्सप्त दध्ना क्षीरेण सर्पिषा ।
कारयेद् भूमिदोहञ्च नटप्रेक्षणकन्तथा ॥
होतव्यं लक्षमेकन्तु समिधं श्रीफलानि च ।
इमा रुद्रेति मन्त्रेण द्विजा भोज्याः सदक्षिणाः" ॥

उत्पातत्रितये चैषा शान्तिः फलगुरुलाघवमवगम्यायुतसङ्ख्या न्यूना वा सङ्ख्या होमे अवगन्तव्या ।

तत्रैव—"कम्पे हास्ये तथा नृत्ये रुदिते गान एव च ।
निमेषोन्मेषने याने देवमातृगणस्य च ॥
जल्पने क्रीडने चैव राजामात्यबधो भवेत् ।
धनक्षयश्च पौराणां देशोपद्रव एव च ॥
पुंस्त्रीनाम्नां नराणाञ्च स्त्रीणामपि बधो भवेत् ।
अत्र चाभ्यर्चयेद्देवान् गन्धमाल्यानुलेपनैः ॥
शंखदुन्दुभिनादैश्च श्रीमद्भिर्गीतवादितैः ।
औदुम्बरीणां समधां प्रयतो जुहुयाच्छतम् ॥
त्रिरात्रोपोषितो भूत्वा ऐन्द्रैर्मन्त्रैस्समाहितः ।
उपहारश्च कर्त्तव्यो नृत्यगीतोपवादितैः ॥
गावश्च कपिला देया हुतान्ते भूरि दक्षिणाः ॥
ततः शाम्यति तत्पापं शतक्रतुमतं यथा ॥
परित्यजन्ति पुष्पाणि पूजिता देवता यदि ।
स्थानत्यागो भवेत्तत्र रोगपीडा भवेन्नृणाम् ॥
कारयेत्तत्र शान्तिञ्च होमञ्चैव सदक्षिणम्" ॥

नारद: "यत्र देवकुले वज्रं पतेद् गृध्रोऽथवा विशेत् ।
कङ्को वा पतते यत्र चूडायामग्निदर्शनम् ।
ईशानं भिद्यते यत्र वज्रेणैवाहतं क्वचित् ।
लिङ्गम्वा स्विद्यते यत्र कम्पते वाऽनिमित्ततः ।
चूडाभङ्गो भवेद्यत्र प्रतिमा स्विद्यते यदि ।
ग्रामोत्सादो भवेत्तत्र स्वामिनो मरणम्भवेत ॥
राज्ञो वा मरणन्तत्र धनं धान्यञ्च नश्यति ।
अत्र शान्ति प्रवक्ष्यामि येन सम्पद्यते शुभम् ॥
रत्निमात्रमधः खात्वा अधस्ताद्द्वादशाङ्गुलम् ।
कुण्डं कृत्वा विधानेन ततो होमं समाचरेत् ॥
शुचिश्च प्रयतो भूत्वा अग्निः स्थाप्यो विधानतः ।
चरुञ्च पशुदैवत्यं माधयित्वा विधानतः ॥
परिधायाहतं वासः शाभनं द्विजसत्तम ।
ससुवर्णेन हस्तेन ततः कर्म समाचरेत् ॥
अष्टोत्तरशतं हुत्वा घृताक्तां समिधन्ततः ।
माषैर्मुद्गैस्तिलैश्चैव तण्डुलैश्च सितैस्तथा ॥
घृतेन मधुना चैव नैवेद्यानि च कारयेत् ।
सम्पूर्णानां शरावाणां कुण्डे कुर्यान्निवेदनम् ॥
तिलैर्धान्यैर्यवैश्चैव घृतेन मधुना सह ।
एभिः पञ्च सहस्राणि शक्तिबीजेण होमयेत् ॥
होमान्ते तर्पयेद्विप्रान् दक्षिणा भोजनादिना ।
भूमीन्धनमनड्वाहं स्वर्णं धान्यञ्च दक्षिणाम् ॥
पञ्चगव्यन्ततः कृत्वा स्नायाद्देवालये द्विजः ।
कलशेन पुनः स्नायाद्देवं सम्पूज्य यत्नतः ॥
बलिन्दत्वा विधानज्ञः कृशरैः पायसैस्तथा ॥
पुनर्द्विजातिजातञ्च अन्यद्वाऽत्यदभुतं द्विजम् ।
न भवेदशुभं किञ्चित्सर्वदेवाभयं भवेत् ।
ईशानं स्थापयेत्तत्र यागं कृत्वा विधानतः ॥

एवं कृत्वा विधानन्तु कृतकृत्यो भवेन्नरः।
मण्डपस्य यदा भित्तिः खण्डो देवकुलस्य च ॥
अकस्मान्निपतेद्यत्र कम्पते वाऽनिमित्ततः।
लिङ्गानि तत्र वक्ष्यामि तन्मे निगदतः शृणु ॥
राज्ञो भयञ्च दुर्भिक्षं वृष्टिहानिस्तथैव च।
अग्निदाहश्च सम्पातो देशे च मरकं भवेत् ॥
दधिमधुघृताक्तानामश्वत्थसमिधान्ततः ।
जुहुयादष्टशतं प्राज्ञ इमा रुद्रेति मन्त्रतः ॥
धेनुञ्च दक्षिणान्दद्यात्तिलपात्रं सकाञ्चनम्।
अनेनैव कृतेनाशु ततः सम्पद्यते शुभम् ॥"

**फलपाकसमयमाह** पराशरः--सम्बत्सरे पूर्णेऽर्च्चाविकारजमिति ।

इति देवप्रतिमाद्भुतम् ।

## अथ शक्रध्वजाद्भुतम्

**अथ शक्रध्वजयष्टिकरणाय** वृक्षच्छेदपातशब्दादिफलम्—

**वराहः**—"छिन्द्यात्प्रभातसमये वृक्षमुदक्प्राङ्मुखोऽपि वा भूत्वा।
परशोर्जर्जरशब्दो नेष्टः स्निग्धो घनश्च हितः ॥
नृपजयदमविध्वस्तं पतितमानाकुञ्चितञ्च पूर्वोदक।
अविलग्नं चान्यतरौ विपरीतमतस्त्यजेत् पतितम् ॥"

शकटस्थशक्रध्वजानयने चक्रारभङ्गादिफलम्--

**वराहः**—"अरभङ्गे बलभेदो नेम्या नाशो बलस्य विज्ञेयः।
अर्थक्षयोऽक्षभङ्गे तथाऽणिभङ्गे तु वार्द्धकिनः ॥
यष्टिं प्रवेशयन्ती निपातयन्तो भयाय नागाद्याः।
बालानान्तलशब्दे सङ्ग्रामः सत्त्वयुद्धं वा ॥
नातिद्रुतं नच बिलम्बितमप्रकम्प—
मध्वस्तमाल्यपिटकादि विभूषणञ्च ।

उत्थानमिष्टमशुभं यदतोऽन्यथा स्यात्-
तच्छान्तिभिर्नरपतेः शमयेत्पुरोधाः ॥"

**विष्णुधर्मोत्तरे**—"इन्द्रध्वजशिरो भिद्येत्पतेदिन्द्रध्वजो यदि ।
भिद्यते शक्रयष्टिर्वा नृपतेर्नियतं बधः ॥
यन्त्रभङ्गे तथा ज्ञेयं रज्जुच्छेदे तथैव च ।
मातृकायास्तथा भङ्गे परचक्रभयं वदेत् ॥
इन्द्रध्वजोपकरणं यत्किञ्चिद् द्विजसत्तम ।
विनाशे तस्य विज्ञेया पीडानगरवासिनाम् ॥

**औशनसे**—"देवराजध्वजानान्तु भङ्गपातप्रकम्पनम ।
चतुष्पदाद् भीतये तत्र राज्ञां पापकरं ध्रुवम् ॥"

पापं-मरणम् । **आथर्वणाद्भुते च**—

"अणिभङ्गे जनपदान् मूलभङ्गे तु नागरान् ।
शिरोभङ्गे तु राजानं मध्यभङ्गे तु मन्त्रिणः ॥"

हन्तीति सम्बन्धः ।

इन्द्रारको यदा भिद्येत् राजकोषो विनश्यति ।
रज्जुच्छेदे परीपाते नृपतिस्तु विनश्यति ॥"

**वराहः**---"राज्ञी विनाशं पतिता पताका करोत्यवृष्टिं पिटकप्रपातः ।
मध्याग्रमूलेषु च चक्रभङ्गो हिनस्ति मन्त्रिक्षितिपालपौरान् ॥"

**आथर्वणाद्भुते शक्रध्वजपतने** दिक्फलम्—

"यदि प्राच्यामग्निभयम् । यदि दक्षिणस्यां यमभयम् । यदि प्रतीच्यां वरुणभयम् । यद्युदीच्यां क्षुद्भयम् । यद्यन्तर्देशेषूभयतो भयं विद्यादिति ।"

**वराहसंहितायाम्**— 'छत्रभङ्गपतने नृपमृत्युः ।" तथा च--

रज्ज्वा भङ्गे छेदने बालपीडा राज्ञो मातुः पीडनं मातृकायाः ।
यद्यत्कुर्युर्बालिकाश्चारणा वा तत्तत्तादृग्भावि पापं शुभं वा ।"

**गार्गीये**--"प्रहृष्टमनसः सर्वे क्रीडेयुर्मुदिता यदि ।
तदा जलेन गन्धैश्च विद्यात्सौभिक्ष्यलक्षणम् ॥
अमेध्यै रक्तकैः केशैर्भस्मना कर्द्दमेन वा ।
दुर्भिक्षं क्रीडिते विद्याच्छस्त्रैस्यापि भयम्भवेत् ॥
निर्घातोल्कामहीकम्पा दीप्ताश्च मृगपक्षिणः ।
उच्छ्रीयमाणाः शीघ्राश्च वायवश्च तदा भयम् ॥"

**वराहः**--"हन्ति वाऽप्यथ पुरोहितमुल्का पार्थिवस्य महिषीमशनिश्च ।
धूमावृते शिखिभयं तमसा च मोहो
व्यालैश्च भग्नपतितैर्न भवन्त्यमात्याः ॥"

**आथर्वणाद्भुते**--गृध्रश्चेत्तस्मिन् पतति मृत्योर्भयम्भवति । मृत्योः-नृपमृत्योर्देशमृत्योर्वेति ।

**विष्णुधर्मोत्तरे**- "निलीयते चेत्क्रव्यादः शक्रयष्टौ तथा द्विज ।
राजा वा म्रियते तत्र स देशो वा विनश्यति ।"

**वराहः**-"क्राव्यादकौशिककपोतककाककङ्कैः केतुस्थितैर्महदुशन्तिभयं नृपस्य ।
चाषेण चापि युवराजभयं वदन्ति श्येनो विलोचनभयन्नियतङ्करोति ॥"

**तथा च**--"तस्करान् मधु करोति निलीनम् ।"

**विष्णुधर्मोत्तरे**--"दिव्यान्तरिक्षभौमाः स्युरुत्पातास्तत्र वै यदा ।
तेषान्तीव्रतरं ज्ञेयं फलमत्यन्तदारुणम् ॥
इन्द्रध्वजनिपाते तु प्रायश्चित्तमिदं स्मृतम् ।
इन्द्रयागं पुनः कुर्यात् सौवर्णेनेन्द्रकेतुना ॥
राज्यन्दत्वा तु गुरवे बन्धनानि प्रमोचयेत् ।
सप्ताहं पूजयित्वा तु ध्वजन्दद्याद् द्विजातिषु ॥
शान्तिरैन्द्री भवेत्कार्य्या यष्टव्यश्च पुरन्दरः ।
महाभोज्यानि कार्याणि ब्राह्मणेभ्यो दिने दिने ॥
गावश्च देया द्विजपुङ्गवेभ्यो हिरण्यवासो रजतैस्समेताः ।
एवं कृते शान्तिमुपैति पापं वृद्धिस्तथा स्यान्मनुजाधिपस्य ॥"

नारदः-··"इन्द्रे तूत्थाप्यमाने तु यदा यष्टिर्विभिद्यते ।
राजविभ्रममत्यर्थं ग्रामोत्सादश्च जायते ।
सप्ताश्वान्रथसंयुक्तान् हेमरत्नविभूषितान् ।
विप्राय दक्षिणान्दद्यात्ततः सम्पद्यते शुभम् ॥

बैजवापः—"उच्छ्रितस्य तु शक्रस्य ध्वजप्रपतने सति ।
कारयेद्वैष्णवीं शान्तिं भूपतिर्भूरि दक्षिणाम् ॥"

मयूरचित्रे –"शक्रस्योत्थानवेलायां यष्टिभङ्गे च मध्यत. ।
नृपतिर्म्रियते तत्र नगरोत्सादनम्भवेत् ॥
उपोष्य जुहुयात्तत्र दूर्वाणामयुतं शुचिः ।
दधिमधुघृताक्तानां समिधां ब्राह्मणाय च ॥
रथं सप्ताश्वसंयुक्तं दद्याच्छत्रं सकाञ्चनम् ।
धेनूनां विंशतिस्तत्र दशमी दिव्यजाऽथवा ॥
शक्रध्वजे तु गृध्रस्य पतने पुरसंक्षयः ।
विद्रवो नृपतेर्विद्याच्छान्तिः कुर्याच्च षोडशीम् ॥"

एतच्छान्तिकरणाशक्तौ च शक्रपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका शान्तिर्वा कर्त्तव्या । फलपाकोऽस्य सम्वत्सरेणेति ।

इति शक्रध्वजाद्भुतम् ।

## अथ गृहाद्यद्भुतम्

बार्हस्पत्ये –"राजवेश्मनि चैत्येषु प्रासादे तोरणे ध्वजे ।
औत्पातिकानि दृश्यन्ते राज्ञां तत्र भयम्भवेत् ॥
प्रासाद तोरणाट्टाल—द्वारप्राकारवेश्मनाम् ।
अकस्माद्दलिनाम्भङ्गे विज्ञेयो राजमृत्यवे ॥"

औशनसे "प्रासादानां विमानानां पतने कम्पने तथा ।
विना निमित्तं नृपतेः पीडामाहुर्मनीषिणः ॥

प्रासादाश्च विमानानि प्रज्वलन्ति तु यत्र वै।
दृढान्येव विशीर्यन्ते यस्य स म्रियते नृपः ॥"

गार्गीये—"अकस्मादथवा कोष्ठस्सुदृढो निपतेद्यदि।
स्वामिनो मरणन्तत्र षण्मासाद्भवति ध्रुवम् ॥"

वराहः--"उन्मादः स्वयमुद्घाटिते च पिहिते स्वयं कुलविनाशः।

मात्स्ये—"एतेष्वभ्यर्चयेच्छक्रं सपत्नीकं द्विजोत्तमम्।
भोज्यानि चैव कार्याणि सुराणां बलयस्तथा ॥
गावश्च देया द्विजपुङ्गवेभ्यो भुवस्तथा काञ्चनमम्बरञ्च ॥
होमश्च कार्योऽमरपूजनञ्च एवं कृते शान्तिमुपैति पापम् ॥"

वार्हस्पत्ये—"महाबलिं महाशान्तिं भोज्यानि सुबहूनि च।
पूजयेच्च महेन्द्रञ्च महादेवमथापि वा ॥
ऐन्द्रस्थाने तु मोहन्द्रीं रौद्रीं रौद्रे च कारयेत्।
गवामष्टशतन्दद्यात्प्रजास्वेवं शुभम्भवेत् ॥"

गार्गीये—गृहाट्टालकहर्म्यादौ वरटा निवसेद्यदि।
पिकोऽथ निवसेद्वाऽपि तदा स्वामिवधो भवेत् ॥"

विष्णुधर्मोत्तरे -"गृहस्य च यदा चाषो व्यहरेत्पुरतः स्थितः।
नृपावमाने वदति चाषः कलहभाजने ॥"

वसन्तराजः-- "पर्यङ्कपानासनसन्निविष्टो गृहं प्रविष्टः कुरुते कपोतः।
दुखं त्रिभेदोऽपि विपाण्डुरः स्यादर्धेन चित्रो दिवसेन धूम्रः ॥"

मात्स्ये--"उलूको विशते यत्र निपतेद्वा तथा गृहे।
ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ॥
प्राकारद्वारगेहेषु तोरणापणवीथिषु।
केतुछत्रायुधाद्येषु श्व्यादः सम्पतद्यदि ॥
जायते चाथ वल्मीको मधुनाऽध्यासते यदि।
स देशो नाशमायाति राजा वा म्रियते तदा ॥"

बार्हस्पत्ये "द्वारप्राकारगेहेषु प्रासादे तोरणे ध्वजे।
पतन्ति बहवो गृध्राः काकोलूकबकैस्सह ॥
अथाप्येतेषु स्थानेषु मधु संजायते यदि।
नलिन्यश्चाथ वल्मीके षण्मासैर्म्रियते नृपः ॥"

वराहः—"गृहचैत्यतोरणेषु द्वारेषु च पक्षिसंघसम्पातः।
मधुवल्मीकाम्भोरुहसमुद्भवश्चापि नाशाय ॥
प्रविशन्नरेन्द्रभवने कपोतकः कौशिको यदि वा ॥"

भयद इति सम्बन्धः। आग्नेये हिरण्यकशिपुबधनिमित्तम्—

"हिरण्यकशिपोर्गेहे विनाशायाभवन्मधु।
कौशिको विनिविष्टश्च श्यामा गेहमथाविशत् ॥"

अत्र वायसादिफलविस्तरभयान्नोक्तं, तद्वायसाद्भुते निरूपयिष्यते। मृगपक्षिविकारविहता शान्तिर्विष्णुधर्मोत्तरमत्स्यपुराणयोर्विहता सा। च मृगाद्यद्भुते द्रष्टव्या।

नारदः—मण्डपस्य यदा भित्तिश्चूडा देवकुलस्य च।
अकस्माद्भिद्यते यत्र कम्पते वाऽनिमित्ततः ॥
राज्ञो भयञ्च दुर्भिक्षं वृष्टिहानिस्तथैव च।
अग्निदाहश्च सम्पातो देशे च मरकं भवेत् ॥
दधिमधु-घृताक्तानामश्वथ-समिधान्ततः।
जुहुयादष्टशतं राज्ञः इमा रुद्रेति मन्त्रतः ॥
धेनुञ्च दक्षिणान्दद्यात्तिलपात्रं सकाञ्चनम् ॥"

ओं इमा रुद्राय तपसे इत्यादि मन्त्रेण।

मयूरचित्रे—"मण्डपस्य भवेच्चूडाभङ्गो देवकुलस्य च।
दुर्भिक्षावर्षणे तत्र सम्पद्येते न संशयः ॥
हव्याश्च दधिमध्वक्ताः शमीनां समिधोऽयुतम्।
भूरिमिन्द्रप्रतिमिति मन्त्रेण रूप्यदक्षिणा ॥

दर्वी वा मुशलं वापि स्थूणा वा भिद्यते यदि ।
भिद्यते मूर्धवंशश्च गृहं देवकुलानि च ।
मासाभ्यन्तरमात्रेण गच्छन्त्युत्सादनन्तु तत् ।
दस्युभिश्च विलुण्ठ्यन्ते वर्णा गच्छन्ति संक्षयम् ॥
मन्दिरे मूर्धवंशस्य भङ्गे स्वामिवधो भवेत् ।
गृहं त्यक्त्वा समिद्धोमः कार्यों वैकङ्कतस्य च ॥
अष्टोत्तरसहस्रन्तु मन्त्रेऽस्मिन् जातवेदसः ।
भोजनं ब्राह्मणायाथ दातव्या गौश्च दक्षिणा ॥"

**बैजवापः**—"मूर्धवशस्य स्फोटे तु स्थूणायाश्च प्ररोहने ।
वधूद्वहनयानस्य छेदेन भेदनेऽपि वा ॥
सोमं सम्पूज्य च बुधः सौम्यां शान्ति प्रयोजयेत् ॥"

**मयूरचित्रे**—"यस्य गेहस्य कम्पेते स्तम्भवंशावकारणम् ।
दम्पत्योर्जायते मृत्युस्तत्र शान्तिरियं स्मृता ॥
भव्यहोतव्यमयुतं दूर्वाणां समिधा तथा ।
काण्डात्काण्डेति मन्त्रेण हेमन्दद्यात्सभोजनम् ॥"

**नारदः**—"स्थूणा च कम्पते यत्र गृहङ्कटकटायते ।
गृहन्तत्र प्रशीर्येत गृहिणी म्रियतेऽथ वा ॥
दधिमधुघृताक्तानान्तिलानामयुतन्ततः ।
होमयेत्तत्र धेनुञ्च दक्षिणात्वेन कल्पयेत् ॥
वस्त्रयुग्मं प्रदातव्यं काञ्चनेन समन्वितम् ।
ब्राह्मणान् भोजयेत्तत्र धान्यन्दद्याच्च दक्षिणाम् ॥"

**मयूरचित्रे**—"यदा कटकटायन्ते भवनान्यायुधानि च ।
मासाभ्यन्तरमात्रेण तदा सङ्ग्राममादिशेत् ॥
दिव्याऽत्रैकादशी शान्तिः करणीया विपश्चिता ।
निर्भग्ने तोरणे द्वारे शान्तिरत्रैव दिव्यजा ॥"

**नारदः**—"अकस्माद्गृहभूमिन्तु स्फुटते कुड्यकम्पनम् ।
गृहञ्च कम्पते यत्र केकारावं विमुञ्चति ॥

गृहं वा पतते विप्र मूर्धवंशश्च भिद्यते ।
यस्य गेहे श्रृगालादिः प्रविष्टोऽथ प्रसूयते ।।
गृहन्तस्य विनश्येत प्रभुर्वा म्रियते पुनः ।
पत्नी वा म्रियते तस्य पुत्रस्य मरणम्भवेत् ।।
गृहोत्सादो भवेत्तस्य धनञ्चैव प्रलीयते ।
दधिमधुघृताक्तानां पत्राणां श्रीफलस्य च ।।
जुहुयादष्टसहस्राणि वैश्वानरेति मन्त्रतः ।
सुवर्णं वस्त्रयुग्मञ्च धेनुञ्चापि पयस्विनीम ।।
विप्राय दक्षिणान्दद्यात्ततस्सम्पद्यते शुभम् ।।"

**मयूरचित्रे**—"अकस्माद्गृहमध्ये तु केकारावं विमुञ्चति ।
मासाभ्यन्तरमात्रेण गृहस्योत्सादनं च तत् ।।
अत्रापि प्रथमाशान्तिर्यमलोत्पत्तिसम्भवा ।
मांसास्थीनि समादाय श्मशानां गृध्रवायसाः ।।
श्वाश्रृगालोऽथ वा मध्ये पुरस्य प्रविशेद्यदि ।
विकिरन्ति गृहादौ च श्मशानं तद्गृहम्भवेत् ।।
चौरेण हन्यते लोकः परचक्रस्य चागमः ।
सङ्ग्रामश्च महाघोरो दुर्भिक्षं मरकन्तथा ।।
ऐन्द्री शान्तिस्ततः कार्या वर्धनीपतनोदिता ।
अथवाऽश्वत्थसमिधो हव्या मध्वन्विताास्तिलाः ।।
वैवश्वतेन मन्त्रेण निवेद्यान्नाः सफाणिताः ।
तिलघृतोपहारञ्च क्षीरशान्तिञ्च कारयेत् ।।
ततः शाम्यति तत्पापं प्रजापतिमतं यथा ।"

**नारदः**—मृगाश्चैव वराहाश्च व्याघ्रशार्दूलजम्बुकाः ।
निपतन्ति गृहे यत्र गोरूपाणि तथैव च ।।
मधुवासो भवेद्यत्र द्वारे वा लौहकीलकम् ।
योजितं वापि गोयुग्म प्रविशेद्भवनं यदि ।।
गोशालास्वश्वशालासु मुख्यशालासु वै तथा ।
गृध्रादयः पतन्त्येषु ततः शान्ति समाचरेत् ।।

धान्यानामयुतन्तत्र जुहुयात्क्षेमकृन्नरः ।
धेनुञ्च दक्षिणान्दद्यात्ततः सम्पद्यते शुभम् ॥"

**वसन्तराजः**—"रात्रौ गृहस्योपरिवासमानो दुःखाय शूकस्सुतमृत्यवे स्यात् ।
गृहस्थनाशाय च सप्तरात्रं नाशाय राज्ञो द्विगुणान्यहानि ॥
त्र्यहं गृहद्वारि चरत्युलूके हरन्ति चौरा द्रविणान्यवश्यम् ।
तस्मिन्प्रदेशे निशि मांसयुक्तस्तद्दोषनाशाय बलिः प्रदेयः ॥

**मयूरचित्रे**—"खगौघपतनं चैत्ये गृहद्वारेषु तोरणे ।
मधुवल्मीकपद्मानां जननाशः सदा भवेत् ॥
उलूकश्चैव गृध्रश्च कपोतः श्येन एव च ।
पतन्ति भवने यस्य तस्य प्राहुः महाभयम् ॥
पक्षान्मासात्तथा वर्षान्मृत्युः स्यादगृहमेधिनः ।
पत्न्याः पुत्रस्य मृत्युः द्रव्यञ्चैव प्रणश्यति ॥
ब्राह्मणाय गृहन्दद्याद् दद्यात्तान्मूल्यमेव वा ।
गृह्णीयाद्यदि रोचेत शान्तिञ्चैनां प्रयोजयत् ॥
यवमयं चरुं कृत्वा अश्वत्थसमिधोऽयुतम् ।
मनसः काममित्येतद्धुत्वा जप्त्वा सुखी भवेत् ॥
यदि वा वर्धनी चेति तया शान्तिः प्रदिश्यते ।
ऐन्द्रीं शान्तिन्ततः कुर्यात्त्रातारमिति मन्त्रतः ॥
औदुम्बरीश्च समिधो जुहुयाद् घृतसम्पदा ।
अष्टोत्तरसहस्राणि पञ्च तच्छान्तिकाङ्क्षया ॥
चरुकर्माशनञ्चास्य विप्रान् दधिगुडोदनैः ।
तर्पयित्वा वरं हेमन्दद्याद्धेनुञ्च दक्षिणाम् ॥

**नारदः**—"गृध्रः कङ्कः कपोतश्च उलूकः श्येन एव च ।
चिल्लश्च चर्मविलश्च श्रीशः पाण्डुर एव च ॥
गृहे यस्य पतन्त्येते तस्य गेहं विपद्यते ।
पत्नी च म्रियते तस्य पुत्रा वा भ्रातरस्तथा ॥

धनन्तस्य प्रणश्येत्तु षड्भिर्मासैर्न संशयः ।
चरुञ्च यमदैवत्यं शतमेकं जुहोति च ॥
तिलैर्धान्यैर्यवैश्चैव घृतेन मधुना सह ।
जुहुयात्पञ्च सहस्राणि शक्तिबीजेन मन्त्रवित् ॥
कलायैश्चैव माषैश्च मुद्‌गैश्च सिततण्डुलैः ।
घृतेन दधिना चैव कुण्डे तत्र निवेदनम् ॥
सम्पूर्णांश्च शरावांश्च पत्रेनैव निवेदयेत् ॥
परिधायाहतं वासो जप्त्वा मन्त्रं समाहितः ।
अष्टोत्तरशतं जप्त्वा पत्रं वा श्रीफलस्य च ।
दशावर्त्तन्तु तेनैव शिखायान्धारयेत्ततः ॥
हविष्यञ्च चरेत्तावद्यावद्धोमः समाप्यते ।
एकरात्रोषितो भूत्वा गृहं विप्राय दापयेत् ॥
मूलेनैव ततः कृत्वा स्नापयेत्कलशेन तु ।
धेनुञ्च दक्षिणान्दद्याद्वस्त्रयुग्मं सकाञ्चनम् ॥
भोज्यन्तु कारयेत्तत्र ततः सम्पद्यते शुभम्" ॥

मयूरचित्रे —"गृहीत्वा तु शवस्याङ्गमन्ये तु मृगपक्षिणः ।
प्रविशन्ति गृहे यस्य षड्भिर्मासैः विनश्यति ॥
आज्यहोमो महादानं तत्र शान्ति प्रचक्षते" ।

नारदः---यस्य गेहे श्रृगालादिः प्रविष्टोऽथ प्रसूयते ॥
गृहन्तस्य विनश्येत प्रभुर्वा म्रियते पुनः ॥
पत्नी वा म्रियते तस्य पुत्रस्य मरणं भवेत् ।
गृहोत्सादो भवेत्तस्य धनञ्चैव प्रलीयते ॥
दधिमधुघृताक्तानां पत्राणां श्रीफलस्य च ।
जुहुयादष्टसहस्राणि वैश्वानरेति मन्त्रवित् ॥
सुवर्णं वस्त्रयुग्मञ्च धेनुञ्चापि पयस्विनीम् ।
विप्राय दक्षिणान्दद्यात्ततः सम्पद्यते शुभम् ॥
फणिनोऽभिमुखं यस्य प्रविशन्ति गृहे यदा ।
निर्यान्ति च पुनस्तद्वत्तस्य लिङ्गानि मे श्रृणु ॥

प्रभुश्च म्रियते तत्र धनहानिर्न संशयः ।
दधिमधुघृताक्तानां यः शम्याः समिधोयुतम् ॥
जुहुयात्तत्र गेहे तु शन्नोदेवीति मन्त्रवित् ।
धेनुञ्च दक्षिणान्दद्यात्सुवर्णं वस्त्रयुग्मकम् ॥
एवं निर्वर्तिते होमे शुभं भवति सर्वतः" ।

**मयूरचित्रे** --गृहद्वारेण सर्पस्य प्रवेशे गृहिणीबधः ।
षड्भिर्मासैर्न सन्देह उपोष्य जुहुयात्ततः ॥
दधिमधुघृताक्तानामयुतं जुहुयाच्छुचिः ।
वैकङ्कतस्य विप्राय ताम्रं दद्याच्च दक्षिणाम् ॥
अकस्माद्रक्तधाराश्च पतन्ति जलविन्दवः ।
घृतं तैलं वसा मांसं भवन्ति भवनेऽथवा ॥
ज्वरः श्वासश्च दद्रुश्च कुष्ठं काशो विर्चाचिका ।
पाण्डुरोगश्शिरोरोगो भवन्ति व्याधयोऽपरे ॥
शार्दूलपतने प्रोक्तामैन्द्रीं शान्तिञ्च कारयेत् ।
रक्तधारां गृहे दृष्ट्वा प्राङ्गणे चादिशेद्रणम् ॥
दृष्ट्वा राजा च म्रियते वर्षमासाधिकादथ ।
आम्रपत्रसहस्रञ्च हव्यमष्टोत्तरं ततः ॥
इमा रुद्रेति मन्त्रेण दक्षिणा गौः प्रकीर्त्तिताः ॥"

**पराशरः**—"अन्तर्वेश्मन्यशरीरगीतवादित्रनिःस्वनैस्तत्स्वामिविनाशं विद्यात्।"

**औशनसे** –"श्रूयन्ते यस्य गेहेषु गीतवादित्रनिस्वनाः ।
अकस्मान्म्रियते स्वामी धनञ्चास्य विलुप्यते ॥
अनाहता दुन्दुभयो वादित्राणि नदन्ति च ।
छत्राणि च गृहे यस्य स तु शीघ्रं विनश्यति ॥"

**मात्स्ये** – "विकृते वातजे वाऽपि वायव्या शान्तिरिष्यते ॥"

वायव्या शान्तिस्तु **वाताद्भुतप्रकरणे** लिखितैवेति ।

**वराहः** – "अङ्गारगैरिकाद्यैर्विकृतप्रेताभिवेशनं यस्मिन् ।
नायकविचित्रमथवा नृपः क्षयं याति न चिरेण ।

महाशान्त्योऽथ वलयो भोज्यानि सुमहान्ति च।
कारयेत्तु महेन्द्रञ्च माहेन्द्रीञ्च समर्चयेत् ॥"

अत्रानुक्तविशेषशान्तिषु प्रभूतकनकान्नगोमहीदानादिका फलगुरुलाघवमवगम्य शान्तिरवगन्तव्याः।

इति गृहाद्यद्भुतम्।

अथ वातजोपस्कराद्यद्भुतम्

**औशनसे** –"शङ्खवैणववीणाश्च भेरीमुरजगोमुखाः ।
वाद्यमानाः प्रदृश्यन्ते देशे यत्राप्यघट्टिताः ॥
संभृत्यैव ततो भावमन्यं जनपदं व्रजेत् ।
मृगवाद्यैः स देशो हि वायुश्चात्रोपजायते ॥"

**पराशरः**—"अनाहतानां वाद्यानां श्रवणमाहतानामश्रवणञ्च महते भयायेति।" भयायेति—शस्त्रभयाय।

**विष्णुधर्मोत्तरे**—"वाद्यमाना न वाद्यन्ते वाद्यन्ते चाप्यनाहताः।
आकाशे तूर्यनादाश्च गीतगन्धर्वनिस्वनाः ॥

घोरं शस्त्रभयं भवेदिति सम्बद्ध्यते।

**औशनसे**—"शङ्खवैणवतूर्याणां दुन्दुभीनाञ्च निःस्वनाः।
देशे यत्र भृशन्तत्र राज्ञो दण्डो निपात्यते ॥"

**पराशरः**—"लूकातूर्यध्वनिः पुरःसैन्यमाचष्टे विजने पुरे ॥"

पुरः सैन्यमाचष्टे शत्रूणामित्यर्थः।

**पराशरः**—"आसनशकटयानभाण्डानामकस्मात्सृतिर्महते भयायेति।"

**औशनसे**—"आसनं शयनं यानं यदाऽन्यत्र प्रसर्पति।
राज्ञो मरणमादेश्यं वर्षस्याभ्यन्तरे तदा ॥

व्याहरन्ति प्रसर्पन्ति स्तम्भपाषाणपादपाः ।
शयनासनयानानि नियतं नृपतेर्बधः ॥
नदन्त्यरण्ये तूर्याणि श्रूयन्ते व्योम्नि नित्यशः ।
न वसेत्तत्र राजा तु समागम्य दिशो दश ॥"

दशदिशोऽपि समागम्य तत्र न वसेत्। तेन कृतदिग्विजयोऽपि राजोत्पातमिमं दृष्ट्वा तद्देशे न वसेदित्यर्थः।

**बैजवापः**—"नृत्यगर्ज्जनिष्क्रामैस्तथा कटकटस्वनैः ।
ईशायुग्यहलादीनां स्वामिनो मृत्युमादिशेत् ॥
सम्यग्गोसुतपत्नीनां नाशं ग्रामस्य दस्युभिः ॥"

**बार्हस्पत्ये**—"अरण्ये तूर्यनिर्घोषः श्रूयते यदि वाऽम्भसि ।
श्रूयन्ते च महाशब्दा गीतगान्धर्वनिःस्वनाः ॥
शरीरं व्यथते तत्र व्याधिर्वा सुमहान् भवेत् ॥"

**मात्स्ये**—"यान्ति यानान्ययुक्तानि युक्तान्यपि न यान्ति चेत् ।
चोद्यमानानि तत्र स्यान्महद्भयमुपस्थितम् ॥
काष्ठादर्शकुठारादि विकारं कुरुते यदि ।
गवां लाङ्गलमङ्गश्च स्त्री स्त्रियञ्च निपातयेत् ॥"

तत्र **शस्त्रभयम्भवेदिति** भावः।

**वराहः** "गोलाङ्गलयोः सङ्गे दर्वीसूर्पाद्युपस्करविकारे ।
क्रोष्टकनादे च तथा शस्त्रभयं मुनिवचश्चेदम्" ॥

**पराशरः**—मुशलदर्वीसूर्पखनितृदृषदुपलानां क्रोष्टादिदर्वीहाराभिसरणविकृतचेष्टारुतानि नृपतिभयायेति ।

**बार्हस्पत्ये**—काष्ठं वा नृत्यते यत्र दर्वी वा वहते यदि ।
प्रपतेन्मुशलञ्चापि सूर्पं वा धूयते यदि ॥

तत्र तुमुलं **भयम्भवेदिति** भावः ।

अत्रैतेषु वातजोपस्कराद्यद्भुतेषु वाताद्यद्भुतलिखिता मत्स्यादिपुराणोक्ता

वायव्या श न्तिर्वोद्धव्या। किन्तु मत्स्यपुराणे एव त्वाष्ट्री शान्तिरपि उपस्करादभुतेषु विहिता। तथा हि--

मात्स्ये--"उपस्करणवैकृत्ये त्वाष्ट्री पार्थिवनन्दन" ॥

मयूरचित्रे--"शयनं वाऽऽसनं चापि यस्य संचलति स्वयम्।
तस्य पुंसो विनाशः स्याद्वर्षस्याभ्यन्तरेण तु ॥
अपामार्गसमिद्धोम इमा रूद्रेति मन्त्रतः" ॥

नारदः—"काञ्जिकोद्गमने शब्दे प्रस्वेदे कम्पने तथा।
गृहं तत्र प्रलीयेत गृहिणी म्रियते तथा" ॥

मयूरचित्रे—"वृषी वा भद्रपीठं वा शयनासनमेव वा।
अस्पृष्टा यान्ति खे यत्र तत्र विद्यान्महद्भयम् ॥
प्राजापत्या ततः शान्तिरभीक्ष्णकलहोदिता।
काष्ठानां चलने सद्यो भयं भवति देहिनाम् ॥
म्रियते तु सुतस्तस्य गायत्र्या हव्यमेव तु।
श्रीफलस्य समिल्लक्षं दक्षिणा गौर्द्विजन्मने ॥
शिलामुशलकांस्यानि निपतन्त्युत्पतन्ति च।
तिलदूर्वायुतं हव्यं दानं गोकांस्यमेव च ॥
दर्वी वा मुशलञ्चापि यदि वा यान्त्युदूखलम्।
सार्थवाहजनश्रेष्ठिसचिवानां वधो भवेत् ॥
अथयुक्तमयुक्तं वा यानयुग्मं प्रधावति।
भयन्तत्र प्रदेष्टव्यममात्यस्य वधस्तथा ॥
श्रेष्ठिनां सार्थवाहानां वधोऽन्यस्य जनस्य च।
प्राजापत्या ततः शान्तिरभीक्ष्णकलहोदिता ॥
चलने तोयभाण्डस्य प्रणाशात्स्थानवर्जनात्।
विनश्यति सुतस्तस्य वर्षस्याभ्यन्तरेण तु ॥
अष्टोत्तरसहस्रं स्यादश्वत्थसमिधान्ततः।
हव्यं रौद्र्याथ गायत्र्या गौर्देया विप्रभोजनम् ॥

शब्देन काञ्जिकस्यापि गृहिणीमरणं भवेत् ।
तद्भाण्डं चातिवारि स्याद्राज्ञो मरणमादिशेत् ॥
षड्भिर्मासैर्न सन्देह उपोष्य जुहुयात्ततः ।
दधिमधुघृताक्तानामयुतं जुहुयाच्छुचिः ॥
वैकङ्कतस्य विप्राय दानं गौः कांस्यमेव च ।
दर्वी वा मुशलं वापि ताम्रं दद्याच्च दक्षिणाम्" ॥

इति वातजोपस्करायद्भुतम् ।

## अथ वृक्षवल्लीलतापुष्पफलशस्यान्नव्यञ्जनाद्भुतम्

**वराहः**—"शाखाभङ्गेऽकस्माद्वृक्षाणां निर्द्दिशेद्रणोद्योगम् ।
हसने देशभ्रंशं रुदिते तु व्याधिबाहुल्यम् ॥
सर्पत्सु तरुषु जल्पत्सु चापि जनसंक्षयो विनिर्दिष्टः ।
पतितानां स्वयमुत्थानं भयन्देवजनितञ्च ॥"

**पराशरः**—"वृक्षाणां रोदनेऽकस्मान्निर्दिशेद्देशविद्रवम् ।
शाखाप्रपतनेऽकस्मात्सङ्ग्रामे योधघातनम् ॥
स्थानात् स्थानान्तरगमे देशभङ्गभयम्भवेत् ।
जल्पने व्याधिमाख्याति हसने देशविभ्रमम् ॥"

**वार्हस्पत्ये**—"रूढेष्वन्नक्षयो भवेत्" । वृक्षोष्वित्यर्थः ।

**पराशरः**—शुष्कपादपसमारोहणं दुर्भिक्षायेति ।

**वार्हस्पत्ये**—"अ ोगा यदि शुष्यन्ति तदा दुर्भिक्षलक्षणम् ।

**मात्स्ये**—"अरोगशोषणं ज्ञेयं ब्रह्मन दुर्भिक्षलक्षणम् ।"
**वराहः**—"शुष्कविरोहे वीर्यान्नसंक्षयः शोषणे च विरुजानाम्।
राष्ट्रविभेदस्त्वनृतौ बालवधोऽतीव कुसुमिते बाले ॥"

अनृताविति कुसुमिते, इत्यत्र सम्बध्यते ।

**मात्स्ये**—"स्वराष्ट्रभेदं कुरुते फलपुष्पमनात्तवम् ।"

**औशनसे**--अनृतौ चेत्फलं पुष्पं पत्रं वा सूयते द्रुमः।
विद्याद् द्वादशमे मासि राज्ञस्तत्र विपर्ययम् ॥

द्रुम इत्येकवचनम् चैत्यद्रुमपरमिति **सागरः**।

**पराशरः**—"पादपेष्वन्यर्त्तौ पुष्पफलपत्रप्रादुर्भावः परचक्रागमाय।"

**वार्हस्पत्ये**--"एकवृक्षे तु सन्दृश्य नानात्वं फलपुष्पयोः।
व्यत्यासमयथार्थं वा परचक्रागमो वदेत्॥"

**वराहः**--"वृक्षात् क्षीरस्रावे सर्वद्रव्यक्षयो भवति।
मेघे वाहननाशः संग्रामः शोणिते मूर्द्धिनरोगः॥
स्नेहे दुर्भिक्षभयं महद्भयं निःसृते सलिले॥"

**औशनसे**—"अकाले पुष्पवन्ताः फलवन्तश्च पादपाः।
दृश्यन्ते यस्य राष्ट्रे तु तस्य नाशो विभाव्यते॥
वृक्षाश्चाऽपि तरुणा यत्र स्युः फलपुष्पदाः।
अकाले वाऽपि दृश्यन्ते तत्र विद्यान्महाभयम्॥"

हरिवंशे **हिरण्यकशिपुवधनिमित्तम्**-

"अकाले तु द्रुमाः सर्वे पुष्पन्ति च फलन्ति च।
लताश्च सफलाः सर्वाः **प्राहुर्दैत्य**-- विनाशनम॥

वृद्धाः प्राहुरिति सम्वन्धः।

**पराशरः**--"क्षीरे स्रवति गोपीडां स्नेहे दुर्भिक्षमादिशेत्।
वाहनाण्चयं मद्ये शोणिते शस्त्रजं भयम्॥
व्याधिं मधूनि तोये तु विद्याद्वर्षस्य निग्रहम्॥"

यदा तु पूजितवृक्षजातान्यद्भुतानि स्युः तदा नृपपीडाकराणि भवन्ति। तथाहि उक्तम्

**विष्णुधर्मोत्तरे**--"एतत्पूजितवृक्षेषु सर्वं राज्ञो विपद्यते।
फलपुष्पे वा विकृते राज्ञो मृत्युन्तथादिशेत्।"

औशनसे-"यत्र स्रवेच्चैत्यवृक्षः सहसा विविधान्रसान् ।
पृथक् पृथक् समस्तान्वा तस्य वक्ष्यामि लक्षणम् ॥
घृते मधूनि दुग्धे च स्नेहे चैव तथाम्भसि ।
क्षौद्रे दधिनि पूये वा व्याधयः स्युस्सुदारुणाः ॥
सुरासवे मिथो भेदः शोणिते शस्त्रपातनम् ॥"

पराशरः-"पूज्यपादपपतनमवनिपतिविनाशायेति ॥"

हरिवंशे बाणपराजयनिमित्तम्--

"अनेकशाखश्चैत्यश्च नपपात महीतले ।
अर्चितः सर्वकन्याभिर्दानवानां महात्मनाम् ॥"

वृद्धगर्गः-"यदि वा पूजिताश्चैत्या धूमायन्ति ज्वलन्ति वा ।
विकृतान्यर्तुपुष्पा वा राज्ञो मृत्युभयं वदेत् ॥

वराहः-"पूजितवृक्षेष्वनृतौ कुसुमफलं नृपभयाय निर्दिष्टम् ।
धूमस्तस्मिन् ज्वालाऽथवा भवेन्नृपबधायैव ॥"

औशनसे-"चैत्यवृक्षाः प्रभज्यन्ते विस्वरं विनदन्ति वा ।
प्रहसन्ति प्रसर्पन्ति प्रगायन्ति लपन्ति च ॥
आगमः परचक्रस्य तेषु चोत्पद्यतेऽपरः ।
नीलपीतारुणैर्वस्त्रैरकस्मात्कृष्णपाण्डुरैः ॥
चैत्यवृक्षाः परिवृता द्विजातिघ्नाः सितादिभिः ।
चित्रैः खगपशुव्याधिर्नीलैः शस्यपरिक्षयः ॥
विवर्णैर्व्याधयस्तीव्रा दशमासात्परं स्मृताः ॥
यदा तु पत्राणि महाद्रुमाणां प्रकाशदुष्टानि भवन्ति मूर्ध्नि ।
समीक्ष्य तानीह यथार्थदर्शी भयं सराष्ट्रस्य नृपस्य विद्यात् ॥"

एवमेवलतादिष्वपि फलानि बोद्धव्यानि । तथाहि पराशरः-"तरुगुल्मौषधिशस्यानां नातिपुष्पफलसम्भवः । सम्भवो वाऽनृतौ जनमारभयायेति ।" अत्र शान्तिर्मत्स्यपुराण-विष्णुधर्मोत्तरयोः—

"अन्येषु चैव युक्तेषु वृक्षोत्पातेष्वतन्द्रितः ।
आच्छादयित्वा तं वृक्षं गन्धमाल्यैर्विभूषयेत् ॥
वृक्षोपरि तथ छत्रं दद्यात्पापौघशान्तये ।
शिवमभ्यर्च्चयदेवं पशुञ्चास्मै निवेदयेत् ।
मूलेभ्य इति षट् होमान् कृत्वा रुद्रं जपेत्ततः ।
मध्वाज्ययुक्तेन च पायसेन सम्पूज्य विप्रांश्च भुवञ्च दद्यात् ।
गीतेन नृत्येन तथार्च्चयेत्तं देवं हरं पापविनाशहेतोः ॥"

वराह:--"स्रग्गन्धपुष्पाम्बरपूजितस्य छत्रं निधायोपरि पादपस्य ।
कृत्वा शिवं रुद्रजपोऽत्र कार्यो रुद्रेभ्य इत्यत्र षडेव होमाः ॥
पायसेन मधुना च पूजयेदब्राह्मणान् घृतयुतेन भूपतिः ।
मेदिनी निगदिताऽत्र दक्षिणा वैकृते तरुकृते हितार्थिभिः ॥"

अत्र मेदिनी दक्षिणेत्यत्र वित्तशाठ्यप्रकरणे तात्पर्यं बोद्धव्यम् । तत्करणस्यानुचितत्वात् । भूमिञ्च यथाशक्ति दक्षिणान्दद्याद्वेति ।

वार्हस्पत्ये--"समाच्छाद्य तु तं वृक्षं गन्धमाल्यैर्विभूषयेत् ।
भोजनञ्चात्र विप्राणां मधुसर्पिः समन्वितम् ॥
छत्रं ध्वजं प्रदातव्यं पूर्णहोमस्तथैव च ।
मन्त्रैरौषधसयुक्तैर्भू प्रदानमथापरम् ॥
वलिञ्चैवोपहारञ्च गीतनृत्यन्तथैव च ।
गन्धमाल्यञ्च धूपञ्च दीपं जप्यं तथैव च ॥
भक्ष्यं भोज्यञ्च पेयञ्च रुद्रस्योपहरेन्निशि ।
रौद्री रुद्रेण मन्त्रेण वृक्षाद्भुतविनाशिनी ॥
गुरवे दक्षिणान्दद्यान्नित्यं भूमिञ्च तत्त्वतः ॥"

वृद्धगर्ग:--"आच्छादयित्वा तं वृक्षं गन्धमाल्यैर्विभूषितम् ।
संस्थापयेत्तत्र शिवं पशुञ्चास्मै निवेदयेत् ॥
मूलेभ्य इति षट्होमान् कृत्वा रुद्रं जपेत्ततः ।
मधुसर्पिषास्तथा भोज्याः पायसेन द्विजातयः ॥

भूप्रदानञ्च कर्त्तव्यमेवं नश्यति किल्विषम् ।
वृक्षस्योपरि छत्रन्तु देयं पापप्रशान्तये ॥
गीतवादित्रनृत्यञ्च रुद्रस्योपहरेन्निशि ॥"

नारदः—"मध्याह्ने चार्द्धरात्रे च शाखाभङ्गो भवेद्यदि ।
ग्रामोत्सादो भवेत्तत्र षड्भिर्मासैर्न संशयः ॥
मण्डपभित्तिपतनात् प्रयुक्ता शान्तिरत्र वै ॥"

मयूरचित्रे-"अकाले फलपुष्पादि देशविद्रवकारणम् ।
वैपरीत्यं वनस्पतावृतूनाञ्च विपर्ययः ॥
राजामात्यबधं प्राहुः परचक्रस्य चागमम् ।
आग्नेयी च द्वितीयाऽत्र याऽनग्निज्वलने श्रुता ॥
रक्तस्रवे द्रुमे चैत्ये भयाय नृपतेर्भवेत् ।
शान्तिस्तु षोडशी तत्र कर्त्तव्या दिव्यचोदिता ॥"

अथ वृक्षविशेषाद्भुतं वक्ष्यते--

औशनसे--"अश्वत्थे पुष्पिते क्षत्रा ब्राह्मणास्तु उदुम्बरे ।
प्लक्षे वैश्यास्तु पीड्यन्ते न्यग्रोधे दस्यवस्तथा ॥"

अत्र वृक्षोत्पातविहिता सामान्या शान्तिः कुर्यादिति । तत्र च सर्वत्र कथितशान्त्यशक्तौ प्रभूतकनकान्नगोमहीदानादिका शान्तिः कर्त्तव्या । अन्यदपि स्वस्त्ययनङ्कार्यमित्युक्तं प्रागेव ।

गार्गीये--"धवाश्वत्थकदम्बानां पुष्पितं यदि दृश्यते ।
तदा स्वामिविनाशः स्यान्न चेत्तु क्वचिदन्यथा ॥"

नारदः—वंशश्च पुष्पितो यत्र माणकश्च धवस्तथा ।
इक्षुस्तु पुष्पितो यत्र शृङ्गवेरोऽथवा यदि ॥
गृहन्तत्र विनश्येत षड्भिर्मासैर्न संशयः ।
वंशनिर्मूलनं कुर्यान्माणकादींश्च यत्नतः ॥
तस्मिन् स्थाने तु कर्त्तव्यं शान्तिकं पौष्टिकन्तथा ।
धेनुञ्च दक्षिणां दद्यात्ततस्सम्पद्यते शुभम् ॥"

अत्रानुक्तविशेषशान्तिषु कनकान्नगोमहीदानादिना शान्तिः कर्त्तव्या, स्वस्त्ययनञ्च कार्यमिति ।

**मयूरचित्रे**—"वंशो वा शृङ्गवेरो वा फलितश्चेत्ततो भवेत् ।
स्वामिपत्न्योर्वधो राज्ञः शस्यस्य च परिक्षयः ॥
पित्तज्वरसमुत्थाश्च रोगाः स्युर्देहिनामपि ।
आग्नेयी शान्तिरत्रैव याऽनग्निज्वलनोदिता ॥
इक्षुश्चैवार्द्रकं चापि फलितञ्च कथञ्चन ।
दुर्भिक्षं राजनाशश्च राजोपद्रव एव च ॥
पर्वताद्या विना पुष्पं पुष्पवन्तौ विभान्ति चेत् ।
औदुम्बरीणां समिधो जुहुयादयुतन्ततः ॥
महाव्याहृतिभिर्विप्रं भोजयेद्गौश्च दक्षिणा ।
कदलीगर्भमूर्धन्याः प्ररोहन्ति गृहे यदि ॥
अरण्यं सम्भवेद् देशो गर्गस्य वचनं यथा ।
सहेमानं गृहं दद्याद् द्विजायौदुम्बरी समित् ॥
इमा रुद्रेति होतव्या सहस्रं चाष्टसंयुतम् ।
दक्षिणां गां ततो दद्याद् ब्राह्मणाय च भोजनम् ॥"

**पराशरः**—"शस्यनिचयेष्वकस्माद्वृद्धिक्षयौ तिलेष्वतैलं महते भयाय । यद्युत्पलकुमुदपुष्पसंभवे यवव्रीहिष्वेककाण्डे द्वित्रिरन्तशिरःप्रादुर्भावे तत्स्वामिविनाशं विद्यादिति ।"

**वराहः**—"नालेऽब्जयवादीनामेकस्मिन द्वित्रिसम्भवो मरणम् ।
कथयति तदधिपतीनां यमलं जातञ्च कुसुमफलम् ॥
अतिवृद्धिः शस्यानां नानाफलकुसुमसम्भवो वृक्षे ।
यद्येकस्मिन् परचक्रस्यागमो नियमात् ॥
अर्द्धेन यदा तैलम्भवति तिलानामतैलता वा स्यात् ।
अन्नस्य च वैरस्यं तदा च विद्याद्भयं सुमहत् ॥
विकृतकुसुमं फलं वा ग्रामादथवा पुराद्बहिः कार्यम् ।
सौम्योऽत्र चरुः कार्यो निर्वाप्यो वा पशुः शान्त्यै ॥

शस्ये च दृष्ट्वा विकृतं प्रदेयं तत्क्षेत्रमेव प्रथमं द्विजेभ्यः।
तत्क्षेत्रमध्ये चरुमत्र भौमं कृत्वा न दोषं समुपैति तज्जम्॥

**बार्हस्पत्ये**—"यमकञ्जायते पुष्पं फलं वा यमकं यदि।
कुमुदोत्पलपद्मानि एकनाले बहूनि तु॥
वीजं यत्र प्ररोहेत्तु फलमध्ये प्रमादतः।
एतदप्यद्भुतं नाम दम्पत्योस्तु विनाशनम्॥
बहुशीर्षा द्विशीर्षा वा तथा निष्प्रसवा अपि।
यवा वा व्रीहयो वापि स्वामिनो मरणाय ते॥
अन्यत्तु फलपुष्पैर्वा न फलन्ति फलन्ति वा।
पादपौषधिगुल्माश्च जनमारभयं भवेत॥
अथवाऽतिशयं धान्यं भद्रमुप्तं विनश्यति।
तिला वाऽप्यर्द्धतैलाः स्युरतिला वा भयाय च॥
अन्यं वा धारयेत्पुष्पं फलं वा विकृतं द्रुमः।
धान्यानां वैकृते क्षेत्रं समं शस्येन दापयेत्॥
सौम्यञ्चरुं पुष्पफलं विकृतम्पशुमेव वा।
क्षेत्रमध्येऽथ होमस्तु निर्वपेच्छस्यवैकृते॥
भौमेनैवानुवाकेन निर्वपेच्छस्य -- वैकृते।
स दक्षिणैर्द्विजैर्भुक्तैः कर्त्तारं वाऽर्चयेत्ततः॥"

**मयूरचित्रे**—"धान्यात्सर्षपा जायन्ते गृहे क्षेत्रेऽथ चत्वरे।
दुर्भिक्षन्तत्र देशे स्याद्राजोपद्रव एव वा॥
म्रियते च प्रभुस्तस्य वर्षस्याभ्यन्तरेण तु।
सहस्रं समिधांस्तत्र हव्यमष्टोत्तरं स्मृतम्॥
औदुम्बर्या इमा रुद्रा मन्त्रैर्गोदानभोजनैः।
उत्पतन्ति च धान्यानि गृहे चत्वर एव वा॥
म्रियते च सुतस्तस्य सप्तमासाद्विदूरतः।
तत्र दूर्वायुतं हव्यं मन्त्रोऽस्मिन् जातवेदसः॥
दक्षिणा गौर्ब्राह्मणानां भोजनं शुभकारकम्।
अनग्नौ व्रीहयो यत्र स्फुटन्त्यग्न्यनुगा इव॥

मासाऽभ्यन्तरमात्रेण तत्र स्यान्नृपतेर्वधः ।
आग्नेयी शान्तिरत्रोक्ता याऽनग्निज्वलनोदिता ॥
प्ररोहन्ति गृहे येषामग्निना व्रीहिजातयः ।
तेषां मृत्युर्भवेद्वर्षाच्छमिधां दर्भकाशयोः ॥
अयुतं तत्र होतव्यं मन्त्रोऽस्मिन् जातवेदसः ॥"

**नारदः**—"उत्स्विन्ने दधिधान्ये च यदि तत्राङ्कुरो भवेत् ।
धान्यञ्चोत्पतते तत्र तण्डुलाश्चोत्पतन्ति च ॥
कलायश्च मसूरश्च मुद्गो माषस्तथैव च ।
शस्यानां हरणात्तत्र उत्सादश्च भविष्यति ॥
काष्ठे धान्यं यदा भूमौ दृश्यते मध्यतो यदि ।
म्रियते च प्रभुस्तत्र षड्भिर्मासैर्न संशयः ॥
जुहुयादयुतन्तत्र धान्यस्यैव विशेषतः ।
दधिमधुघृताक्तस्य सर्वदा क्षेमकृन्नरः ॥
धान्यं विप्राय दातव्यं वस्त्रयुग्मं सकाञ्चनम् ।
धेनुञ्च दक्षिणान्दद्यात्तत्र सम्पद्यते शुभम् ॥"

**मयूरचित्रे**—"सिद्धान्ने व्यञ्जने चैव रुधिरं यत्र दृश्यते ।
राजामात्यविनाशः स्यान्मासमात्रान्न संशयः ॥
दशमी तत्र कर्त्तव्या शान्तिर्दिव्यप्रचोदिता ।
दध्नि संजायते तक्रं राज्ञो मरणकारकम् ॥
तैलं सर्पिर्जलं वापि वृष्टिरत्यन्तमापतेत् ।
सिद्धान्ने व्यञ्जने चैव कृमिदुर्भिक्षकारकम् ॥
ऐन्द्री शान्तिस्ततः कार्या वर्धनीपतनोदिता ॥"

**भार्गवीये**—"भूषणेषु तथाऽन्येषु शय्यायामासनेषु च ।
काकोलूककपोतानां मृगस्य दर्शनम्भवेत् ॥
अन्येषां चाप्रशस्तानामागमो मृगपक्षिणाम् ।
अश्वेतानाञ्च पुष्पाणां सरीसृपमृगस्य च ॥

वसालोहितमांसानामस्थिमज्जाशिरोरुहाम् ।
अकस्माच्चैव सञ्जाते दर्शने नखभस्मनाम् ॥
रसान्यत्वे रसानाञ्च दुर्गन्धे वाऽनिमित्तजे ।
पद्मपुष्पाकृतिर्यत्र दृश्यते मधुसर्पिषि ॥
कृशरे पायसे चैव क्षयस्तस्य धनायुषोः ।
घृते वा मधुदध्नोर्वा यदा पद्माकृतिर्भवेत् ॥
स्वस्तिको वापि दृश्येत क्षीरोदनहविःषु च ।
श्रोत्रियाय तु तद्द्याद् गाञ्चैवं शमयेन्नरः ॥
यत्रत्यं चाद्भुतं पश्येत्तच्चापि प्रतिपादयेत् ।
कुर्याच्च वारुणीं शान्तिं परमेन समाधिना ॥"

एतेषामकरणे कनकान्नगोमहीदानादिका शान्तिः कर्त्तव्या, स्वस्त्ययनञ्च कार्यमिति । अत्र च **स्वस्त्ययनञ्चण्डीपाठादि** । तथा च **देवीवाक्यम्**---

"तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम ।

इति वृक्षलताफलपुष्पशस्यान्नव्यञ्जनाद्यद्भुतम् ।

## अथ दिव्यस्त्रीपुरुषदर्शनाद्भुतम्

**गार्गीये**—"दिव्यस्त्रीपुंसयोर्यत्र भूतगन्धर्वयोस्तथा ।
दर्शनञ्च विमानस्य नगरे यदि लक्ष्यते ॥
सामात्यपुरराष्ट्रस्य दुर्गकोषान्वितस्य च ।
तदा महीपतेस्तत्र विनाशो भवति ध्रुवम् ॥"

नगरे-राजधान्याम् । अन्यत्र तु देशमात्रपरम् ।

**औशनसे**—"दर्शनन्देवयोनीनामसद्रूपस्य वा नृभिः ।
भवेद्देश--विनाशाय तत्प्राहुर्यस्य दर्शनम् ॥"

**पराशरः**—रक्षःपिशाचपतङ्गैः पथिरोधनं जनमारभयायेति ।"

**बार्हस्पत्ये**—"सम्प्रहृष्टैः पिशाचैर्वा रक्षोभिर्वाऽपि तापिते ।

नगरं न चिरात्कालाज्जनमारेण बाध्यते ॥
रक्षः पतङ्गैः पन्थानो न वहन्ते भयान्विताः ।
रक्षो रूपाणि दृश्यन्ते वनरथ्यागृहेषु च ॥"

मात्स्ये—"हिंस हिंसेति श्रूयन्ते गिरश्च भयदाः पुरे ॥"

स्कान्दे—प्रह्लादपराजयनिमित्तम्—

निर्वाताः साशनिरवाः गिरो हाहा रवा दिशः ।

उत्तरकाण्डे शम्बुकसुतबधनिमित्तम्—

"प्रादुरासीन्महाञ्छब्दः खे शरीरं न दृश्यते ।
राजन् सर्वेषु देशेषु तदाद्भुतमिवाऽभवत् ॥

गदापर्वणि दुर्योधनबधनिमित्ताम्—

"अशरीरा महानादाः श्रूयन्ते स्म तदा नृप ।"

मौशले वृष्णिक्षयनिमित्ताम्—

"पुण्याहे वाच्यमाने च जपत्सु च महात्मसु ।
अभिधावन्तः श्रूयन्ते न चादृश्यन्त कश्चन ॥"

स्कन्दपुराणे त्रिपुरदाहनिमित्तम्—

"अपवादाश्च श्रूयन्ते पुण्याहोदीरणेषु च ॥"

वराहः—"दृष्टेषु यातुधानेषु निर्दिशेन्मरकमाशु संप्राप्तम् ।"

शान्तिः सर्वेषां वाराहे—

"प्रतिघातायैतेषां गर्गः शान्तिञ्चकारेमाम् ।
महाशान्त्योऽथ वलयो भोज्यानि सुमहान्ति च ॥
कारयीत महेन्द्रञ्च माहेन्द्रीञ्च समर्चयेत् ॥"

प्रभूतकनकान्नगोमहीदानादिका च तदधिकरणकलक्षहोमादिरूपा सामान्या शान्तिः कर्त्तव्येति ।

इति दिव्यस्त्रीपुरुषदर्शनाद्भुतम् ।

अथ वस्त्रोपानहासनशयनाद्भुतम्

**पराशरः**-अथ वाससां शुभाशुभैष्यत्फलसूचकमकरमान्मषीकर्द्दमाञ्जनरुधिरगोमयैरुपरागस्तथा गोकीटाऽऽखुजन्तुभिरवभक्षणम्पाटनञ्च काष्ठकण्टकैर्दाहो वा वह्निना भवति । तद्विज्ञानलक्षणमुपदेशयामः । तत्र प्राग्देशं प्रत्यक्पाशं नवधा वस्त्रं विभजेत त्रिवंशम । तदंशेषु तेषु क्रमात्फलनियमः । अर्थहानिरर्थागमो धनक्षयः स्त्रीविनाशः पुत्रपीडा दुहितृमरणं स्वशरीरव्याधिर्व्यसनसमागमश्चेत्यष्टासु । नवमेऽध्वगमनमर्थागमः कर्मसिद्धिश्च । कुम्भादर्शकर्णशस्त्रपदत्रिकूटेन्द्ररुचकहलगृहतोरणच्छत्रचन्द्रमेखलास्रगुपवेदीपद्मशङ्खश्रीवत्सस्वस्तिकमत्स्यनन्द्यावर्त्ताकारैस्तु क्रमाद्विपुलोऽर्थागमः कुक्षिरोगः श्रोत्रपीडा विरोधोऽध्वगमनारोग्यव्यसनमैश्वर्यमभिषेकागमः प्रार्थिते तप्तिर्वेश्मलाभो धनागमो राज्यलाभः स्त्रीसङ्गमः सोमपानं कृतदीक्षां यज्ञफलावाप्तिर्विपुलार्थसम्पत्तिवेदनं स्त्रीलाभः सौख्यं काञ्चनागमोऽर्थसम्पच्च । कबन्धव्येनकेदारसर्पसूचीपाशमुद्गरलाङ्गलपीठिकाकारैर्मरणम । द्विरदरथतुरगसद्शैर्यानपुत्रधनैश्वर्याप्तिः । हयगजभजगतुलाचाषाकारैः संयुगः ।

"अग्निदग्धन्तु यद्वस्त्रं मूषिकैर्वाऽपि भक्षितम् ।
तद्वस्त्रं त्रिगुणीकृत्य पर्वाग्रे न निधापयेत् ॥
मध्ये मध्यफलं मूले मन्दमग्रे न शोभनम ॥"

दशामूले भार्यानाशो, मध्याग्रयोरर्शनाम् । पाशान्ते स्त्रीणाम् । सकलवस्त्रमध्यविनाशे मरणम् । उत्तरे पत्नीविनाशः । दक्षिणेऽपत्यापायः । प्राग्भागे कुटुम्बविनाशाय । पूर्वदक्षिणे नारीणाम । दक्षिणे सुहृदाम् । दक्षिणापरे पशूनाम । पश्चिमे प्रेष्याणाम । पश्चिमोत्तरे ज्ञातिवर्गस्य । उत्तरपूर्वान्तरे मध्यमे सर्वसम्पदामिति । तथा च

"नवे वस्त्रे यथोक्तं स्यात्फलं जीर्णे तु नेष्यते ।
न रक्ते न पुनर्धौते न स्वयं दग्धपाटिते ॥"

अथाखुभक्षणोपानच्छेदनलक्षणं व्याख्यास्यामः-तत्र विंशतिश्छेदास्तेषां सप्तपूजिता विगर्हिताः शेषा भवन्ति । अंगुष्ठादि—कनिष्ठान्तं वैश्वानरदेशे

प्रभक्षिते अन्नपानस्त्रीवस्त्रलाभं विद्यात् । प्रदेशिन्यां स्त्रीवस्त्रलाभः । मध्यमायां वधबन्धनम् । अनामिकायां मातृमरणं स्वसृप्रजननं वा । कनिष्ठायां पितृमरणं भ्रातुर्वा । नासातः स्त्रीधनलाभम् । अङ्गुष्ठाङ्गुलिमूले व्याधिभयम । चूलायां वैमनस्यम् । ग्रीवायां शिरश्छेदनम् । मूलादर्थप्रयाणपर्याप्तिम् । कर्णिकासकलभक्षणे सन्धिच्छेदनम्, असकले कलहोऽसत्प्रवृत्तिञ्च । पार्ष्णिबन्धेऽध्वगमनम् । पार्ष्णिस्थाने वाहनागमम् । वाह्यपादपुटच्छेदने भक्षणे तु सुहृद्भ्रातृविनाशं विन्द्यात् । मध्यमस्य विपुलमर्थागमनम् । उत्तमस्य भूलाभम् । पदमध्ये शोकागमनम् । पार्श्वयोः पार्श्वरोगः । सकलोपानत्प्रभक्षणे मरणविभ्रमप्रवासा भवन्ति ।

अपि च—"न वा फलमासमग्र्यमर्द्धभुक्तासु मध्यमम् ।
शुभाशुभ विनिर्देश्यं जीर्णासु न भवेत्फलम् ॥

वराहः – 'वस्त्रस्य कोणेषु वसन्ति देवा नरास्तु पाशान्तदशान्तमध्ये ।
शेषास्त्रयश्चात्र निशाचराणान्तथैव शय्यासनपादुकासु ॥
लिप्तं मसीकर्दमगोमयाद्यैश्छिन्ने प्रदग्धे स्फुटिते च विद्यात् ।
पुष्ट नवेऽल्पाल्पतरं च भुंक्ते प्रापं शुभञ्चाधिकमुत्तरीये ॥
क्रव्यादभागेष्वथ वापि मृत्युः पुंजन्मतेजाश्च मनुष्यभागे ।
भागेऽमराणामथ भोगवृद्धिः प्रान्तेषु सर्वत्र वदन्त्यनिष्टम् ॥
कङ्कप्लवोलूककपोतकाकक्रव्यादगोमायु - खरोष्ट्र - सर्पैः ।
छेदाकृतिर्दैवतभागगाऽपि पुंसां भयम्मृत्युसमं करोति ॥
छत्रध्वजस्वस्तिकवर्धमानश्रीवृक्षकुंभाम्बुजतोरणाद्याः ।
छेदाकृतिर्नैरृतिभागगाऽपि पुंसां विधत्ते नचिरेण लक्ष्मीम ॥"

अथ वस्त्रोत्पातशान्तिमाह—

पराशरः—"विलक्षणं त्यजेद्वस्त्रं कृत्वा देवद्विजार्चनम् ।
जपहोमोपवासश्च तथा नाप्नोति किल्विषम् ॥"

विलक्षणमशोभनचिह्नम् । उपानहुत्पातशान्तिमाह—

पराशरः - "गुरुबृद्धद्विजाचार्य-स्नानमङ्गलसेवनात् ।
अंशुकानाञ्च संत्यागात्तस्माद्दोषात्प्रमुच्यते ॥"

अत्रानुक्तविशेषशान्तिषु शय्यासनादयुत्पातेषु उपस्करविकारविहिता शान्तिः कनकान्नदानादिका वा फलगुरुलाघवमवगम्य कर्त्तव्या ।

इति वस्त्रोपानहासनशयनाद्भुतम् ।

## अथ शस्त्राद्भुतम्

पराशरः—"धूमज्वाला शस्त्राङ्गेऽवनिपतिविनाशाय । तथाऽऽयुधानां धूमो व्याहारः कोषेभ्यश्च स्वयं निस्सरणं परचक्रागमायेति ।"

वराहः—"आयुधज्वलनसर्पणस्वनाः कोषनिर्गमनवेपनानि च ।
वैकृतानि यदि वाऽऽयुधेऽपराण्याशु रौद्ररणसंकुलम्भवेत ॥
क्वणितं मरणायोक्तं पराजयाय प्रवर्त्तनं कोशात् ।
स्वयमुद्गीरणे युद्धं ज्वलिते विजयो भवति खडगे ॥"

बृद्धगर्गः—"ज्वलन्ति यदि शस्त्राणि बिनमन्ति नमन्ति च ।
कोशेभ्यो वाऽपि निर्यान्ति सङ्ग्रामस्तुमुलो भवेत् ॥
धावन्ते यदि शस्त्राणि निपतन्त्युत्पतन्ति च ।
तूणीरात् सहसा वाणा उद्गिरन्ति नदन्ति वा ॥
शुभा वाऽथापि मूर्छन्ते धनूंषि प्रलपन्ति च ।
येषु देशेषु तेषु स्यात्सङ्ग्रामस्तुमुलात्मकः ॥"

औशनसे —"नाराचाः शक्तयः खड्गा प्रदीप्यन्ते यदा मुहुः ।
तदा शस्त्रभयं घोरं त्रीणि वर्षाणि निर्दिशेत् ॥"

वराहः—"करवीरोत्पलगजमदघृतकुङ्कुमकुन्दचम्पकसुगन्धिः ।
शुभदोऽनिष्टो गोमूत्रपङ्कमदसदृशगन्धः ॥
कूर्मवसासृक्क्षारोपमश्च भयदुःखदो भवति गन्धः ।
वैदूर्यकनकविद्युत्प्रभो जयारोग्यवृद्धिकरः ॥"

**विष्णुधर्मोत्तरे**---"समांगुलस्थाः शस्यन्ते व्रणाः खड्गेषु भार्गव।
श्रीवृक्षपर्वताकारा लिङ्गपद्मनिभाश्च ये ॥
मङ्गलानां तथाऽन्येषां सदृशा ये च भार्गव।
काकोलूकसवर्णाभा विषमांगुलिसंस्थिताः ॥
वंशानुगाः प्रभूताश्च न शस्तास्ते कदाचन ॥"

**वराहः**—"कृकलासकाककङ्कक्रव्यादकबन्ध - वृश्चिकाकृतयः।
खडगे व्रणा न शस्ता वंशानुगताः प्रभूताश्च ॥
श्रीवृक्षवर्धमानातपत्रशिवलिङ्गकुण्डलाब्जानाम् ।
सदृशा व्रणाः प्रशस्ता ध्वजायुधस्वस्तिकानाञ्च ॥
पुत्रमरणं धनाप्तिर्धनहानिः सम्पदश्च बन्धश्च।
एकाद्यंगुलसंस्थैर्व्रणैः फलं निर्दिशेत्क्रमशः ॥
सुतलाभः कलहो हस्तिलब्धयः पुत्रमरणधनलाभौ।
क्रमशो विनाशवनिताप्तिचित्तदुःखानि षट्प्रभृति ॥
लब्धिहानिः स्त्रीलब्धयो वधो वृद्धिमरणपरितोषाः।
ज्ञेयश्चतुर्दशादिषु धनहानिश्चैकविंशे स्यात् ॥
वित्ताप्तिरनिर्वाणं धनागमो मृत्युसम्पदोऽस्वत्वम् ।
ऐश्वर्यमृत्युराज्यानि च क्रमात्त्रिंशदिति यावत् ॥"

शस्त्रज्वलने अग्न्यद्भुतप्रकरणस्था आग्नेयी शान्तिः, व्यवहारनिर्गमादौ वाताद्भुतप्रकरणस्था वायव्या शान्तिः, अशोभनव्रणचिह्नगन्धोत्पत्तौ सावित्री-मन्त्रकरणकायुतहोमादिका शान्तिः कर्त्तव्या।

इति शस्त्राद्भुतम ।

## अथ पुराद्भुतम

**पराशरः**--"साधुद्विजविहगसुरपतिधार्मिकैः पुरपरित्यागः पुरविनाशयेति ॥"

अथ मौशले वृष्णिक्षयनिमित्तम्—

"प्रवृद्धभूषिका रथ्या विभिन्नफणिकास्तथा।"

अत्रापि सावित्रीमन्त्रकरणक - यथाशक्ति - होमकनकान्नगोमहीदानादिका शान्तिरवगन्तव्येति ।

इति पुराद्भुतम् ।

## अथ मानुषाद्भुतम्

**मात्स्ये** – "गुरुमित्रद्विषो यत्र क्रमपूजारतास्सदा ।
न दैवतेषु वर्त्तन्ते यथावद् ब्राह्मणेषु च ।।
ब्राह्मणान् सुहृदो मान्यान् जनो यत्रावमन्यते ।
शान्तिमङ्गलहोमेषु नास्तिक्यं यत्र जायते ।।
क्रियानामुचितानाञ्च विच्छित्तिर्यत्र जायते ।
मङ्गल्याश्च गिरो यत्र न श्रूयन्ते समन्ततः ।।
स्त्रियश्च कलहायन्ते बाला निघ्नन्ति बालकम् ।
राजा वा म्रियते तत्र स वा देशो विनश्यति ।।"

**गदापर्वणि** पाण्डवशिविरक्षयनिमित्तम् —

"पुल्लिङ्ग इव नार्यश्च स्त्रीलिङ्गाः पुरुषोऽभवन् ।।"

**पराशरः** – योऽन्यदेशसमाचारो देशेऽन्यस्मिन्प्रवर्त्तते ।
स तद्देशे सदाऽसत्त्वं द्वेषः समधिगच्छति ।।"

यदि धनुरसिलोष्टकाष्ठहस्ताः पुरि शिशवो रणवत् समाचरन्ति ।
प्रहर हर जहीत्युदाहरन्तो भयमचिरात्तमुलं निवेदयन्ति ।।"

**औशनसे**—"ब्राह्मणो यत्र बद्ध्यन्ते ग्रामे राष्ट्रे तथा पुरे ।
राजाधीनं पुरो यत्र तत्राभावस्य लक्षणम् ।।"

**शान्तिमात्स्ये**--एतेष्वभ्यर्चयेच्छक्रं सपत्नीकं द्विजोत्तम ।
भोज्यानि चैव कार्याणि ब्राह्मणानाशयेत्सदा ।।
गावश्च देया द्विजपुङ्गवेभ्यो भुवस्तथा काञ्चनमन्दिराणि ।
होमश्च कार्यो द्विजपूजनञ्च एवं कृते शान्तिमुपैति पापम् ।।"

आग्नेये —"अकस्माच्छत्रुकलहे आग्नेयीं शान्तिमाचरेत् ।
शमस्वेत्यादिभिर्मन्त्रैर्नवभिर्जुहुयाद् घृतम् ॥
चरुं हुत्वा स्वयं प्राश्य दद्यात् स्वयञ्च दक्षिणाम् ।
यत्र वा कलहस्तस्मात्तत्र शान्त्युदकं परम् ॥
सदाचारा द्विजा यत्र युद्ध्यन्ते शस्त्रपाणयः ।
आयाहि त्वं प्रभृतिभिर्मन्त्रैरष्टाभिराहुतिम् ।
आज्यस्य जुहुयादष्टौ होम ऐन्द्रचरोस्ततः ॥
इन्द्रः पूज्यो बलिर्देयो गोदानं द्विजभोजनम् ।"

गार्गीये —"उह्यमानाः शवोऽकस्मात् क्षितौ पतति चेत्तदा ।
यत्कुलेऽसौ शवस्तेषां विनाशो भवति ध्रुवम् ॥"

नारदः—"शवस्तु नीयमानश्च भूमौ निपतते यदा ।
कुटुम्बमरणन्तत्र धनधान्यपरिक्षयः ॥
इमा रुद्रेति मन्त्रेण जुहुयात्सर्पिषा हुतम् ।
आहुती द्वे सहस्रे तु होमस्तु कथितो भवेत् ॥
वृषभन्दक्षिणान्दद्यात्ततः सम्पद्यते शुभम् ।"

मयूरचित्रे "मृतः श्मशानं नीतो यः प्रत्युज्जीवति मानवः ।
स्वस्थो वा भवति क्षिप्रं पुनरायाति मन्दिरम् ॥
स देशः क्षीयते क्षिप्रं परचक्रेण हन्यते ।
यमदृष्ट्या ततः शान्तिः सक्षीराः समधिः शतम् ॥
घृताक्ता जुहुयाद्विप्रो हुतान्ते भूरिदक्षिणाम् ।
सावित्र्याष्टसहस्रेण क्षीरशान्तिञ्च कारयेत् ॥
कपिला गौस्तिलं कांस्यं देयं यममतं यथा ॥"

पराशरः—"मृतो वा व्याहरेद् गच्छेद् यत्र तत्र भयं वदेत् ।"

अत्रापि सावित्रीमन्त्रकरणकायुतहोमादिका कनकान्नदानादिका वा सामान्या शान्तिः कर्त्तव्येति ।

इति मानुषाद्भुतम् ।

## अथ स्त्रीप्रथमरजोद्भुतम्

**ज्यौतिषप्रश्नलग्नग्रन्थे**--

"अष्टमी-षष्ठ्यमारिक्ता-द्वादशी-सङ्क्रमेषु च ।
वैधृतौ च व्यतीपाते ग्रहणे चन्द्रसूर्ययोः ।
विष्टौ सन्ध्यासु निद्रायां दुर्भगा प्रथमार्त्तवे ।।"

**वारफलम्**---"रोगः स्यादर्कवारे तु सोमवारे पतिव्रता ।
दुःस्थिता भौमवारे तु बुधे सौभाग्यसंयुता ।।
श्रीसम्पत्तिर्गुरोर्वारे पतिभक्ता भृगोर्दिने ।
मलिना मन्दवारे तु रात्रावपि तथैव च ।।
प्रातःकाले तु सधना सायाह्ने सर्वभोगिनी ।
मध्याह्ने च भवेद्वेश्या निशीथे विधवा भवेत् ।।"

**लग्नफलम्**---मेषे सव्यभिचारा स्याद् वृषभे परभोगिनी ।
मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी ।।
पुत्राढ्या सिंहराशौ च कन्यायां श्रीमती भवेत ।
विलक्षणा तुलायाञ्च वृश्चिके तु पतिव्रता ।।
दुश्चारिणी धनुःपूर्वे अपरे च पतिव्रता ।
मकरे मानहीना च कुम्भे निर्धनवन्धुता ।।
मीने विलक्षणा लग्ने ग्रहसंस्था विवाहवत् ।।"

**तिथिफलम्**-"दुर्भगा प्रतिपद्युक्ता द्वितीयायां शुभान्विता ।
आरोग्यञ्च तृतीयायां चतुर्थी वहुदुःखदा ।।
पञ्चम्यां सुभगा नारी षष्ठ्यां पररता स्मृता ।
सप्तम्यां धनलाभः स्यादष्टम्याञ्च सुपुत्रिणी ।।
नवम्यां विधवा दुःखी दशम्यां वहुभोगिनी ।
एकादश्यां मृतापत्या द्वादश्यां परगामिनी ।।
त्रयोदश्यान्तु सम्पूर्णा चतुर्द्दश्यान्तु चञ्चला ।
नष्टेन्दौ मृत्युमाप्नोति प्रतिपत्सम्पदान्विता ।।"

मासफलम्---"चैत्रे स्यात्प्रथमर्तौ तु नारी वैधव्यभागिनी ।
वैशाखे धनपुत्राढ्या ज्येष्ठे रोगान्विता स्मृता ॥
शुचौ मृतप्रजा प्रोक्ता श्रावणे धनधन्यदा ।
नभस्ये दुर्भगा क्लिष्टा आश्विने च तपस्विनी ॥
ऊर्जेऽप्यायुष्मती नारी मार्गशीर्षे बहुप्रजा ।
पौषे तु पुंश्चली नारी माघे पुत्रसुखान्विता ॥
फाल्गुने श्रीमती साध्वी क्रमान्मासफलं स्मृतम् ॥"

नक्षत्रफलम्- दृष्टे रजसि नार्याः स्यादश्विन्यां सर्वतः शुभम् ।
भरण्याङ्काकबन्ध्या च बहुदुखःञ्च जायते ॥
कृत्तिके मृतपुत्रत्वं रोहिण्याञ्च दरिद्रता ।
मृगशीर्षे च सौभाग्यमार्द्रायां दुःखिता भवेत् ॥
आदित्ये पतिभक्ता स्यात्पुष्ये पुत्रवती भवेत् ।
नष्टव्रता चाश्लेषायां नष्टा बन्ध्या मघासु च ॥
बन्ध्या पूर्वे उत्तरायां कुलाचारयुता भवेत् ।
हस्ते पुत्रवती च स्याच्चित्रायामतिकामुकी ॥
स्वातौ भ्रातादिभक्ता स्याद्विशाखायान्तु कामुकी ।
मैत्रेऽलसा च ज्येष्ठायां कुलटा च प्रदेशिता ॥
कलासु कुशला मूले पूर्वे बन्ध्या प्रचोदिता ।
उत्तरे पितृभक्ता स्याच्छ्रवे चैव प्रतिव्रता ॥
वासवे धनयुक्ता स्यात्पुत्रयुक्ता तथा स्मृता ।
पुत्रवती च शतभे पूर्वे मूर्खा सदा भवेत् ॥
उत्तरे धनवती चैव रेवत्याञ्च गुणान्विता ।
साध्वी चेत्थं विनिश्चित्य सर्वकर्म समाचरेत् ॥
तिथिवासरधिष्ण्येषु पुष्पन्निन्द्येषु दृश्यते ।
गमनं वर्जयेत्तत्र पुनः शस्तेषु दर्शनम् ॥
दोषापनुत्तये होमं घृतपूर्वं तिलाक्षतैः ।
कुर्यादष्टोत्तरशतं गायत्र्या च पृथक् पृथक् ॥
स्वर्णगोभूतिलान्दद्याद्विप्रेभ्योऽपि स्वशक्तितः ॥"

स्वस्त्ययनञ्च कार्यमिति ।

इति स्त्रीप्रथमरजोदभुतम् ।

## अथ प्रसवाद्भुतम्

**वराह:**---"प्रसवविकारे स्त्रीणां द्वित्रिचतु:प्रभृति संप्रसूतौ च ।
हीनातिरिक्तकाले च देशकुलसंक्षयो भवति ॥"

**औशनसे** --"चतुरस्कं द्विशीर्षं च गात्रैरभ्यधिकन्तथा ।
एकचक्षुरचक्षुर्वा दशनैः पलितैस्तथा ॥
व्यञ्जनैश्चैव सम्पन्नं मानुषी यत्र सूयते ।
द्विसम्बत्सरपर्यन्तं राजा तत्र विनश्यति ॥"

**विष्णुधर्मोत्तरे** -अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
विकृतप्रसवाश्चैव युग्मप्रसवनास्तथा ॥
अमानुषा अमुण्डाश्च संजातव्यञ्जनास्तथा ।
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ॥
पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥
निर्वासयेत्तां नृपतिः स्वराष्ट्रात्स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः ।
किमिच्छकैर्ब्राह्मणतर्पणञ्च लोके ततः शान्तिमुपैति पापम् ॥"

किमिच्छकैः किमिच्छसीति पृष्टोपदिष्टे वासाच्छादनादिविशेषैः ।

**भीमपराक्रमे**—"एको वृषस्त्रयो गावः सप्ताश्वा नव दन्तिनः ।
सिंहप्रसूतिकाश्चैव कथिताः स्वामिघातकाः ॥"

तिस्र इति वक्तव्ये छान्दसत्वात्त्रय इत्युक्तम् । कथितसङ्ख्याविशेषविशिष्टेषु एतेषु स्वरूपत एव उत्पाताय स्वामिनः । सिंहप्रसूताश्च गावो बोद्धव्याः ।

**गर्गः**—"अवाप्तवयसा गर्भा द्विचतुष्पात्त्रियोऽपि वा ।
गर्भस्थं विकृतं वाऽपि प्रजायन्ते भयाय तत् ।"

**औशनसे**--"मानुषी जनयेद्यत्र विविधान् त्रिशीर्षान् पशून् ।
षण्मासोर्ध्वंम्भयन्तीव्रं तत्र तूत्पद्यते महत् ॥
परचक्रागमञ्चैव निर्दिशेदिह शास्त्रवित् ।
सङ्ग्रामा विपुलाश्चात्र जायन्ते विकृतात्मकाः ॥
सर्पं वा पक्षिणं वाऽपि जनयेद्यत्र मानुषी ।
प्रवासस्तस्य देशस्य सप्तमासात्परं भवेत् ॥

**औशनसे**---"उष्ट्रं वा प्रसूयेत वानरं वापि मानुषी ।
अन्यद्वा जनयेत्किञ्चित्स्थावरं वापि किञ्चन ॥
रोगेण शस्त्रपातेन दुर्भिक्षेण च पीडितः ।
स देशो व्यथते नित्यं राजा तत्र विनश्यति ॥
अमानुषं मानुषी वा मानुषं वाप्यमानुषी ।
प्रसूयन्ते विजानीयात्परचक्रागमं भयम् ॥
योनिव्यतिकरं यत्र कुर्युरेवं विधास्त्रियः ।
गौर्वा प्रसूयतेऽन्यानि तत्र राजा विनश्यति ॥"

**पराशरः**--"गजाश्वयमलप्रसवे तत्स्वामिविनाशं विद्यात् । स्त्रीणामब्दद्वयं गर्भधारणं त्रिचतुर्विकृतपशुपक्षिनागजननं वा कुलदेशनाशायेति" ।

**विष्णुगर्गबृहस्पतयः**-"वडवा हस्तिनी गौर्वा यदि युग्मं प्रसूयते ।
विजातिं विकृतं वाऽपि षण्मासैर्म्रियते नृपः ॥"

**वराहः**---"वडवोष्ट्रीमहिषीगोहस्तिनीषु यमलोदभवे मरणमासाम् ।
षण्मासान् सूतिफलं शान्तौ श्लोकौ च गर्गोक्तौ ॥
नार्यः परस्य विषये त्यक्तव्याश्च हितार्थिना ।
तर्पयेच्च द्विजान् कामैः शान्तिं चैवात्र कारयेत् ॥
चतुष्पदाश्च यूथेभ्यस्त्यक्तव्याः परभूमिषु ।
नगरं स्वामिनं यूथमन्यथा तु विनाशयेत् ॥"

मात्स्ये --"शान्तिः प्रसववैकृत्ये प्राजापत्या विधीयते ।।"

आथर्वणाद्भुते---"विकृतं पशुजातञ्जीवन्तं पशुपतये निवेद्य रौद्रगणे-राज्यं जुहुयात् । हुताग्निश्च स्नापयित्वा स्रग्गन्धधूपैरलङ्कृत्य घृतेनाभ्युक्ष्याग्नि प्रज्वाल्य सकृद्धुत्वा महाशान्ति कुर्यात्" । तत्र श्लोकाः---

"अपत्यभेदो विविधैकशीर्षे एकद्विशीर्षे भवति द्विरास्यम् ।
अपादहस्ते म्रियते त्वमात्यो जाते कबन्धे नृपतिर्विनश्येत्" ।।

मयूरचित्रे--"यत्र गर्भे विपर्यासो मानुषीणां गवामपि ।
अद्भुतानि प्रसूयन्ते तत्र देशस्य विद्रवः ।।
अत्रापि दिव्यजा शान्तिः कार्या पञ्चदशी बुधैः ।
मानुषा मानुषाणाञ्च गोऽजाश्वमृगपक्षिणाम् ।।
जायन्ते जातिभिन्नाश्च सदन्ता विकृतास्तथा ।
वहुशीर्षा अशीर्षा वा वहुकर्णा अकर्णकाः ।
एकशृङ्गास्त्रिशृङ्गाश्च तथैव त्रिचतुर्भुजाः ।
दीर्घकर्णा महाकर्णा गजकर्णाश्च मानवाः ।।
श्वापदव्यालमार्जारहरिणा रूपधारिणः ।
जायन्ते पुरुषा यत्र तत्र सङ्ग्राममादिशेत् ।।
राजश्रेष्ठबधो नाशो धनस्य च कुलस्य च ।
यमला यत्र जायन्ते नारीणां गजवाजिनाम् ।।
हस्त्यश्वकपि — वक्त्राश्च कूष्माण्डाकृतयस्तथा ।
व्रह्मशान्ति ततः कुर्यात्तत्र व्रह्मेति वायुना ।।
अष्टोत्तरसहस्राणि पञ्चैव जुहुयाद्बुधः ।
समिधां तु पलाशस्य तर्पयेत्पूर्ववद्द्विजान् ।।
दासीदाससमायुक्तं गोधान्यफलसंयुतम ।
दद्याद्विप्राय तद्गेहं हुतान्ते भूरि दक्षिणाम् ।।
फलपाकोद्भवश्चास्य मासाभ्यन्तर—मात्रतः ।
अथवाष्टोत्तरं विद्वान् सहस्रं जुहुयाच्छुचिः ।।

खादिराऽश्वत्थसमिधो विरूपाक्षेन मन्त्रतः ।
प्रदद्यात्कपिलान्धेनुं हुतान्ते कनकन्तथा ॥"

**राजमार्तण्डे** – 'षोडशाब्दे गर्भधराऽष्टममासप्रसूतिका ।
उभयोर्मरणं वाच्यं सत्याचार्गः प्रभाषते ॥
अब्दे पञ्चदशे गर्भे प्रसवः षोडशेऽपि वा ।
दम्पत्योर्हि विनाशः स्यादेकस्मिन्नेकनाशनम् ॥
दद्याद् गर्भवतीं छागीं वस्त्रालङ्कारभूषिताम ।
पुंसवनविधानेन संक्रमे शिवसन्निधौ ॥
गौरी सुसम्यक् सम्पूज्य काञ्चनीं कांस्यभाजने ।
गाञ्च गर्भवतीं दद्याद् दैवज्ञाय च शोभनाम् ॥"

**अथर्वमुनिः**— "मासाष्टमे स्त्रीप्रसव उत्पातो भौम उच्यते ।
स्ववारे पूजयेद्भौमं दध्याज्यमधुपायसैः ॥
जुहुयान्मूलसूक्ताभ्यां मधूकसमिधोऽयुतम् ।
काञ्चनं वृषभं वस्त्रं दद्याद्विप्राय दक्षिणाम् ॥
अशिरा जायते जन्तुर्द्वित्र्यनेकशिरास्तथा ।
सूर्याद्भुतं विजानीयात् पूजयित्वा दिवाकरम् ॥
दध्याज्यमधुसंयुक्ताः स मधस्त्वर्कसम्भवाः ।
यद्राजान्नं प्रभृतिभिः जुहुयाद्घृतमेव च ॥
धेनुं सुवर्णं वस्त्रञ्च दद्याद्धोत्रे च दक्षिणाम् ।
सर्वे दोषाः प्रणश्यन्ति ततस्सम्पद्यते शुभम् ॥
नारी वा जनयेत्सर्पान् मण्डूकांश्चाप्यमानुषान् ।
वृहस्पत्यद्भुतमिदं तद्वारे तं प्रपूजयेत् ॥
उदुम्बरस्य समिधो दधिसर्पिर्युतः शुभाः ।
आहुतिसूक्तेन शुचिर्जुहुयान्नियमस्थितः ॥
वस्त्रं सुवर्णं धेनुञ्च दद्याद्विप्राय दक्षिणाम ।
स्त्रीगर्भपातो महिषी मानुषी गौरथापि वा ॥
यमलानि प्रसूयन्ते सिंहादित्येऽथ वापि गौः ।
महिष्यां शुक्लवत्साश्च जायन्ते अति वर्णिकाः ॥

सदन्ताश्चैव जायन्ते जातमात्रा हसन्ति च ।
बुधाद्भुतं विजानीत् स्ववारे तं प्रपूजयेत् ।।
दर्शोऽस्य दर्शीति वटसमिद्धोमादि पूर्ववत ।
वस्त्रं गाञ्च सुवर्णञ्च दद्याद्विप्राय दक्षिणाम् ।।"

**वैजवाप:**—"स्त्रिया गौर्बडवायाश्च यमलं यदि जायते ।
दद्याद्यमलजननीं मारुतिं शान्तिमाचरेत् ।।
धेन्वा यमलजनन्यैव निःक्रिणीयात् तां स्त्रियम् ।।"

**यमलजनन्या**--सवत्सयेत्यर्थः । अतएवोक्तवानग्निहोत्रप्रकरणे

**स एव**---"स्त्रीगोवडवायमलजनने मारुतं सप्तकपालं पूजयेद्यमलजननीन्दद्यात् । धेन्वा सरूपवत्सया पत्नीं निःक्रिणीयात् ।"

**गार्ग्ये**—माघे बुधे च महिषी श्रावणे वडवा दिवा ।
सिंहे गाव: प्रसूयन्ते स्वामिनो मृत्युदायिका: ।।
एता विप्रस्य दातव्या नान्या शान्तिर्विधीयते ।
पुनरेव प्रवक्ष्यामि दत्वा विप्रस्य दक्षिणाम् ।।
मूल्यन्दत्वा क्रयं कृत्वा स्वेच्छया च पुनर्हरेत् ।
गावो भाद्रे प्रसूयन्ते हस्तिन्य: कर्कसूतिका: ।।
सिंहार्काजामहिष्यो वा कामिन्यो वाऽथ घोटिका: ।
तत्र शान्ति प्रवक्ष्यामि सर्वपापप्रणाशिनीम् ।।
शतमष्टोत्तरं जुहुयाद्वारुणं शान्तिमाचरेत् ।।"

**तत्र मन्त्र:**—"ओं वरुणाय स्वाहा , ओं वरुण इदं शमयतु स्वाहा , ओं अद्भ्यः स्वाहा ।।"

**तत्रैव**--"उदुत्तममिति ह्येषा साविञ्या च घृताहुति: ।
हुतान्ते दक्षिणान्दद्याद् विप्राय गणकाय तु ।।"

अत्र माघश्रावणौ कृष्णादिचान्द्रक्रमेण ग्राह्यौ । कर्कोऽपि सौरानुरोधेन । भाद्रपदं च सौरमासपरम् , सर्वत्र तथा दर्शनात् । **अत्र सर्वत्र शान्तिमाह—**

नारदः—"कृष्णा गौः कपिलो वत्सः कपिलायाः कृष्ण एव च ।
उभयं विप्रवर्याय दातव्यं तत्क्षणात्पुनः ॥
ततो होमं प्रकुर्वीत शान्त्यर्थन्तु तिलेन वै ।
नमस्ते रूद्रमन्त्रेण दक्षिणां त प्रदापयेत् ॥
यथा वित्तानुसारेण ततः शान्तिर्भवेद्द्विज ।
स्नानं कृत्वा शुचिर्भूत्वा जपित्वा मन्त्रमेव च ॥
येन मन्त्रेण होतव्यं तेनैव तु जपम्मतम् ॥

ओं "नमस्ते रूद्रमन्यव" इत्यादिहवनमन्त्रः जपोऽप्यस्यैवेति ।

शतावर्त्तेन मन्त्रेण पत्रं वा श्रीफलस्य तु ।
जुहुयात्स्व शिवार्थन्तु एवं रक्षा कृता भवेत् ॥
अष्टोत्तरशतञ्चैव गायत्र्या जप उत्तमः ।
आत्मशुद्धिन्ततः कृत्वा सर्वहोमं समाचरेत् ॥
स सुवर्णेन हस्तेन शुद्धात्मा संशितव्रतः ।
परञ्च तारयेद्विप्र आत्मानञ्च विधानतः ॥
शान्तिकञ्च चरेद्विप्र इदं विष्णुर्विचक्रमे ।
सहस्रशीर्षा मन्त्रञ्च जपेत् पौष्टिकशान्तये ॥
शान्त्यर्थञ्च समुत्पाद्या एताश्चौषधयः क्रमात् ॥
श्यामाकञ्च शमी चैव वल्मीकस्य च मृत्तिका ।
श्वेतसर्षपसंयुक्ता दूर्वामुस्तादयो द्विज ॥
अश्वत्थत्वक्समायुक्तं वटकैकङ्कतं तथा ।
श्यामालतां सुवर्णञ्च प्रियङ्गु चार्कमेव च ॥
कुम्भञ्चोदकसम्पूर्णं सर्वैरेतैस्समन्वितम् ।
ऐशान्यां दिशि शान्त्यर्थं स्थापयेत्सुसमाहितः ॥
चतुर्थी चाष्टमी चैव द्वादशी च चतुर्दशी ।
एता वै तिथयः पुण्याः स्मृतास्त्वद्भुतशान्तये ॥"

नारदः—"भानौ सिंहगते चैव यस्य गौः सम्प्रसूयते ।
मरणन्तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः ॥

तत्र शान्तिं प्रवक्ष्यामि येन सम्पद्यते शुभम् ।
प्रसूतान्तत्क्षणादेव गां विप्राय प्रदापयेत् ॥
ततो होमं प्रकुर्वीत घृताक्तानाजसर्षपान् ।
आहुतीनां घृताक्तानामयुतं जुहुयात्ततः ॥
सोपवासः प्रयत्नेन दद्याद्विप्राय दक्षिणाम् ।
वस्त्रयुग्मं यवञ्चैव ससुवर्णं प्रदापयेत् ॥
इष्टदैवतमन्त्रेण ततः शान्तिर्भवेद् द्विज ॥"

## इति प्रसवाद्भुतम् ।

## अथ दन्तजननाद्भुतम्

**विष्णुधर्मोत्तरे**—"उपरि प्रथमं यस्य जायन्ते च शिशोर्द्विजाः ।
दन्तैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम ॥
मातरं पितरञ्चाऽथ खादेदात्मानमेव च ।
तत्र शान्तिं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥
गजपृष्ठगतं बालं नौस्थं वा स्नापयेद् द्विज ।
सर्वौषधैस्सर्वगन्धैर्वीजैः पुष्पैफलैस्तथा ॥
पञ्चगव्येन रत्नैश्च मृत्तिकाभिश्च भार्गव ।
स्थालीपाकेन धातारं पूजयेत्तदनन्तरम् ॥
सप्ताहञ्चात्र कर्त्तव्यं तत्र ब्राह्मणभोजनम् ।
अष्टमेऽहनि विप्राणां तथा देया च दक्षिणा ॥
काञ्चनं रजतं गाश्च भुवञ्चात्मानमेव च ॥"

वीजम्—सर्ववीजम् । तच्च गन्धादिवत्परिभाषितम् पूर्वमेव लिखितम् । मृत्तिकाश्च ग्रहोपरागशान्तिप्रकरणे मत्स्यपुराणकथिता बोद्धव्या, शान्तिप्रकरणे तस्याः कथितत्वात् । दक्षिणायामायासेन कथनं वित्ताशाठ्ये तात्पर्यं वोद्धव्यमिति ।

**वृहस्पतिः**—"बालानामष्टमे मासि षष्ठे वापि ततः पुनः ।
दन्ता यस्य विजायन्ते माता वा म्रियते पिता ॥

बालकः पीडयते तत्र स्वयमेव न संशयः।
दधिमधुघृताक्तानामश्वत्थसमिधान्ततः ॥
जुहुयादष्टशतं प्राज्ञः स्वमन्त्रेण तु मन्त्रवित्।
धेनुञ्च दक्षिणान्दद्यात्ततः सम्पद्यते शुभम् ॥"

नारदः—"बालानामष्टमे मासि दशमे वा तथा पुनः।
दन्ता येषां विजायन्ते माता वा म्रियते पिता ॥
बालकः पीड्यते तत्र स्वयमेव न संशयः।
दधिमधुघृताक्तानामश्वत्थसमिधान्ततः ॥
जुहुयादष्टशतं प्राज्ञः स्वमन्त्रेण तु मन्त्रवित्।
धेनुञ्च दक्षिणान्दद्यात्ततः सम्पद्यते शुभम् ॥"

स्वमन्त्रेण--स्वेष्टदेवतामन्त्रेण, सावित्र्या वा। अत्र च सर्वत्र प्रति-पदोक्तशान्त्यसम्भवे कनकान्नगोमहीदानादिका शान्तिरवगन्तव्या।

इति दन्तजननाद्भुतम्।

## अथ कायरिष्टाद्भुतम्

तत्र रिष्टस्वरूपमाह—

सुश्रुतः—"शरीरशीलयोर्यस्य प्रकृते- विकृतिर्भवेत्।
तच्च रिष्टं समासेन विज्ञेयं मुनिसत्तम ॥"

ज्योतिःपराशरविष्णुधर्मोत्तरयोः--

"प्रकृतेर्विकृतिर्नॄणां बुद्धीन्द्रिय--शरीरजा।
अकस्माद्यत्र दृश्येत तेषां मरणमादिशेत् ॥"

चरकः "मरणञ्चापि तन्नास्ति यन्न रिष्टपुरस्सरम्।"

तच्चारिष्टं द्विविधम नियतमनियतञ्च। तत्र काममृत्युसूचकं नियतम्। गणितागतायुस्समाप्त्या मरणं कालमृत्युस्तत्र प्रतीकाराभावः।

**महाभारते**—"न मन्त्रो न तपो दानं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं नरं कालनिपीडितम् ॥

केश्चित्पुनः कालमृत्युदञ्चनोपायो दर्शितः ।

**तथा च**—"रसायनं तपो जप्ययोगयुक्तैर्महात्मभिः ।
कालमृत्युरपि प्राज्ञैर्जीयते नालसैर्नरैः ॥"

अकालमृत्युसूचकमनियतम्, क्रूरग्रहदशान्तर्दशादिमरणमकालमृत्युः । तच्च स्वस्त्ययानादि साध्यमेवेति ।

अथ रिष्टविशेषः । तत्र बुद्ध्यादिरिष्टम्—

**पराशरः**—"सूक्ष्मार्थदर्शिनी मन्दाऽमन्दाऽसूक्ष्मार्थदर्शिनी ।
तपोयोगादृतेऽतीव बुद्धिः स्यात् प्राणसंशये ॥"

**सुश्रुतः**—"ह्रीरपक्रामति यतः कान्तिस्मृतिधृतिश्रियः ।
अकस्माधम्भजन्ते च स परासुरसंशयम् ॥"

**मार्कण्डेयपुराणे**—"येषां विनीतः सततं येऽस्य पूज्यतमाः स्मृताः ।
तानेव चावजानाति तामेव च विनिन्दति ॥
देवानार्चयते विद्वान् गुरुन्विप्रांश्च निन्दति ।
मातापित्रोरसत्कारो जामातृणाङ्करोति च ॥
योगिनां चैव विदुषामन्येषाञ्चैव निन्दति ।
प्राप्ते काले तु पुरुषस्तद्विज्ञेयं विचक्षणैः ॥"

**महाभारते**—"अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
प्रथमं ब्राह्मणं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥
ब्राह्मणाश्च विवादन्ते ब्राह्मणांश्च जिघांसति ।
नैतान् स्मरति कृत्येषु याचितश्च न यच्छति ॥
रमते निन्दया चैषां प्रसंशान्नाभिनन्दति ॥"

अथ नेत्रारिष्टम् । तत्र **देवलः**—

"अरुन्धतीं ध्रुवञ्चैव सोमच्छायां महापथम् ।
यो न पश्येन्न जीवेत्स नरः सम्वत्सरात्परम् ॥"

सोमच्छायेति--चन्द्रस्यैतच्छाया साऽर्कविम्बाच्छादिका यदपगमे चन्द्रमसः शुक्लत्वं वर्धते। तेन अन्यदृश्यचन्द्रच्छायाच्छादित चन्द्रबिम्बैकदेशादर्शने रिष्टिमिति। वराहः—

"अरुन्धतीं देवपथ ध्रुवं च छायां शशाङ्कस्य च नेक्षते यः।
अन्यैरदृश्यं यदि वीक्ष्यते वा वर्षान्तिरे मृत्युवशं प्रयाति॥"

यश्च ध्रुवोमध्यं न पश्येत् स विनश्येत्। यस्तु नासां रसनाञ्च न पश्येत्स विनश्येदिति।

मयूरचित्रे---"अरुन्धतीं ध्रुवञ्चैव सोमार्कौ च महापथम्।
न पश्येद्यदि यत्रैषा शान्तिर्गर्ग - प्रचोदिता॥
हेम्ना कृत्वा स्वकां मूर्तिं ब्राह्मणेभ्यो निवेदयेत्।

पञ्चतन्त्रे--"दीपनिर्वाणगन्धञ्च सुहृद्वाक्यमरुन्धतीम्।
न पश्यन्ति न जिघ्रन्ति न शृण्वन्ति गतायुषः॥"

देवलः--"रात्रौ चेन्द्रायुधं पश्येद्दिवानक्षत्रमण्डलम्।
परनेत्रेषु चात्मानं न पश्येत्स न जीवति॥
ब्रह्मशान्तिन्ततः कुर्याद्ब्रह्मयज्ञान्तमित्यथ॥
मन्त्रेण जुहुयात्पञ्च सहस्राणि तथाष्ट च।
औदुम्बरीश्च समिधश्चरुप्राशनमेव च॥
ब्राह्मणांस्तर्पयेच्चैव हुतान्ते भूरिदक्षिणा॥"

पराशरः--"वह्निसूर्येन्दुप्रभाणामदर्शनमेकादशे मासि मरणाय॥"

कालावल्यां—"पश्येद्रश्मिविनिर्मुक्तं सूर्यमिन्दुमलाञ्छनम्।
तारामञ्जनकल्पान्तु शुष्के वाप्योष्ठतालुके॥
भूमिच्छिद्र -रविच्छिद्रमकस्माद्यः प्रपश्यति।
तस्मै तल्लक्षणन्तस्य षण्मासान्मरणन्दिशेत्।"

देवलः—"अरश्मिवन्तमादित्यं रश्मिवन्तं च पावकम्।
यः प्रपश्येन्न जीवेत्स मासादेकादशात्परम्॥

**मयूरचित्रे** -"चन्द्रमध्ये तु यश्छिद्रं पश्येन्मास स जीवति ।
दक्षिणायां प्रभोर्मूर्त्तौ जुहुयाद्गौरसर्षपान् ॥"

दक्षिणायाम् दक्षिणामूर्त्तावित्यर्थः ।

"यद्वा धान्यानि दूर्वाश्च तिलान् हव्यान् यवांस्तथा ।
अपामार्गञ्च शान्त्यर्थं महाव्याहृतिभिस्ततः ॥
दक्षिणा धेनुवस्त्राणि दातव्यानि द्विजातये ॥"

**अत्र शान्तिमाह नारदः**--

आदित्यचन्द्रयोर्मध्ये छिद्रं पश्यति यो नरः ।
उत्पातमीदृशं दृष्ट्वा मासमेकं स जीवति ॥
इमा रुद्रेति मन्त्रेण जुहुयात्सर्पिषाऽऽहुतिम् ।
आहुती द्वे सहस्रे तु होमश्च कथितो भवेत् ॥
वृषभं दक्षिणान्दद्यात्ततः सम्पद्यते शुभम् ॥"

**मयूरचित्रे**-- 'विना वातं विना मेघं तोयपाते जनक्षयः ।
मासत्रयस्य मध्य तु प्रभुर्द्रष्टा च नश्यति ॥
हव्यं सहस्रं तत्रैकः समिधा वेतसस्य ॥
कयानश्चित्र मन्त्रेण देया गौः द्विजभोजनम् ।'

**देवलः**- "रुक्मशाखान् द्रुमान्दृष्ट्वा गन्धर्वनगराणि च ।
पश्येत्प्रेतपिशाचांश्च दशमासान् स जीवति ॥"

**कालावल्यां**--यश्चातिहन्यते भूतो दृष्ट्वा रात्रावथो दिवा ।
स मृत्युं सप्तरात्रेण नरः प्राप्नोत्यसंशयम् ॥
पश्येन्मेलापकं क्वापि हंसकाकशिखण्डिनाम् ।
गम्यते तेन मासेन मृत्योर्वदनकोटरम् ॥
प्रत्यर्कं वीक्षते यस्तु विमेघेऽहनि यत्नतः ।
आपूर्यवदनं तोयैः फूत्कृतं वीक्षते क्रमात् ॥
तन्मध्ये दृश्यते नूनं धनुरिन्द्रस्य शोभनम् ।
तस्मिन्नदृश्यमाने तु षण्मासे मरणं भवेत् ॥'

**आदित्यपुराणे**--"आकाशगङ्गामथरोहिणीञ्च वशिष्ठभार्यां ध्रुवमध्यभञ्च ।
भ्रुवोर्मध्ये देवपथ प्रपश्येत्पूर्णं चन्द्रं तारकां कृष्णवर्णाम् ॥
अदृश्यमानेन हुताशनेन स्याद्दग्धवस्त्रं त्वथवा कथञ्चित् ।
षड्भिर्मासैस्तां प्रियां सम्प्रयाति कामीव नारीमभिसारिकान्तु ॥

**पराशरः**--"रक्षोयक्षपिशाचानां स्वप्ने दर्शनमतीन्द्रियाणां मूर्त्तित्यागो नवमे मासि मरणायेति ।" **आदित्यपुराणे**---

"वामेक्षणाधःस्थितचन्द्रिकां स न पश्यति स्वांगुलिपीडनेन ।
तदा स मासैर्विगतैश्च षड्भिः प्रयाति चैवं सकलं विहाय ॥
भ्रूमार्गसकोचनसंस्थिताञ्च संपीडनान्नैव पश्येद्यदा तान् ।
तदा त्रिभिर्मासगतैर्नरश्च छिद्रन्तु मर्माणि जहाति तानि ॥
कर्णोपान्ते पीडयन्नानुपश्यन्मासद्वयेन प्रजहेत्स देहम् ।
घ्राणोपान्तं पीडयन्नानुपश्यन्मासेन देह प्रजहाति तस्मात् ॥
नेत्रस्यार्धे दक्षिणस्याधसस्थां यदा कलान्तां शशिनो न पश्येत् ।
तदा वर्षैश्चाष्टभिः स्वञ्च देहं जहेच्च नित्यं गतवांश्च नित्यः ॥
नेत्राधःस्थां तां प्रपश्यन् स्वकान्ति तस्माद्वर्षैः पञ्चभिः संप्रयाति ।
कर्णोपान्ते तां न पश्यस्त्रिभिश्च वर्षैरतीतैः प्रजहाति सर्वम् ॥
घ्राणोपान्ते तां न पश्यंश्चतुर्भिर्वर्षद्वयेनैव गतेन मृत्युम् ।
समं द्वयोर्नेत्रयोस्तां च पश्यन्मार्गाष्टकस्थां युगपत्कलान्तु ॥
मासैस्त्रिभिर्दशभिर्वासरैश्च रन्ध्रं व्रजेद्वासकसज्जिकां ताम् ।।"

**मार्कण्डेय**--"स्ववस्त्रममलं शुक्लं रक्तं पश्येत्तथाऽसितम् ।
यः पुमान् मृत्युमापन्नं तस्यापि हि विनिर्दिशेत् ॥"

**अथ श्रोत्ररिष्टम् तत्र चरकः**--

"अशब्दस्य च यः श्रोता शब्दोऽन्यश्च न बुध्यते ।
द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयौ विजानता ॥"

**तथा च**--"गीताध्ययनवाद्यानामकस्माच्छृणुयाद् ध्वनिम् ।
तं प्रवृत्तं न श्रृणुयाद् विपरीतं श्रृणोति च ॥

दिव्यध्वनिं वा श्रृणुयाच्छृणुयाद्वापि भैरवम् ।
अयाचितामादिशति भिक्षां देहीत्यसुक्षये ॥"

**कालावल्यां**--"रटन्ते यदि वाऽकस्माद् घण्टानादोऽनुभूयते ।
येन तस्य विजानीयान्मरणं पाञ्चमासिकम् ॥"

**सुश्रुतः**--"श्रृणोति विविधान् शब्दान् यो दिव्यानसतो बहून् ।
समुद्रपुरमेघानामसम्पत्तौ च तत्स्वनात् ॥
तत्स्वनान् वा न गृह्णीते गृह्णीते वाऽन्यशब्दवत् ।
ग्रामारण्यस्वनांश्चापि विपरीतान् श्रृणोत्यपि ॥
द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति ।
यश्चाकस्मान्न श्रृणोति तं ब्रुवन्ति गतायुषम् ॥"

**पराशरः**--"श्रोत्रच्छिद्रयोरंगुल्यग्रावनद्धयोरन्तर्नादाश्रवणं सद्यो मरणायेति ।"

**मार्कण्डेयः**--"पिधाय कर्णौ निर्घोषं न श्रृणोत्यात्मसंभवम् ।
नश्यते चक्षुषोर्ज्योतिर्यस्य सोऽपि न जीवति ।"

अथ घ्राणरिष्टम् । तत्र पराशरः-

"शोभनाशोभनघ्रेयग्रहणे तु विपर्ययः ।
सुरभीनामपां द्वेषो दुर्गन्धानामपीष्टता ॥
असुक्षयाय निर्दिष्टः प्रकृतेर्विकृतिर्यदि ॥"

**सुश्रुतः** - 'सुरभिं दुरभिं चेति दुरभिं सुरभिं तथा ।
यो वै गन्धं न गृह्णाति शान्तदीपे च मानवः ॥
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ॥"

**मोक्षधर्मे**--"पूतिगन्धमुपघ्राति सुरभिं प्राप्य यो नरः ।
देवतायतनस्थस्तु सप्तरात्रेण मृत्युभाक् ।

**देवलः** --"दीपगन्धञ्च नापैति विद्यान्मृत्युमुपस्थितम् ॥"

अथ जिह्वारिष्टम् । तत्र पराशरः--

"षण्णां रसानां पर्यासमिष्टानिष्टविपर्ययः ।
अभक्ष्यलौल्यमत्यर्थं मरणायोपजायते ॥"

सुश्रुतः—"विपरीतेन गृह्णाति रसान् यश्चोपयोजितान् ।
यो वै रसान् न संवेत्ति तं ब्रुवन्ति गतायुषम् ॥"

अथ त्वग्रिष्टम् । तत्र पराशरः—

"श्लक्ष्णं खरं खरं श्लक्ष्णं शीतोष्णस्य विपर्ययम् ।
अकस्माद्वेत्ति यो देही दुर्लभं तस्य जीवितम् ॥"

सुश्रुतः—"यस्तूष्णमिति गृह्णाति शीतमुष्णं च शीतवत् ।
संजातशीतपिटको यस्य दाहेन पीड्यते ॥
उष्णगात्रोऽतिमात्रं च यः शीतेन प्रवेपते ।
प्रहारं नाभिजानाति स गच्छेद्यममन्दिरम् ॥"

कालावल्यां—"खरशीतोष्णरूक्षादि स्पर्शश्चापि विहन्यते ।
गम्यते तेन मासेन मृत्योर्वदनकोटरम् ॥"

पराशरः—"यो न वेत्तीन्द्रियग्राह्यं वेत्ति वातीन्द्रियं नरः ।
तपोयोगादृते देही देहमन्यं प्रयात्यसौ ॥"

चरकः—"अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ।
इन्द्रियैरधिकं पश्यन पञ्चत्वमधिगच्छति ॥
स्वस्थः प्रज्ञाविपर्यासैरिन्द्रियार्थेषु वैकृतिः ।
पश्यन्ति येषु बहुशस्तेषां मरणमादिशेत् ॥"

विष्णुधर्मोत्तरे—स्पर्शदृष्टिरसघ्राणशब्दचेष्टाविपर्ययः ।
दृश्यते हि मुमूर्षाणां स्वस्थातुरशरीरिणाम् ॥"

अथ केशादिरिष्टम् । तत्र पराशरः—

"जलार्द्रे शिरसि धूमाभिदर्शनं सूर्यसंतप्तमस्तकस्यादर्शनमूष्मणो वा त्र्यहाद् भयाय" ।

**मोक्षधर्मे**—"मूर्धतश्चोत्पतेद् धूमः सद्यो मृत्युनिदर्शकः"।

**लिङ्गपुराणे**—"धूमं वा मस्तकात्पश्यन् दशाहं स न जीवति"।

**देवलः**—"मस्तके तु भवेद्धूमो मासं न स जीवति"।

**चरकः**—"प्रमुह्य च नखान् केशान् प्रतिगृह्णात्यतीव च"।

**तथा च**—"यस्य केशातिरिक्ताश्च दृश्यन्तेऽभ्यक्तसन्निभाः।
उपरुद्धायुषं ज्ञात्वा तं नरं परिवर्जयेत्॥
आयम्योत्पाटितान् केशान यो नरो नानुबुध्यते।
अनातुरो वा रोगी वा षड्रात्रं नातिवर्त्तते"॥

**पराशरः**—"गोमायुचूर्णतुल्यरजसोऽङ्गेभ्य उत्तमाङ्गात् प्रवर्त्तनं पञ्चमे मासि मरणायेति"।

**कालावल्यां**—"कमारुह्य व्रजेद्रोगी कृकलासस्तु यस्य हि।
वर्णत्रयं विभर्त्याशु तन्नाशः पाञ्चमासिकः"॥

कम् - शिरः। कृकलासः--गिरगिट इति प्रसिद्धः। **आदित्यपुराणे**--

यदा तु पीतारुणकृष्णवर्णं ब्रह्मद्वारे कृकलासं प्रपश्येत्।
तदा स वै तच्छरीरं जहाति बालं त्वनाथेन भयादरण्ये"।

**विष्णुधर्मोत्तरे**---"क्रव्यादाः पक्षिणो यस्य मूर्ध्नि लीयन्ति वै द्विजाः।
काकश्येनादयस्तस्य षष्ठे मरणमादिशेत्"॥

**देवलः**---"काकः कपोतो गृध्रो वा निलीनो यस्य मूर्धनि।
क्रव्यादाः पक्षिणश्चैव षण्मासान् स न जीवति"॥

**चरकः**--"भ्रुवोर्वा यदि वा मूर्ध्नि सीमन्तावर्त्तकान् बहून्।
अपूर्वानकृताव्यक्तान् दृष्ट्वा मरणमादिशेत्॥
त्र्यहमेते न जीवन्ति लक्षणेनान्तरा जनाः।
अरोगाणां पुनस्त्वेतत् षड्रात्रं परमुच्यते॥

ललाटे वस्तिशीर्षे वा नीला यस्य प्रकाशते ।
राजी वालेन्दुकुटिला न स जीवितुमर्हति" ।।

**मोक्षधर्मे**-"अकस्माच्च स्रवेद्यस्य वाममक्षि नराधिप ।
मूर्धतश्चोत्पतेद् धूमः सद्यो मृत्युनिदर्शनम्" ।।

**पराशरः**--"वक्रविकृतिनासादर्शनं मासान्ते मरणाय" ।

**लिङ्गपुराणे**--"नेत्रमेकं स्रवेद्यस्य कर्णौ स्थानाच्च भ्रश्यतः ।
नासा वक्रा च भवति स ज्ञेयो गतजीवितः" ।।

**मोक्षधर्मे**---"कर्णनासाधरसमं दन्तदृष्टिविरागिता ।
संज्ञालोपो निरुष्मत्वं सद्यो मृत्युनिदर्शनम्" ।।

**देवलः**--"गण्डयोस्तिलके रक्ते तस्य मृत्युरुपस्थितः" ।

**चरकः**--"यस्य नीलावुभावोष्ठौ पक्वजम्बूसंनिभौ ।
मुमूर्षुरिति तं विद्यान्नरं धीरो गतायुषम् ।।
अस्थिश्वेता द्विजा यस्य पुष्पिताः पङ्कसंवृताः ।
विकृतासन्नरोगन्तु विहायारोग्यमश्नुते" ।।

**लिङ्गपुराणे** "यस्य कृष्णा खरा जिह्वा पद्माभासञ्च वै मुखम ।
गण्डे च पिटके रक्ते तस्य मृत्युरुपस्थितः" ।।

**चरकः**--"मुखशब्दश्च वावोष्ठौ शुक्लश्यावातिलोहितौ ।
विकृत्या यस्य चानीलौ न स रोगाद्विमुच्यते" ।।

**कालावल्यां**-"कृष्णपद्मोपमं वक्त्रं रसना कज्जलच्छविः ।
इदृश लक्षणं ज्ञात्वा मासार्धं जीव्यते ध्रुवम्" ।।

**देवलः**--"यस्य कृष्णौ करो जिह्वा पद्माभासञ्च वै मुखम् ।
गण्डे च पिटका रक्ताः स जीवेच्चतुरो दिनान्" ।।

**देवलः**--"यस्य वै भुक्तमात्रस्य हृदयं पीड्यते क्षुधा ।
जायते दन्तहर्षश्च तं गतायुषमादिशेत्" ।।

**लिङ्गपुराणे** —"यस्य वै स्नानमात्रस्य हृत्पादमवशुष्यति ।
पिबतश्च जलं शोषो दशाहं सोऽपि जीवति" ॥

**मयूरचित्रे** "हृदये मस्तके चापि कृशा दीप्तिर्विभाति च ।
मृत्युं तस्य विजानीयादर्वाग्मासद्वये ध्रुवम्" ॥

**कालावल्यां** —"गच्छतश्च तपः पश्चान्निर्गमाद् बाहुजंघयोः ।
ब्रह्मसूत्रविनाशो वा नाशस्तस्यैकवासरः ॥
स्वहस्तपादयोरेव वामदक्षिणयोरपि ।
अनामिकोत्तरदेशे आव्रणे कृष्णयोस्तदा ॥
दृष्टयोर्जीव्यते त्वष्टादशाहानि न संशयः" ॥

**चरकः**—"पुष्पाणि नखदन्तेषु पक्वो वा दन्तसंश्रितः ।
चूर्णकश्चोष्णदन्तेषु लक्षणं मरणस्य तत् ॥
ओष्ठयोः पादयोः पाण्योरक्ष्णोर्मूत्रपुरीषयोः ।
नखेष्वपि च वैवर्ण्यमेतत् क्षीणबलेऽन्तकृत् ॥
निकषन्ति च यः पादौ च्युतांशः परिधावति ।
विकृत्या नरलोकेऽस्मिंश्चिरं वसति नो जनः ॥
अयोगमभियोगं वा शरीरे मतिमान् भिषक् ।
खादीनां युगपद् दृष्ट्वा भेषजं न विचारयेत् ॥
दन्तैश्छिन्ननखाग्राणि नखैश्छिद्यन् शिरोरुहान् ।
भूमिं काष्ठेन विलिखन् न रोगात्परिमुच्यते ॥
मुहुर्हसन् मुहुः क्ष्वेडन् शयनं हन्ति यः सदा ॥
मुहुश्छिद्राणि विमृशेद्यो नरो न स जीवति" ॥

**देवलः**--"पांशौ वा कर्दमे वापि यस्य खण्डं पदं भवेत् ।
अग्रतः पृष्ठतो वापि सप्तमासान् स जीवति ॥
मारुतो यस्य गात्रेषु मर्मस्थानानि कृन्तति ।
जीवेत्त्र्यहं तु स नरो न सन्देहस्तथा भवेत् ॥
अद्भिः स्पृष्टो न हृष्येत नाहनी द्वे स जीवति" ॥

**चरकः** "रसन्ति वलङ्गानि चेष्टा व्युपरमन्ति वा ।
वैरस्यं भजते कायः कायश्छिद्रं विशुष्यति ॥

इत्येतानि मनुष्याणां भवन्ति विनशिष्यताम्।
शरीरकम्पः संमोहो गतिर्वचनमेव च ॥
मर्त्यस्य चोपलभ्यन्ते यस्य मासं स जीवति" ॥

**मार्कण्डेयः**—"स्थूलः कृशः कृशः स्थूलो योऽकस्मादेव जायते।
प्रकृतेश्च निवर्त्तेयस्तस्यायुश्चाष्टमासिकम्" ॥

**चरकः**—"समस्तगुणसम्पन्नमन्नश्मनाति यो नरः।
शश्वच्च बलवर्णाभ्यां हीयते स न जीवति" ॥

**विष्णुधर्मोत्तरे**—"दौर्बल्यं जायते यस्य बहु सम्पन्नभोजिनः।
अनश्ने यस्य पीनत्वमष्टमे स्यात्स मृत्युभाक्"

**देवलः**—"शवगन्धो भवेद्यस्य द्वादशाहं स जीवति" ॥

**मार्कण्डेयः**—"यस्य छागसमो गन्धो गात्रे शवसमोऽपि वा।
तस्यार्धमासिकं ज्ञेयं योगिनो नृपजीवितम्" ॥

**सुश्रुतः**—"पङ्कमत्स्यवशातैलघतगन्धाश्च ये नराः।
मद्यगन्धाश्च ये यान्ति गतास्ते यमसद्मनि" ॥

**पराशरः**—"सुरभिर्वाऽप्यसुरभिर्यस्य गन्धः प्रवर्त्तते।
अस्वस्थः स्वस्थदेहः स्याद्दृष्टं तज्जीवितान्तकृत्" ।

**कालाख्यां**—"उष्णं यस्य भवेदर्धं शरीरं चार्धशीतलम्।
तस्य सप्तमरात्रौ तु मृत्युरित्यागमोदितः ॥
यस्य त्वाऽकस्मिकी ज्वाला ज्वलन्ती जायते तनौ।
स याति सप्तदिवसे मृत्योर्वदनकोटरे" ॥

**पराशरः**—"स्वरः प्रकृत्या विकृतो विस्वरोऽतिस्वरः कृशः।
अजैडकानुकारी वा पक्षिणी वाऽप्यसुक्षये" ॥

**आदित्यपुराणे**—
"सूर्योदये वाऽस्तमने निशायां चन्द्रस्य ज्योत्स्नामथ चोत्थितस्तु।
स्वात्मच्छायां बाहुदण्डौ प्रसार्य दृष्ट्वा कबन्धं प्रजहाति देहम् ॥

पश्यंश्च तां दक्षिणबाहुहीनां विसर्जयेद् भ्रातरमग्रभूतम् ।
पश्यंश्च तां वामभुजोच्छ्रिताञ्च पुत्रांश्च दारांश्च विसर्जयेच्च ॥
कृत्वा कराभ्यां मुकुटं ललाटे त्वरं निधायाथ च जानुपूर्वे ।
सुवर्तुलां तां च निरीक्ष्य भूमौ विशेत्स्वदेहं समरान्निवृत्तः ॥
विशीर्णपर्णामिथ ताञ्च दृष्ट्वा षड्भिर्मासैस्तां सदेहां जहाति ।
यथैव हंसो वक्रतुण्डघातैर्विकीर्णपत्रां नलिनीं विरूपाम् ॥"

**मार्कण्डेयः**—"घृते तैले तथाऽऽदर्शे तोये वा नात्मनस्तनुम् ।
यः पश्येदशिरस्को वा मासादूर्ध्वं न जीवति ॥"

**नारदः**—"आत्मनश्च शिरश्छायां नैव पश्येत्तु कर्हिचित् ।
उत्पातमीदृशं दृष्ट्वा मासमेकं स जीवति ॥
इमा रूद्रेति मन्त्रेण जुहुयात्सर्पिषा हुतिम् ।
आहुतिर्द्वे सहस्रे तु होमश्च कथितो भवेत् ॥
वृषभं दक्षिणां दद्यात्ततः सम्पद्यते शुभम् ॥"

**आदित्यपुराणे**—सूर्योदये वाऽस्तमने च काले मध्याह्नकाले त्वथ दक्षिणस्याम् ।
देहच्छायां वीक्ष्य तनुं जहाति तस्मिन् दिनान्ते स्त्रियमेव दुष्टाम् ।"

**मार्कण्डेयः**—"हन्यते काकपंक्तीभिः पांशुवर्षेण वा पुनः ।
स्वां छायां विकृतां पश्येच्चतुष्पञ्च स जीवति ॥"

**सुश्रुतः**—"मूत्रपुरीषबृद्धिरभुञ्जानानां मरणाय ।"

**विष्णुधर्मोत्तरे**—"सुवर्णं रजतं मूत्रं पुरीषं वमते निशि ।
स्वप्ने स दशमे मासि प्रयाति यममन्दिरम् ॥"

**देवलः**—"छर्दिमूत्रपुरीषेषु सुवर्णरजतप्रभम् ।
प्रत्यक्षमथवा स्वप्ने दशमासान् स जीवति ॥
रक्तगन्धाम्बरः स्रग्वी गच्छेद्वा दक्षिणामुखः ।
खरोष्ट्रमपि वा रोहेत् त्रीन् मासान् नाभिजीवति ॥"

**मार्कण्डेयः**—केशाङ्गारं तथा भस्म भुजङ्गान् निर्जलां नदीम् ।
दृष्ट्वा स्वप्ने दशाहात्तु मृत्युरेकादशे दिने ॥"

**वायुपुराणे**—"मुक्तकेशो हसन्नृत्यन् गायंश्चैव तु यो नरः ।
यास्यां दिशमितो गच्छेत्तदन्तं तस्य जीवितम् ॥"

**मार्कण्डेयः**—"उष्ट्रारासभयानेन यः स्वप्ने दक्षिणां दिशम् ।
प्रयाति तं चेज्जानीयात्सद्यो मृत्युं नराधिप ॥
स्वप्नेऽग्निं प्रविशेद्यस्तु न च निष्क्रमते पुनः ।
जलप्रवेशादपि वा तदन्तं तस्य जीवितम् ॥
आमस्तकतलो यस्तु निमज्जेत्पङ्कसागरे ।
दृष्ट्वा तु तादृशं स्वप्नं सद्य एव न जीवति ॥"

**चरकः**—"निष्ठ्यूते यस्य दृश्यन्ते वर्णा बहुविधाः पृथक् ।
यश्च सीदत्यपः प्राप्य न स जीवितुमर्हति ॥
निष्ठ्यूतं च पुरीषं च रेतश्चाम्भसि मज्जति ।
यस्य तस्यायुषः प्राप्तमन्तमाहुर्मनीषिणः ॥"

**ब्रह्माण्डे**—"सूर्योदये प्रत्यूषसि प्रत्यक्षं यस्य वै शिवा ।
क्रोशन्त्यभिमुखाऽभ्येति स गतायुर्भवेन्नरः ॥"

**बार्हस्पत्ये**—"मृगः पशुर्वा पक्षी वा वाशेद्यः संमुखे स्थितः ।
यस्य चोत्थापनं कुर्यात्स मनुष्यो विनश्यति ॥"

अत्र मृगपक्षिविकृतिविहिता शान्तिः कर्तव्येति ।

**मयूरचित्रे**—"शिरोदघ्नमुरोमात्रं कपोतो गृध्रवायसौ ।
निराशाश्चेद् ब्रुवन्त्येते गच्छतः पुरुषस्य तु ॥
अचिरेणैव कालेन श्मशानमधिगच्छति ।
ते च भाण्डे चरुं कृत्वा वारुण्या होम इष्यते ॥"

अत्रानुक्तविशेषशान्तिषु प्रभूतकनकान्नगोमहीदानादिका शान्तिः रुद्रपूजापूर्विका कर्तव्येति ।

इति कायरिष्टाद्भुतम् ।

## अथ शाकुनाद्भुतम्

**वराहः**—"अन्यजन्मान्तरकृतं कर्म पुंसां शुभाशुभम् ।
यत्तस्य शकुनः पाकं निवेदयति गच्छताम् ॥"

न केवलं गच्छतां तिष्ठताञ्चापीति । अतएवाह **वसन्तराजः**—

शुभाशुभज्ञानविनिर्णयाय हेतुर्नृणां यः शकुनः स उक्तः ।
गतिस्वरालोकनभावचेष्टासंकीर्णनाम्ना द्विपदादिकानाम् ॥

**वराहः**—"द्वन्द्वरोगार्दितत्रस्तकलहामिषकांक्षिणः ।
आपगान्तरिता मत्ता न ग्राह्याः शकुनाः क्वचित् ॥

**वसन्तराजः**—"निद्राप्रसक्तो रतमांसलुब्धो भीतः प्रमत्तः क्षुधितो रुगार्त्तः ।"

तथा च बालो वनमन्तरेण ग्राह्यो न नद्यन्तरितस्तथान्यः" ।

**मयूरचित्रे**—"रोगिणोऽधिकदुःखार्त्ता भीता युद्धामिषैषिणः ।
सीमानदीव्यपेताश्च सवैराश्चैव निःफलाः ॥"

**वटकणिकायां**—"द्वन्द्वार्त्तरोगार्दितभीतमत्तवैरार्त्तयुद्धामिषकांक्षिणश्च ।
सीमान्तनद्यन्तरिश्च सर्वे न चिन्तनीयाः सदसत्फलेषु ॥"

**पराशरः**—"मत्तवित्रस्तव्याधितव्यङ्गकलहामिषासक्तविद्रुतानि प्रमाणानि न प्रमाणी कुर्यात्" । **वसन्तराजः**—

अश्वोष्ट्रमार्जारखरा रजन्यां शशो मृगो वा शिशिरे व्यलीकाः ।
हेमन्तकाले महिषर्क्षसिंहा विलेशयद्वीपशिशुप्लवङ्गाः ॥
स्यातां वृथा काकपिकौ वसन्ते वृथा वराहश्च वका नभस्ये ।
स्युः श्रावणे वारणचातकाद्या अजाविगोक्रौञ्चनिभा घनान्ते ॥

**वराहः**—"न ग्राम्यो वन्यगो ग्राह्यो नारण्यो ग्रामसंस्थितः ।
दिवाचरो न शर्वर्य्यां नच नक्तञ्चरो दिवा ॥"

एते शुभाशुभसूचकत्वेन न ग्राह्या इत्यर्थः। वसन्तराजः--

"ग्राम्यो वहिर्ग्रामगतश्च वाऽथो दिवाचरो निश्यदिवाचरोऽह्नि।
वृथाऽथवा खस्थितिकालहीनश्चरन् भ्रमन् भूपतिदेशभीत्यै॥"

अत्र उभयचर उभयत्रैव ग्राह्यः। तत्र दीप्तो रौद्रश्च शकुनोऽशुभो भवति। शान्तः सौम्यश्च शुभः, मिश्रो मिश्र इति। देवदीप्तः क्रियादीप्तश्चेति द्विविधो दीप्तः। पञ्चधा दैवदीप्तः क्रियादीप्तश्च। एवं शान्तोऽपि। सौम्यरौद्रौ च द्विविधाविति।

वराहः--"क्षणतिथ्युडुवातार्कैर्दैवदीप्तो यथोत्तरम्।
क्रियादीप्तो गतिस्थानभावस्वरविचेष्टितैः॥
दशधैवं प्रशान्तोऽपि सौम्यस्तृणफलाशनः।
मांसामेध्याशनौ रौद्रौ विमिश्रोऽन्नाशनः स्मृतः॥"

अशोभनो मुहुर्त्तादौ जातः क्षणदीप्तः। वातप्रतिलोमो वातदीप्तः इत्युत्पलैर्व्याख्यातम्। दग्धज्वलितधूमितदिग्भवस्त्रिविधो रविदीप्तः इति।

पराशरः--"अङ्गारिण्यर्कनिर्मुक्ते दीप्ता यस्यां दिवाकरः।
प्रधूमितेष्यसूर्यादि शान्ताः पञ्चेतरा दिशः॥"
दग्धवक्रान्तराच्छिन्नशुष्ककण्टकिवृक्षगाः।
अश्मनिम्बकपालाशसिकताकेशभस्मसु॥
श्मशानाङ्गारवल्मीकविषमोषरसानुषु।
जीर्णशीर्णाशुचिभ्रष्टदेशस्था दीप्तसंज्ञिताः॥
मनोज्ञस्निग्धहरितक्षीरिपुष्पतरुस्थिताः।
समप्रशस्तभूमिष्ठाः शान्ताः स्युर्मृगपक्षिणः॥
तिथिवातार्कभस्थानचेष्टादीप्ता यथाक्रमम्।
धनसैन्यबलाङ्गेषु कर्मणां स्युर्भयङ्कराः॥
जीमूतध्वनिदीप्तेषु भयं भवति मारुतात्।
उभयोः सन्ध्ययोर्दीप्ताः शस्त्रोद्भवभयङ्कराः॥
चितिकेशकपालेषु मृत्युबन्धवधप्रदाः।
कण्टकीकाष्ठभस्मस्थाः कलहाय सुदुःसहाः॥

अप्रसिद्धतया चापि निःसारास्थिव्यवस्थिताः ।
कुर्वन्ति शकुना दीप्ताः शान्ता जाप्यफलास्तु ते ॥
कलहस्व'दीप्तेषु स्थानदीप्तेषु विग्रहः ।
उच्चमादौ ध्वनिं कृत्वा नीचं पश्चाच्च मोघकृत् ॥
अङ्गारिण्यामतिक्रान्तं दीप्तायां प्रत्युपस्थितम् ।
प्रधूमितायामागामि शान्तं शान्तासु निर्दिशेत् ॥

**वराह**—"मुक्तप्राप्यैष्यसूर्यासु फलं दिक्षु तथाविधम ।
अङ्गारदीप्तधूमिन्यस्ताश्च शान्तास्ततोऽपराः ॥
तत्पञ्चमदिशां तुल्यं शुभं त्रैकाल्यमादिशेत् ।
परिशेषदिशोर्वाच्यं यथासन्नं शुभाशुभम् ॥"

**वसन्तराजः**—"आर्त्तभीतरवजर्जरदीप्ताभिन्नकण्ठलघुभैरवरूक्षाः ।
निन्दनीयनिनदाः शुभशब्दाः शान्तपूर्णमुदिताः प्रकृतास्तु ॥"

इति शाकुनाद्भुतम् ।

## अथ नानामृगविहगाद्भुतम्

**पराशरः**—"पृषतरुरुमृगचमरहरिणसिंहव्याघ्रादीनामारण्यानां स्वयमनुप्रवेशः पुरविनाशाय ।"

**औसनसे**—"रुरुवश्च वराहाश्च पृषता हरिणास्तथा ।
येषु ग्रामेषु दृश्यन्ते तानरण्यान्विनिर्दिशेत् ॥"
प्रधानाश्चात्र बद्ध्यन्ते पक्षे सप्तदशे तथा ।
तस्मिन् जनपदे चैवमहदुत्पद्यते भयम् ॥"

**तथा**—"देवदूता न हन्तव्या आरण्या ग्राममागताः ।
तेषां बन्धे भवेद्बन्धो मोक्षे मोक्षो बधे बधः ॥"

**मत्स्यपुराणविष्णुधर्मोत्तरयोः**—

"प्रविशन्ति यदा ग्राममारण्या मृगपक्षिणः ।
अरण्यं यान्ति वा ग्राम्या स्थलं यान्ति जलोद्भवाः ॥

स्थलजा वा जलं यान्ति घोरं वा शान्तिनिर्भयाः ।
राजद्वारे पुरद्वारे शिवा चाप्यशिवप्रदा ॥
दिवा रात्रिचरा वाऽपि रात्रौ वाऽपि दिवाचराः ॥"

**वृद्धगर्गः** "मृगपक्षिण आरण्या विशन्ति निर्भयाः पुरम् ।
त्यक्त्वा वा नगरं ग्राम्या व्रजन्ति निर्भया वनम् ॥
दिवा रात्रिचरा वाऽपि पुरे ग्रामे च शब्दिताः ।
रात्रौ पुरविनाशाय दिवा राजबधाय च ॥"

दिवा रात्रिचरो वेति चरन्तीति सम्बन्धः ।

**वराहः**—"पुरपक्षिणो वनचरा वन्या वा निर्भया विशन्ति पुरम् ।
नक्तं वा दिवसचरा क्षपाचरा वा चरन्त्यहनि ॥"

भयदा इति सम्बन्धः ।

**वृद्धगर्गः**—"वालान् दन्तैर्यदा गृह्य ग्राममध्ये च धावति ।
यतो मृगः पलायति ततो मोक्षं विजानते ॥
बर्द्धनी काष्ठमलातं वा चैलकेशास्थिभाजनम् ।
श्मशानादाहरेद्ग्रामे मृत्यवे वा भयाय वा ॥"

**वसन्तराज**—"आरण्यसत्त्वा मिलिता रुदन्तो ग्रामोपकण्ठे भयदा भवन्ति ।
ग्रामं पुनस्तौ परिवेष्ट्यमानो विवेष्ट्यते वैरिजनेन नूनम् ॥
ग्राम्या मिथोऽरण्यचरानुनादो रोधाय ते ग्रामचरानुशब्दाः ।
परस्परानुस्वनेन भीतिं वदन्ति वन्दिग्रहणप्रवृत्ताम् ॥
ग्रामे पुरे वा यदि वन्यसत्त्वा रात्रौ प्रविष्टा दिवसे च दृष्टाः ।
तदा तदाशु ज्वरतामुपैति स्युर्मृत्यवे तत्र मृतप्रसूताः ॥
गृहागता गेहपतेर्भयाय पुरस्य रोधाय तु गोपुरस्थाः ।
स्युर्वन्यसत्त्वाः शकुनानि चैषामुदभावनीयान्यपराणि चैव ॥"

**वृद्धगर्गः**—"धावन्तो यत्र वा सन्ति सूर्यप्रतिमुखा मृगाः ।
क्षिप्रन्तत्र पलायीत दृष्ट्वा च तद्भयं भवेत् ॥

अवतीर्य नदीकूलं जलं निम्नं सरांसि वा ।
मृगा नदन्ति वर्षासु तद्भयोत्पातलक्षणम् ॥
अरण्ये भैरवं घोरं नन्दित्वा प्रविशेत्पुरम् ।
गोचतुष्पादपीडा स्याच्छस्त्रोत्पातं विनिर्दिशेत् ॥
रात्रिन्दिवं संप्रदीप्ता दिक्षु सर्वासु सर्वशः ।
व्याहरन्ति मृगा घोरं विद्रवाय भयाय वा ॥"

**बार्हस्पत्ये**—"अशिवञ्चापि वाशन्ति सन्ध्ययोर्मृगपक्षिणः ।
वाशन्ते भैरवं यत्र तदप्याशु विनश्यति ॥"

**मात्स्ये**—"दीप्ता वाशन्ति सन्ध्यासु मण्डलानि च कुर्वते ।
वाशन्ति विस्वरं यत्र तत्राप्येतत्फलं भवेत् ॥"

दीप्ता-दीप्तदिश आश्रित्य इत्यर्थः । **वृद्धगर्गसंहितावार्हस्पत्ययोः**—

प्रदोषे कुक्कुटो वाशेद्धेमन्ते चैव कोकिलः ।
वसेत्पुरे वा ग्रामे वा तदप्याशु विनश्यति ॥"

**पराशरः**—काकश्येनगृध्रोलूकादिभिरभीक्ष्णं निषेवणं नीडीकरणं वा पुरविनाशायेति ।

**वार्हस्पत्ये** "काकमूषिकमार्जारा पतङ्गाश्च महोरगाः ।
अतीव बहुशो दृष्ट्वा दुर्भिक्षाय भयाय च ॥"

**वराहः**—"सर्वे दुर्भिक्षकर्त्तारः स्वजातिपिशिताशनाः ।
सर्पमूषिकमार्जाराः पृथुरोमविवर्जिताः ॥"

**वार्हस्पत्ये**—"प्रासादध्वजशालासु द्वारप्राकारतोरणे ।
गृध्रवायसकङ्कानां नीडं दृष्ट्वा पुरं त्यजेत् ॥"

**अत्र शान्तिर्मत्स्यपुराणविष्णुधर्मोत्तरयोः**-

"मृगपक्षिविकारेषु कुर्याद्धोमं सदक्षिणम् ।
देवाः कपोता इति च जप्तव्यं पञ्चभिर्द्विजैः ॥

गावश्च देया विधिवद्द्विजेभ्यः सकाञ्चना वस्त्रयुगोत्तरीयाः ।
एवं कृते शान्तिमुपैति पापं मृगैर्द्विजैर्वा विनिवेदितं यत् ॥"

**मयूरचित्रे**—"प्रस्वरञ्चेच्छित्वा रौति श्वगोवाजिगजास्तथा ।
शान्तिस्तु षोडशी कार्या या सा दिव्यप्रचोदिता ॥"

तत्रैव—'सन्ध्याकाले यदा प्राप्ते रुदन्ति मृगपक्षिणः ।
वित्रस्यन्ति प्रधावन्ति तत्र विद्यान्महद्भयम् ॥
शान्तिः साधारणी तत्र कर्त्तव्या गर्गभाषिता ॥"

**तत्रैव**---प्राकारे नगरद्वारे राजद्वारे चतुष्पथे ।
भृङ्गाश्च वायसा यत्र निवसन्ति व्रजन्ति च ॥
दह्यते तत्पुरं क्षिप्रं परैश्चापि विलुप्यते ।
काककोकिलकङ्कानां गृध्रकौशिकयोस्तथा ।
आरण्यानाञ्च निलया प्राकारद्वारवेश्मसु ।
मरकङ्कलहञ्चैव राजामात्यबधं वदेत् ॥
नारदीशान्तिरत्रोक्ता सर्वोपद्रवनाशिनी ।
अश्वत्थसमिधो विद्वान् घृताक्तान् जुहुयाच्छतम् ॥
अष्टोत्तरं मरुन्मन्त्रैर्निवेद्यास्ताः सलोहिताः ।
ब्राह्मणान् भोजयेद्दध्ना हुतान्ते भूरिदक्षिणा ॥
आग्नेयी वाऽपि कर्त्तव्या याऽनग्निज्वलनोदिता ॥"

**वृद्धगर्गः**---"वियोनिषु यदाऽऽयान्ति मिश्रीभावं गता अपि ।
खरोष्ट्रहयमातङ्गा मनुष्याश्च भयाय तत् ॥"

**औशनसे**--"देशे वा यदि वा ग्रामे योनिव्यतिकरो भवेत् ।
तत्र सम्वत्सरादूर्ध्वं महदुत्पद्यते भयम् ॥
अजः शुनिमजा श्वा वा संसर्गं यत्र गच्छति ।
अभ्यन्तरेण तत्राब्दाद्राज्ञो मरणमादिशेत् ॥"

**वारहः**---"परयोनाभिगमनं भवति तिरश्चामसाधुधेनूनाम् ।
उक्षाणो वाऽन्योन्यं पिबति श्वा वा सुरभिपात्रम् ॥

मासत्रयेण विद्यात्तस्मिन् निःसंशयं पराभिगमनम् ।
तत्प्रतिघातायैतौ श्लोकौ गर्गेण निर्दिष्टौ ॥
त्यागो विवासनं दानं तत्तस्याशु शुभम्भवेत् ।
तर्पयेद्ब्राह्मणांश्चापि जपहोमांश्च कारयेत् ॥
स्थालीपाकेन धातारं पशुना च पुरोहितः ।
प्राजापत्येन मन्त्रेण जपेद्दद्यात्सुदक्षिणाम् ॥"

## इति नानामृगविहगाद्भुतम् ।

## अथ हस्त्यद्भुतम्

**विष्णुधर्मोत्तरे** – "ग्रामे व्रजति नागश्चेन्मैथुनं देशहा भवेत् ।
ग्राहं गृहीत्वा द्विरदः सग्राहः सलिलाशयात् ॥
उत्तारन् विजयाय स्यादग्राहो भयवर्द्धनः ॥"

**पराशरः** – "दन्तिनां श्रीपुष्टिकरमदप्रादुर्भावः प्रहर्षो विजयाय ॥"

**अथ मदफलम्** । तत्र राजपुत्रः—

"अप्राप्ते मदकाले च यदि माद्यति वारणः ।
उत्पातन्तद्विजानीयाद्भूपतेः मरणस्य वै ॥
न विद्यते मदः काले भवेच्चेद् वारणस्य च ।
उत्पातं तं विजानीयान्मदलिङ्गेन शास्त्रवित् ॥
धर्महीना वयोहीना धातुहीनाश्च वारणाः ।
अप्राप्तमदकालत्वादत्यर्थं निन्दिताः पुनः ॥
अतिस्थूला कृशाश्चापि श्रान्ताश्च व्याधितास्तथा ।
यत्र च्छिक्काः प्रभिद्यन्ते कटाभ्यां कोशतस्तथा ॥
शिरोभिस्यन्दतो रोगान् मूत्राभिस्यन्दतोऽपि वा ।
अथ चेद्युगपन्माद्येत् कटाभ्यां कोशतस्तथा ॥
विवर्णं गन्धहीनञ्च तदपि व्याधिलक्षणम् ।
मदं मन्दगुणैर्युक्तं यदा स्रवति पोतकः ॥

वर्णस्थं गन्धयुक्तञ्च हर्षेण च समन्वितम् ।
मण्डले तु तदा तस्मिन् महदौत्पातिकं भयम् ॥
गजग्रामेऽथवाऽरण्ये मातङ्गो यत्र माद्यति ।
यूथस्य नाशं जानीयाद्दाहं नागवनस्य च ॥
मृगाणां पक्षिणाञ्चैव ये चान्ये तत्र संश्रिताः ।
एतेनैवोपसर्गेण प्राप्नुवन्ति विनाशनम् ॥
वर्षे तु प्रथमे नागो ह्युपसर्गात्प्रभिद्यते ।
मदः सुरभिगन्धो वा दुर्गन्धो वाऽपि जायते ॥
तस्य राष्ट्रस्य नाशाय प्रादुर्भावो मदस्य हि ।
संदृष्टो नयतत्त्वज्ञैस्तस्मिन्नुत्पातदर्शने ॥
वर्षे द्वितीये मातङ्गः प्रभिन्ना यदि दृश्यते ।
ब्राह्मणास्तत्र पीडयन्ते शस्यं हास्यति काश्यपी ॥
नानाविधाश्च रोगाः स्युस्तत्पुरे तु सदा वदेत् ।
त्रिवर्षस्तु यदा मत्तो मातङ्गो यदि दृश्यते ॥
क्षत्रियाणान्तथा विद्यादव्यसनं समुपस्थितम् ।
प्रभेदो वारणस्याथ चतुर्वर्षस्य निन्दितः ॥
अमात्यास्तत्र हन्यन्ते म्रियते च पुरोहिताः ।
पञ्चवर्षस्य नागस्य भेदो निन्दितो भृशम् ॥
निर्दिशेच्छास्त्रवित्तत्र परपक्षभयं महत् ।
षडवर्षस्याथ नागस्य मदकालो न विद्यते ॥
यदि माद्यति चेन्नागः स एव म्रियते ध्रुवम् ।
देशे तु यस्मिन् दृश्येत सप्तवर्षो मदान्वितः ॥
व्याधिना मरणन्तत्र भूपालस्य विनिर्दिशेत् ।
महादोषप्रयुक्तञ्च अष्टवर्ष - प्रभेदनम् ॥
कोषो मन्त्री सहायश्च पुरञ्चापि विनश्यति ।
निन्दितन्तु मदं विद्यान्नववर्षस्य दन्तिनः ॥
सपत्नतो भयं घोरं शस्त्रसङ्ग्राममेव च ।
सुमहांस्तु भवेद्द्वेषो दशवर्षप्रभेदने ॥

सद्यस्तु मरणम्विद्यान्नृपतेः समुपस्थितम् ।
द्वितीयायान्दशायान्तु वारणो यदि माद्यति ॥
पञ्चवर्षाण्यनावृष्टि तस्मिन् देशे विनिर्दिशेत् ।
दिवा वा यदि वा रात्रौ प्रभिन्नो दृश्यते गजः ॥
निःश्रेयसं भूपगतं तत्क्षणे चैव हस्तिना ।
कारयेत्तत्र शान्तिञ्च ब्राह्मणांश्चैव तर्पयेत् ॥
उत्पातप्रतिघातार्थमिमं विधिमुपाचरेत् ।
प्रतिघातस्तु निर्दिष्टः प्रायश्चित्तस्य कारणात् ॥
त्रीण्यहानि पशून्राष्ट्रे तस्मिन् कर्म न कारयेत् ।
अशुभानां फलं कृत्स्नं राज्ञो राष्ट्रस्य निर्दिशेत ॥

**राजपुत्रः**—"हस्तिन्या भक्ष्यमाच्छिद्य स्वयं भक्षयते यदा ।
वारणस्तेन जानीयान्निमित्तेन पराभवम् ॥"

**वराहः**—"प्रवेशनं वारिणि वारणस्य प्रायेण नाशाय भवेन्नृपस्य ।
ग्राहं गृहीत्वोत्तरणं द्विपस्य तोयात्स्थलं वृद्धिकरं नृभर्तुः ॥"

**पीलुकाचार्यः**—"यत्र राष्ट्रे पुरे वाऽपि हस्तिनी प्रतिमाद्यते ।
तद्धि राज्यं सराष्ट्रञ्च सपुरञ्च विनश्यति ॥"

**विष्णुधर्मोत्तरे**-"प्रसूता नागवनिता मत्ता चान्त्याय भूपतेः ।"

**राजपुत्रः**--युद्धे राष्ट्रे वने वाऽपि हस्तिनी यत्र माद्यति ।
राजा विनश्यते तत्र कुलञ्चापि विनश्यति ॥
दशभ्योऽनन्तरं सा चेत् प्रभिन्ना म्रियते यदि ।
तदा नान्यद भवेत्पापं माद्यत्यात्मबधाय सा ।
मत्ता विधूय यन्तारं नर्दन्ती यत्र धावति ।
सराष्ट्रं शिविरन्तत्र परचक्रेण पीड्यते ॥
मत्ता मूत्रपुरीषाणि यदा संप्राश्य तिष्ठति ।
राजा विनश्यते तत्र कुलं चानु विनश्यति ॥

तदा पुरे च राष्ट्रे च भवेद्घोरं महद्भयम् ।
मत्ता लोलुप्यमाना चेच्छुष्कास्या क्षुधिता तथा ॥
धेनुका मद्यमाना च निर्हर्षा च प्रधावति ।
भवेत्तत्र च दुर्भिक्षं देशे दुर्वृष्टिरेव च ॥
परचक्रभयाद् भङ्गः श्रेष्ठाङ्गपतनं तथा ।
मत्तया भक्ष्यते युद्धे हस्तिन्या यदि वारणः ॥
महद्भयं भवेत्तत्र देशस्य नगरस्य च ।
संघायाभिपतेन्नागं मत्ता यत्र च धेनुका ॥
बलकोपो भवेत्तत्र मन्त्रिणां बध एव वा ।
लेण्डान् मूत्रं च मुञ्चन्ती निर्गच्छेद्यत्र धेनुका ॥
तदा विनाशं जानीयाद्धान्यस्य च धनस्य च ।
अस्मिन्नौत्पातिके शान्तिमिमां कुर्यान्नराधिपः ॥
उपोष्य समहामात्रः सामात्यः सपुरोहितः ।
ततोऽस्याः शोणितैरेव धेनुकां तां प्रवर्धयेत् ॥
हस्तिवत्कल्पितान्तान्तु विषाणाभ्यां च योजिताम् ।
नीराजयित्वा तां रात्रौ धेनुकां कृतकौतुकाम ॥
अथैनां हस्तिवन्नीत्वा शत्रुपक्षे विमोक्षयेत् ।
करोति पीडां तत्रापि शत्रोर्वनगताऽपि वा ॥
इत्येवमेनां कुर्वीत शत्रोर्वननिवासिनीम् ।
तां विसृज्य बलिं होमानुपहारांश्च कारयेत् ॥
अन्यैश्च पेशलैर्विप्रान् दक्षिणाभिश्च तर्पयेत् ।
अथवा पूर्ववत्कृत्वा शान्ति तप्तकटद्वयाम् ।
सुवर्णेन सुतप्तेन वनमेव प्रधावयेत्' ॥

पराशर.--"हस्तिनां हस्तेन स्कन्दविलेखनमाहारेषु प्रद्वेषः प्रकम्पनमुत्तमाङ्गानां पादैः पादप्रघर्षणं वेपथुर्मुखाक्षिमुण्डेभ्यो वा स्रवप्रपतनं निशि भैरवो निनादो विभिन्नकांस्यबृहणं वित्रस्तपरिधावनं मदप्रणाशः पांशुकलुषग्रासाभिषङ्गप्रकीर्णताऽप्रकीर्णानां प्रधावनमश्रुप्रवर्धनं प्रवेपनं प्रदत्तकवलप्रतिग्रहः शिरोऽवध्वननमार्त्तानुनादो बहिर्दन्तशकलावपतनं विषाणभङ्गः पराजयाय" ॥

अथ बृंहितफलम् । तत्र वराहः--

"सेनामध्ये तु यदा बृंहति शार्दूलवद्गजो दृष्टः ।
भवति स्वसैन्यविजयस्तदा तु संख्ये नरेन्द्रस्य ।।
कलहं सनादमधुरं कञ्चिच्चोत्क्षिप्तपुष्करस्तु यदा ।
बृंहति वारणनाथस्तदा जयं नरपतिर्लभते ।।
दशनविवर्त्तितहस्तस्तु रणगम्भीरशंखनादसमम् ।
बृंहति यदा तु हस्ती तत्रापि जयो भवेद् भर्तुः ।।
मुखविवरकपोलगतं करं यदाऽपहृत्य गजो दृष्टः ।
मधुरं गजहसितं तज्जयप्रदं भवति भूपानाम् ।।
त्रीन् वारान् क्रौञ्चरवं हंसरवं बृहितं यदा कुरुते ।
एतदपि नागहसितं जयप्रदं भवति भूपानाम् ।।
गर्जति कण्ठेन यदा घनो यथा वारणः प्रहृष्टमनाः ।
मुखरन्ध्रनिविष्टकरस्तदा जयो जायते भर्त्तुः ।।
उदरागृहीतसलिलं सशीत्करं बृंहितं यदा कुरुते ।
भवति तदा नरनाथस्य शत्रुनाशः सुखेनैव ।।
स्पृशति कराग्रेण यदा चरणतलं भ्रमरबृंहितं कुर्वन् ।
स्तम्भे चालस्य मुखं गमनं राज्ञस्तदा भवति ।।
शुष्कतृणकाष्ठकण्टकवल्मीकास्थिश्मशानदुष्टासु ।
पाषाणाङ्गाराशुचिभूमिषु पादस्थिताः करिणः ।।
बृंहन्ति हीनलक्षणमसकृद् भर्तुस्तदा जयो नास्ति ।
जयदाश्च शाद्वलानि दिवाकरस्योद्देशस्थिता नित्यम् ।।
शङ्काचालितनयनो वराहवद्घुरघुरं बृहन् ।
यदि नागो भवति भयन्तदा रणे नरपतेर्नूनम् ।।
भूतलविस्तृतहस्तो नदति यदा धरणिकम्पनादसमम् ।
नरपतिराष्ट्रविनाशो भवति तदा शत्रुसैन्यकृतः ।।
जयते विजये विद्विट् शान्तः पुरराष्ट्रपीडनं च तथा ।
मदमुदितकरभरवसदृशनिः स्वनं यदि करी कुरुते ।।
बलिभुग् निःस्वनसदृशं यदि बृंहति विनमिताननो हस्ती ।

म्रियते तदाऽस्य याता मासस्यान्ते चतुर्थस्य ॥
भूमौ चलितनिवेशितशिथिलकरो वृंहते यदा करुणम् ।
मीलितलोचनयुगलो भर्त्तुर्विनाशं तदा कुरुते ॥
सततं दूषितहृदयो रोगाणामागमं रिपुभयञ्च ।
खरपारावतरुतसमवृंहितमुखरं करी कुरुते ॥
कुक्कुटनादं वृंहित असकृत्सन्ध्याद्वये यदा हस्ती ।
हस्तिपसहितस्तु तदा स एव पञ्चत्वमुपयाति ॥

आघ्राताननविवरा वृंहन्ति यदा सुदुःसहं करिणः ।
सहसाऽभिघातजनितं तदा भयं भवति भूपानाम् ॥
चीत्कारं यदि कुरुते परुषं संग्रामकम्पितो हस्ती ।
धरणीतलन्यस्तकरस्तदा भयं जायते भर्त्तुः ॥
यातारं सैन्यपतिं क्रुद्धो भीत इव स्वनं कुरुते ।
वेगपरिवर्त्तितमुखः स नाशयेद् वारणः संख्यम् ॥
अशनिस्फूर्जिसदृशं द्विरदो यदि वृंहते रणारंभे ।
धरणीतलगतवदनस्तदा जयो नास्ति भूपस्य ॥
निःस्वसितदीनवदनो जम्बुकनादानुकारिकृतशब्दः ।
यो नागो रणसमये न तस्य भर्त्ता जयं लभते ॥
यः किङ्किणीकलकलसदृशं नादं करोति कुपितोऽपि ।
त्याज्योऽसौ नरपतिना सेनासन्तापकृद् भवति ॥
कृष्टतरुरुहो नादं वृंहति पर्यश्रुलोचनो हस्ती ।
पीलुपतियातृनाशं स्वदेहनाशं तदा कुरुते ॥
वामान्दोलितचरणो यदा करी वृंहते सनिःश्वासम् ॥
आलानगतः कुरुते तदा बधो यातृपीलुपयोः ॥

एवं कुर्वीत यदा प्रकृतिस्था वृंहितानि मातङ्गाः ।
औत्पातिकानि राज्ञस्तान्येव भवन्ति नान्यानि ॥
रुतकालोचितयवसान्नपानशयनादिभिः सुखिनः ।
विचरन्तो वृंहन्ते उत्पातकृतं रुतं तु विज्ञेयम् ॥
शान्तिं तदुपशमार्थं द्विजभोजनपूर्विकां तदा कुर्यात् ।

पायसमधुप्रधानं विप्रेभ्यो भोजनं देयम् ॥
सह देवी माञ्जिष्ठा लाक्षा विजया शतावरीपाठा ।
पुत्रञ्जीवारिष्टकसहिता मुस्ता हरिद्रा च ॥
द्रव्याण्येतानि सुचूर्णितानि सारस्वते जले कृत्वा ।
स्नपयेत् कुम्भशतेन हि मतङ्गजं भद्रके दिवसे ॥
स्नपितस्य ततः शीघ्रं प्रदक्षिणीकृतपिनाकिभवनस्य ।
औत्पातिकः पणश्यति दोषो नागस्य नरनाथस्य" ॥

अथ **गजदन्तभङ्गफलम्**। तत्र वृहद्यात्रायां वराहः—

दक्षिणे शुभमतीव शोभनं पापमेव च विरुद्धमन्यतः ।
याप्यता भवति तद्विपर्यये विस्तरोऽथ मुनिभिः प्रकीर्त्तितः ॥
मूलमध्यदशनाग्रसंस्थिता देवदैत्यमनुजाः क्रमात्ततः ।
स्फीतमध्यपरिपेलवं फलं शीघ्रमध्यचिरकालसंभवम् ॥
सौम्यलग्नतिथिभादिभिः फलं वर्धते शुभमतोऽन्यथा भवेत् ।
क्षीरमिष्टफलपुष्पपादपेष्वापगातटविघट्टनेन वा ॥
वाममध्यरदभङ्गखण्डनं शत्रुनाशकृदतोऽन्यथा परम्" ॥

**विष्णुधर्मोत्तरे**—"शुभे काले शुभे देशे निम्नगायाश्च रोधसि ।
शुभे द्रुमे वा भवति भूभर्त्तुर्विजयावहः ॥
दन्तभङ्गोऽशुभे देशे द्रुमे वा भयवर्धनः ।
क्रूरेष्वशुभलग्नेषु तथा रोगविशेषतः" ॥

**पराशरः**—"वहिर्दन्तशकलावपतनं पराजयाय । मूलात्पार्थिवस्य । मध्यतः कुमाराणाम् । अग्रतो नायकस्य । सेनापतेरुभयतः । वहुधा च राज्ञः सेनायां हस्त्यश्वानां बधाय" । वृहद्यात्रायां **वराहः**—

"दन्तभङ्गफलमत्र दक्षिणे भूपदेशवलविद्रवप्रदम् ।
वामतः सुतपुरोहिते भयं हन्ति साटविकदारनायकान् ॥
आदिशेदुभयभङ्गदर्शनात् पार्थिवस्य सकलं कुलक्षयम्" ॥

अथ दन्तवृद्धिफलम् । तत्र राजपुत्रः—

"मूलायामेषु यदा दन्तोऽनाहाद्वर्धेत दन्तिनः ।
यातुर्गजस्य राज्ञश्च तदा वृद्धिमथादिशेत् ॥
मध्ये वर्धेतानाहेन महामात्रविवृद्धये ।
वृद्धेऽग्रदन्ते सैन्यानां वृद्धिर्गजपदस्य च ॥
सर्वथा वर्धते दन्तो यदि नागस्य मूलतः ।
ससुतस्य सराष्ट्रस्य नृपस्यायुर्विवर्धयेत् ।
लक्ष्यते स्निग्धकालाभं विषाणन्तु सुवृष्टये ।
उन्नते दक्षिणे दन्ते राजा वर्धेत सर्वतः ॥
उन्नते वामदन्ते तु यातुर्वृद्धिमथादिशेत् ।
दन्तयोरुभयोरेवं फलमुक्तं विशेषतः" ॥

अथ दन्तकालिमाफलम् । तत्र राजपुत्रः

"मूले चाग्रे तु दन्तस्तु परिम्लानो यदा भवेत् ।
उत्पातं निर्दिशेत्तस्मिन् राष्ट्रपीडामुपस्थिताम् ॥
आमात्यांश्च कुमारांश्च मध्ये म्लाने भयं स्पृशेत् ।
सर्वम्लानगतो दन्तो दक्षिणो वाम एव च ॥
विनाशमादिशेद्राज्ञः सराष्ट्रस्य तदाऽचिरात् ।
दक्षिणस्त्वथ वामो वा दन्तो हि यदि म्लायते ॥
दक्षिणे पीड्यते राजा वामे याता विनश्यति ।
अनयोरुभयोरेवं नाशं राज्ञः समादिशेत् ॥
विषाणस्रवने तस्माद्वनं प्रस्थापयेन्नृपम् ।
एवमौत्पातिके तस्मिन् कृता शस्ता प्रतिक्रिया ॥
प्रज्वलेत्सहसा दन्तो दिवा वा यदि वा निशि ।
अत्र स्वराज्यान्नृपतिः कान्तरे वसतेऽचिरम् ॥
धूमायमाने दन्ते तु अग्निसंभ्रममादिशेत् ।
दन्ताग्रे हस्तिनो यस्य विषं मधु च दृश्यते ॥
विद्यान्नृपतिनाशाय बलस्य व्यसनाय च ।
अधस्तादवनते दन्ते दक्षिणस्य स्वभावतः ॥

कुलविच्छेदनं राज्ञः यातुर्दारार्थनाशनम् ।
वामे त्ववनते दन्ते यातुरेवाभिनिर्दिशेत् ॥
नाशं सपुत्रदारस्य सर्वस्वहरणन्तथा ।
निर्णये दक्षिणे दन्तो राज्ञोऽर्थानामसिद्धये' ॥

**अथ दन्तच्छेदे शुभाशुभलक्षणानि । तत्र वराहसंहितायाम्** --
"शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः" ।

**तथा**---"श्रीवृक्षवर्धमानच्छत्रध्वजचामरानुरूपेषु ।
छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि ॥
प्रहरणसदृशे सुजयो नन्द्यावर्त्ते प्रनष्टदेवाप्तिः ।
लोष्टे तु पूर्वलब्धस्य भवति देशस्य सम्प्राप्तिः ॥
स्त्रीरूपे धननाशो भृङ्गारेऽभ्युत्थिते सुतोत्पत्तिः ।
कुंभेन निधिप्राप्तिर्यात्रा विघ्नं च दण्डेन" ॥

**तथा**—"कृकलासकपिभुजङ्गै दुर्भिक्षव्याधयो रिपुवशित्वम् ।
गृध्रोलूकध्वांक्षश्येनाकारेषु जनमरकः ॥
पाशेऽथवा कबन्धे नृपमृत्युर्जनविपत्स्रुते रक्ते ।
कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं भवति" ॥

**राजपुत्रः**—"अत्र धान्यसमो गन्धो हरितालसमोऽपि वा ।
सुभिक्षं धान्यवृद्धिश्च सुवृष्टिश्च तदा भवेत् ॥
चन्दनागुरुधूपानां तुल्यो गन्धो भवेद्यदि ।
विजयं राष्ट्रवृद्धिञ्च भूमिलाभञ्च निर्दिशेत् ॥
माल्यगन्धेन जानीयादर्थसिद्धिमुपस्थिताम् ।
कुसुमोत्पलपद्मानां सुगन्धेषु शुभं वदेत् ॥
करीषसमगन्धेषु गवां वृद्धिमथादिशेत् ।
अनुरक्तेषु गन्धेषु शुभेषु शुभमादिशेत्" ॥

**तथा**—"यच्छेदे विस्फुलिङ्गो वा धूमो वा विप्लवोऽपि वा ।
दृश्यते कल्पमानस्य नृपतेरादिशेत् तदा ॥

सुवर्णं राष्ट्रनाशाय दाहव्याधिभयन्तथा ।
कल्पमानेषु दन्तेषु शीर्यते यत्र मेदिनी ।।
अस्मिन्नौत्पातिके राज्ञः शशभ्यो भयमादिशेत् ।
छेदेषु यदि दृश्येरन वानरा यदि वा मृगाः ।।
तदाऽऽदिशेद्राष्ट्रनाश व्याधिना च जनक्षयम् ।
सूर्यस्य दर्शनाच्छेदे जनमारीं विनिर्दिशेत् ।।
अशुभेषु शुभं विद्याच्छुभे शुभफलं भवेत्" ।।

**अथ दन्तपुष्पफलम्** । तत्र **पराशरः**—

"शुक्लपीतमाञ्जिष्ठलोहितनीलवर्णानां दन्तानां भङ्गे पुष्पाणां प्रदुर्भावो विजयाय । धूम्रश्यामरूक्षचित्रितरक्तवर्णानां दन्तानां भङ्गे तु पुष्पाणां प्रादुर्भावो विनाशायेति" ।

**अथ दन्तस्रावफलम्** । तत्र **पराशरः**--

सुरभिर्मनोज्ञो नागदन्तस्रावो विजयाय । दुर्गन्धवहलपूयशोणितस्रावो विषाणाभ्यां भयायेति" ।

**वराहः**—" ......... ... जनविपत् सुते रक्ते ।
क्रृष्णे श्यावे रूक्षे दुर्गन्धे चाशभं भवति ।।
गलनम्लानफलानि च दन्तस्य समानि भङ्गेन" ।।

अथ दन्तराजीफलम् । तत्र **राजपुत्रः** -

"शरशक्तिधनुश्चक्रशूलपट्टिशलक्षणाः ।
दन्ताग्रराजयो यस्य स नृपं वोढुमर्हति ।।
विषणानुगना राजी हस्तिन्यभ्यन्तरा भवेत् ।
राज्ञो वलं वर्धयते सर्वभूतहिताय सा ।।
अनुगच्छेद्यदा राजी दन्तस्योपरि या भवेत् ।
तदा नृपस्य जायेत कन्या पूजितलक्षणा ।
वहिःपार्श्वादधस्ताद्वा दृष्ट्वा राजीमथादिशेत् ।
महीपतेः शत्रुवृद्धिममात्यानां च संक्षयम् ।।

तिरश्चीना यदा राजी दन्तमेकं परिक्षिपेत् ।
ध्रुवन्तदा राष्ट्रनाशो विज्ञेयः पृथिवीगतेः ।।
राजी यदा तु दन्ते स्यात्समा दीर्घा समाहिता ।
तदा देशे ह्यनावृष्टि त्रीणि वर्षाणि निश्चयात् ।।"

**अथ पतनफलम् । तत्र राजपुत्रः---**

"उदक् शिराः श्वेतलोमा शुक्लो यदि ह्रिष्यते ।
वद्धो दक्षिणपक्षेण वृद्धिं तत्रापि निर्दिशेत ।।
गात्राणि हस्तं बालञ्च विप्रसार्य हरिः पतेत् ।
सव्येतरेण पक्षेण प्राक् शिरा म्रियते यदि ।।
अस्मिन् पक्षे प्रपतने पार्थिवस्यादिशेज्जयम् ।
सुवृष्टिञ्च सुभिक्षणञ्च शत्रूणाञ्च पराभवम् ।।
उदभ्रम्य पूर्वपक्षेण दक्षिणेण पतेद्यदि ।
अवाक्शिरा गजो भूत्वा राष्ट्रवृद्धिं तदादिशेत् ।।
अथवा स्निग्धमेघाभः स्नात्वा पीत्वा च वारणः ।
जलावगाहे म्रियते सुवृष्टिं तत्र निर्दिशेत् ।।
पश्चार्द्धेन त्रिभागेन निषीदति यदि द्विपः ।
सुभिक्षं तेन नागानामादिशेद् ग्रामवासिनाम् ।।
अनाहे म्रियते नित्य सुभिक्षमभिनिर्दिशेत् ।
स्तम्भे निवारितो नागः स्तम्भे चैव निषीदति ।।
तत्रैव त्यजति प्राणान विजयं तेन निर्दिशेत् ।
शाली प्रदक्षिणी कृत्य कुञ्जरो म्रियते यदि ।।
तदा समर्घतां वृष्टिं प्राप्नुयात्स नराधिपः ।
हस्त्यागारस्य च स्थाने द्वारस्याभिमुखस्य चेत् ।।
अन्यैश्च वाहनैश्चैव पार्थिवैः स तु वर्धते ।
पूर्वतः स्तम्भमाश्लिष्य स्वस्थाने यस्तु सीदति ।।
वसुधाभिमुखो हस्ती भूलाभं तेन निर्दिशेत् ।
तत्रैव शिरसा पूर्वं भूमिगं वा म्रियेत चेत् ।।

नृपस्य वर्धते सैन्यं धनं चैवास्य मन्त्रिणा।
नागयानमथागम्य वारणो म्रियते यदि ॥
करेणादाय सलिलं स्रवत्यक्षावुभावपि ।
दिशः सर्वाश्च वीक्ष्याथ तोयं पिवति चेद् गजः ॥
पीत्वा चोपरि मातङ्गः क्षिपेद्दक्षिणपश्चिमम्।
सुवृष्टिं तस्य देशस्य त्रीणि वर्षाणि निर्दिशेत् ॥
यदा महादन्तकरः समैः श्वेतैर्नखैः पुनः।
वर्ष्मणा चारुसर्वाङ्गः श्वेतरोमा हरिर्गजः ॥
रोगेण पीड्यमानस्तु पूर्वादिं यद्दिशं व्रजेत्।
विजिगीषुर्दिशन्तान्तु प्रार्थमानोऽभिवर्धते ॥
एवमेव हि विज्ञेयं ये स्युर्जनपदे गताः।
वर्णास्त्रयोऽत्र वर्द्धन्ते शूद्रपक्षो विनश्यति ॥
कृष्णपक्षे प्रतिहते वामपक्षेण चेत्पतत्।
कृष्णेऽत्र वर्द्धते वर्णत्रयाणां तु महद्भयम् ॥
शुक्ले दक्षिणपक्षेण कृष्ण वामेन वारणः।
म्रियते तत्र वक्ष्यामि फलावाप्तं शुभाशुभम् ॥
वामेन चेत्पतेच्छुक्ले कृष्णे दक्षिणपक्षतः।
हस्ती यदा तदा ब्रूयात् पतनं वा फलं ध्रुवम् ॥
कालो महाशरीरश्च निपतेद्यदि पावके।
शिरो दक्षिणतः कृत्वा वामेन वहुला गजाः ॥
गात्रापरं करं बालमुपसंगृह्य भीतवत्।
ऐतैर्निमित्तैर्नागस्य विद्याद्राज्ञः पराभवम् ॥
दन्तो नागस्य भ्रंशेत वामे निपततो भुवि।
तेनोत्पातेन नृपतेर्विद्याद् घोरं बलक्षयम् ॥
शिरसा चेन्निपतितो दक्षिणो भ्रंशते यदि।
उत्पातदर्शने तस्मिन् मन्त्रिव्यसनमादिशेत् ॥
विषाणं यदि भ्रंशेत मुखेन पततो भुवि।
निमित्तात्तस्य नागस्य विद्यात्पार्थिवनाशनम् ॥

स्वयं निषण्णो मातङ्गः प्राङ्मुखः प्रम्रियेत् चेत् ।
दस्यूनां बहुले पक्षे प्रकोपमभिनिर्दिशेत् ॥
म्रियते प्रतिसंरूध्य बाले यत्रापरं करम् ।
शिरो दक्षिणतः कृत्वा कालपक्षे यदा गजः ॥
पुनर्वामेन निपतेत्तेनोत्पातेन निर्दिशेत् ।
प्रकोपं विषयाणाञ्च तथा राज्ञोऽर्थनाशनम् ॥
वेगेनालनमाच्छाद्य स्थानान्निष्क्रम्य वारणः ।
उद्भ्राम्य वामेनालोक्य निपतेद्दक्षिणा शिरः ॥
स हि सव्येन पक्षेण धरण्यां यदि वारणः ।
अननोत्पातजातेन विद्याद्राष्ट्रस्य विद्रवम् ॥
यदा निर्गम्य नागस्तु धरण्यभिमुख पतेत् ।
वारणोऽनावृतस्थाने तदा विद्यान्महद् भयम् ॥
दन्ती स्थानाच्च निर्गम्य शालाभिन्नमुखो यदि ।
निपतेत्तेन नागानां ग्रामाणामादिशेद् भयम् ॥
स्नात्वा यदि च निर्वाणो न पीत्वा च जलं गजः ।
वामपक्षेण निपतेद् दुर्वृष्टिं तेन निर्दिशेत् ॥
यदाऽभिसारितो नागो म्रियमाणः पतेद् भुवि ।
तदा तु दुर्भिक्षभयं हस्तिनामभिनिर्दिशेत् ॥
दिवा मार्गे त्वभिमुखो मुखेन यदि चोत्पतेत् ।
तस्मिन् गजानां दुर्भिक्ष ब्रूयादुत्पातदर्शने ॥
अवाक् शिरश्चोर्ध्वपादो जीमूताभो मतङ्गजः ।
यदाऽग्नौ निपतेत्काले तदा राजा विनश्यति ॥
हरितः श्यामवर्णो वा पादैरूर्ध्वैरवाक् शिराः ।
वैश्वानरे यदि पतेद् भर्त्ता तस्य विपद्यते ॥
अपसव्यमथागम्य करिणी म्रियते यदि ।
अर्थसिद्धि तदा विद्याद्योक्तुस्तेन सुदारुणम् ॥
आलाने तु यदा स्थित्वा वामपक्षेण चेत्पतेत् ।
अनर्थन्तु विजानीयाद्राज्ञस्तत्र विनिर्दिशेत् ॥

 

म्रियते यदि मातङ्गः स्थित्वाऽऽलाने निकारितः।
यातुस्तु व्यसनं घोरं तेनोत्पातेन निर्दिशेत्॥
अथालानमविच्छिद्य यदि पश्चात्पतेद् गजः।
निर्दिशेत्तेन नागस्य व्यसनं परिकर्मणा॥
तथैवालानमाच्छिद्य शालायां म्रियते यदि।
मुखेन भूमिमालम्ब्य तदपि स्यादसिद्धये॥
अयनं गर्जितञ्चैव नागानां निर्दिशेत्तदा।
शिरो दक्षिणतः कृत्वा पूर्वपक्षात्पतेद्यदि॥
शालास्थो व्यसनन्तत्र निर्दिशेन्मन्त्रिसैन्ययोः।
भूमौ निपत्य दन्ताभ्यां यत्र विद्ध्वा म्रियेत् चेत्॥
महद्भयं भवेत्तत्र पार्थिवस्य गजस्य च।
अरालो मृदुकर्मा च महाशीर्षो महामदः॥
वेगेन गत्वा म्रियते वक्त्रं कृत्वा च सर्वतः।
अभाव शूद्रपक्षस्य तेनोत्पातेन निर्दिशेत्॥
समाहितं पूर्वतश्च यस्य दक्षिणचारिणः।
मद्याभो दक्षिणदन्तः स्वे च भागे प्रतिष्ठितः॥
भ्रमन् दक्षिणपक्षेण शुक्लपक्षेण चेत्पतेत्।
अभावं ब्राह्मणानाञ्च विद्यान्नाशन्तथैव च॥
श्यामापादैः शुभैश्चैव श्यामास्या शुभमस्तका।
रक्ताक्षी सूक्ष्मकेशी च सुविभक्तमृदुस्तनी॥
वामपक्षेण निपतेद्विस्तीर्य दक्षिणाशिरः।
नृपस्यान्तःपुरस्त्रीणां विनाशमभिनिर्दिशेत्॥"

**विष्णुधर्मोत्तरे**—"अतः परं प्रवक्ष्यामि कर्म नैमित्तकं तव।
गजानां मरके प्राप्ते तथा व्याधौ च दारुणे॥
दन्तच्छेदाशुभोत्पत्तौ तथा राजद्विपे मृते।
दन्तभङ्गे तथा जाते वामपक्षमृते गजे।
कृष्णपक्षे मृते नागे वह्निपृष्ठमृते तथा॥
दारुणासु च वेलासु दक्षिणायनमूर्घनि॥

हस्तिन्यां वा मदे जाते प्रकृतेश्च विपर्यये।
पूर्वोत्तरे च दिग्भागे नगरान्मुखभेऽशुभे॥
आसन्नतोयजस्निग्धद्रुमे वीतवनस्पतौ।
प्रागुदक्प्रवणेनात्र स्थण्डिलं परिकल्पयेत्॥
कमलं विन्यसेत्तत्र कर्णिकाद्योतकेशरम।
शीर्षञ्च विन्यसेत्तत्र केशरेषु तु विन्यसेत्॥
ब्रह्माणं भास्करं पृथ्वीं तथा स्कन्दञ्च भार्गव।
दलेषु तत्र दिक्पालान् विन्यसेत्सह कुञ्जरैः॥
पत्रान्तरेषु चास्त्राणि यथावदनुपूर्वशः।
वज्रं तु विन्यसेद्विद्वान् शक्रपत्रादनन्तरम्॥
ततश्चक्रं ततो दण्डं तोमरं तदनन्तरम्।
ततो वै दिव्यसेनाङ्कं तोमरं सशरं धनुः॥
ततो गदां महाभाग ततः शूलञ्च विन्यसेत्।
तदा तस्यान्तरदलं वृत्तया रेखया भजेत्॥
आदित्यैः सह नासत्यौ ततः पूर्वेण विन्यसेत्।
वसुरग्निदिशो भागे वायव्ये मरुतस्तथा॥
विश्वेदेवास्तथा रक्षो रक्षोदिशि च विन्यसेत्।
कृत्वैवं देवतान्यासं वृत्तया रेखया भजेत्॥
वाह्येन विन्यसेत्तेषु शूलाकारानृषिद्विजान्।
पूर्वेण वाथ याम्येन तथा देवीं सरस्वतीम्॥
नदीं पश्चिमतः शैलांस्तथोदग्भृगुसत्तम।
महाभूतानि देवेषु कोशहस्तगतानि तु।
शंखं चक्रं गदां पद्ममैशान्यादिषु विन्यसेत्।
सप्तहस्तेषु दण्डेषु पताकाश्च तथा न्यसेत्॥
सितरक्तासिताः पीतां यथावदनुपूर्वशः।
दिक्षु तोरणविन्यासं तोरणानां वनेषु च॥
क्षीरिवृक्षद्रुमदलैः कुसुमैः सफलैर्भवेत्।
तोरणस्य प्रमाणन्तु यद्दृष्टं परिकीर्त्तितम्॥

उच्छ्राये च तथाऽऽयामे ज्ञेयं दामसमं द्वयम् ।
तार्क्ष्यं तालञ्च मकरं मत्स्यं चैवानुपूर्वशः ॥
तोरणोपरि मध्ये तु दानवान् विनिवेशयेत् ।
वर्णत्रैलक्षणोपेतान् विन्यस्य देवतागणान् ॥
सायुधान् सपताकांश्च शातपत्रं शतक्रतुम् ।
दिग्गजानान्तु विन्यासमौषधीभ्यः प्रकल्पयेत् ॥
ऐरावतं दले शाक्रे लाजाभिर्विन्यसेद् बुधः ।
नागपुष्पमयं पद्ममाग्नेये विन्यसेद्दले ॥
पुष्पदन्तस्तथा याम्ये नागः कार्यः प्रियंगुभिः ।
तथा च नैर्ऋते पत्रे नागपुष्पेन वा गजः ॥
वायव्ये चाञ्जनं पत्रे माषैः कुर्याद्विचक्षणः ।
नीलश्च पत्रे कौवेरे राजपुष्पमयो भवेत् ॥
ऐशाने कुमुदं कुर्यान्नागेन्द्रं सिततण्डुलैः ।
ततश्च शमनं कार्यं सोपवासेन भार्गव ॥
सर्वासां पूजनं कुर्याद्देवतानां पृथक्पृथक् ।
अस्त्राणां कुञ्जराणाञ्च पद्मादीनां तथैव च ॥
तोरणेषु निविष्टानां तार्क्ष्यादीनां पृथक्पृथक् ।
सागराणाञ्च कुम्भेषु गन्धमाल्यानुलेपतः ॥
धूपैर्दीपैर्नमस्कारैर्वासोभिश्च पृथक्पृथक् ।
भूरिणा च तथान्नेन पानैश्च विविधैस्तथा ॥
कुल्माषपरिमाणाभ्यां पूज्यास्ते कृशरेण तु ।
मोदकोल्लेपिकाभक्ष्यैः सितान्नगुडपाचितैः ॥
माषोदनपयःक्षौद्रदधिदुग्धैश्च शक्तुभिः ।
एवं सम्पूजनं कृत्वा शंखवाद्यरवैर्युतम् ॥
गीतेन च महाभाग सुभगानर्त्तनेन च ।
ततस्तु पूजनं कृत्वा पूजास्थानात्तथाऽप्युदक् ॥
आहितादिकुलादग्नि वेदीमुल्लिख्य वेदयेत् ।
देवागारात् स्वयं पाकादग्नि कृत्वा पृथक्पृथक् ॥
चतुर्थन्तु तदाम्नायं प्रणवाद्येन भार्गव ।

शतमाज्येन जुहुयान्महाव्याहृतिभिस्तथा ॥
ततस्तु पूजितान्नागान् वह्निदेवगणान् द्विजान् ।
कृत्वा प्रदक्षिणं सर्वे वव्रेयुः स्वगृहाणि ते ॥
उपदिष्टे तथा काले सर्वं तत्र निवेदितम् ।
हेमनिष्कञ्च निष्कञ्च धेनुर्धेनुं भुवं तथा ॥
अश्वमश्वं तथाऽन्येषां शक्तितो दक्षिणा भवेत् ।
सम्भवे तु सहस्रेण कथञ्चिदपि कस्यचित् ॥
तथा च हस्तिभिषजः पूज्या वित्तेन भूरिणा ।
पूजनीयौ तथैवात्र साम्बत्सरपुरोहितौ ॥
हस्तिन्याम्मदमत्तायां शान्तिकेऽस्मिन् द्विजोत्तम ।
राष्ट्रान्निर्वास्य तां कुर्याच्छान्तिमेनां तथा नृप ॥
शान्तिकर्म गजेन्द्रानां सर्वबाधाविनाशनम् ॥
धन्यं यशस्यमायुष्यं राज्ञा च विजयावहम् " ॥

अत्रानुक्तविशेषशान्तिषु हस्त्यद्भुतेषु साबित्रीमन्त्रकरणकलक्षहोमादिका प्रभूतकनकान्नगोमहीदानादिका शान्तिमृगपक्षिविकारविहिता शान्तिर्वा औत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्येति ।

इति हस्त्यद्भुतम् ।

## अथाश्वाद्भुतम्

**विष्णुधर्मोत्तरे**—"आरोहणं तथाऽन्येन सर्पयानस्य वाजिनः ।
जलोपवेशनं नेष्टं भूमौ च परिवर्त्तनम् ॥
विपत्कल्पन्तुरङ्गश्रुस्वेदो वाऽप्यनिमित्ततः ।
यवसोदकयोर्द्वेषस्त्वकस्माच्च न शस्यते ॥
दन्तभङ्गावपतने तनुयानावशीर्णता ।
बन्धनाद्रुधिरोत्पत्तिर्वेपनं च न शस्यते ॥
क्रीडन् काकैः कपोतैर्वा सारिकाभिस्तुरङ्गमः ।
आत्मनः स्वामिनो वापि तदा मरणवेदकः ॥

दुर्मना ध्यानशीलश्च रक्तनेत्रो भयावहः।
जिह्वया लेढि वदनमात्मनस्तु यदा हयः ॥
निर्निमित्तं पतति वा तदा स्याद्रिपुवृद्धये।
वामपादेन च तथा दिलिखंश्च वसुन्धराम् ॥
स्वपंस्तु वामपार्श्वेण दिवा वा न शुभप्रदः।
प्रवेपमाना ह्रेषन्तो निःश्वसन्तस्तथा मुहुः ॥
शकृन्मूत्रं विमुञ्चन्तो वेदयन्ति महद्भयम्।
उत्तिष्ठन्तो निषीदन्तः सन्ध्ययोर्दीनमानसाः ॥
त्रस्ताः श्वा तश्च रूष्टाश्च ह्रेषमाणा भयावहः" ॥

बृहद्यात्रायां वराहः—

"आरोहणमन्यवाजिनां पर्याणादियुतस्य वाजिनः।
उपवाह्य तुरङ्गमस्य वा कल्पस्यैव विपन्न शोभनाः ॥
प्रद्वेषो यवसाम्भसां प्रपतनं स्वेदो निमिताद्विना
कम्पो वा वदनाच्च रक्तस्रवणं धूमस्य वा संभवः।
अस्त्वप्नश्च विरोधिनां निशि दिवा निद्रालसध्यानता
सादोऽधोमुखता विचेष्टितमिदं नेष्टं स्मृतं वाजिनाम्" ॥
वामैश्च पादैरभिताडयन्तो महीं प्रवासाय भवन्ति भर्तुः ॥
अतीव ह्रेषन्ति किरन्ति वालान् निद्रारता वा प्रवदन्ति यात्राम्।
रोमत्यजो दीनखरस्वरश्च पांशून् ग्रसन्तश्च भयाय दृष्टाः" ॥

**पराशरः** "हयाणां प्रह्रेषणं क्रीडननिषण्णतारोहापकर्षणस्तम्भनं चरणैरन्योन्यप्रोथस्पर्शनं ͜याय" ॥

**विष्णुधर्मोत्तरे**— "दक्षिणेन यदा भूमौ विकिरन् जयवर्द्धनः।
गात्रौ दक्षिणपार्श्वेण प्रस्वपंश्च नरोत्तम" ॥

बृहद्यात्रायां वराहः—

"भक्ष्यपानखलिनाभिनन्दिनः पत्युरौपयिकनन्दिनोऽथ वा।
सव्यपार्श्वगतदृष्टयोऽथ वा वाञ्छितार्थफलदास्तुरङ्गमाः ॥

समुद्गवद्दक्षिणपार्श्वशायिनः पादं समुद्धृत्य च दक्षिणं स्थिताः ।
जयाय शेषेष्वपि वाहनेष्विदं फलं यथासंभवमादिशेद् बुधः ॥"

पराशरः--"प्रध्यानमश्रुपातः पानान्नविद्वेषादुद्भ्रंशो वा यानापध्वंसोऽकस्माद्वेपथुः । स्नेहो गात्रस्य धूपनं स्वगात्रभक्षणं खुरैर्वा स्फोटनं पूर्वपादावलेहनमवसादनमनिमित्तासृक्प्रसृतिर्मुखपादयोर्नमनमक्षिचलनमालस्थं पर्याणादियुक्तस्यान्यवाहनेनारोहणप्रणाशो विकृतिर्विरोधः । छायाविकृतिरश्रीकताऽतिलोमविसरणं पराजयाय ॥"

अथ पुच्छफलम् । तत्र शालिहोत्रः---

"दक्षिणेन तु मार्गेण वालान् प्रकिरते यदा ।
बलिनोभ्यन्तराद्धीमान् वाह्यानां च पराभवम् ॥
वामार्धेन प्रकीर्यन्ते बाला अश्वस्य नित्यशः ।
प्रवासं तत्र जानीयाच्छीघ्रं चैव निवर्त्तनम् ॥
सर्वतः प्रकिरन्तश्च यदा बालानभीक्ष्णशः ।
चिरं प्रवासं जानीयात्कार्यस्य साधनं तथा ॥
चक्रवद्यत्र वालानि प्रकिरन्ति तुरङ्गमाः ।
अन्यत्र बलीयांसो मध्यानाञ्च पराजयः ॥
बालार्द्धं दक्षिणं यत्र वाह्यतां विप्रकीर्यते ।
हयानाञ्च जयं प्राहुर्बहुश्रियं च निर्दिशेत् ॥
अथ बालाः प्रकीर्यन्ते स्नानमात्रस्य वाजिनः ।
अश्वारोहाः सहायैस्तु अध्वानन्तु प्रपेदिरे ॥
उभे पार्श्वे प्रकीर्यन्ते बालास्तु विमुखीकृताः ।
महाभयं भवेत्तत्र शब्दे बिटबिटायिते ॥
आकिरन्ति भयादश्वा बालान स्निग्धमृदुप्रभान् ।
चक्रवच्च प्रदृश्यन्ते निःशब्दाश्च भवन्ति च ॥
विजयं चार्थसिद्धिञ्च निर्दिशन्ति तुरङ्गमाः ।
प्रहृष्टानां प्रकिरणं घर्मार्त्तानां च वाजिनाम् ॥
स्नातानां वा प्रकीर्यन्ते न ते ग्राह्या निमित्ततः ॥"

अथ ह्लेषितफलम् । तत्र पराशरः---

"स्निग्धगम्भीरह्लेषणं विजयाय ।।" बृहद्यात्रायां वराह---

क्रौञ्चवद्रिपुबधाय ह्लेषितं ग्रीवया त्वचलया च सोन्मुखम् ।
स्निग्धमुच्चमनुनादिहृष्टवद् ग्रासरुद्धवदनैश्च वाजिभिः ।।
पूर्णपात्रदधिविप्रदेवतागन्धपुष्पफलकाञ्चनानि वा ।
द्रव्यमिष्टमथवा परं भवेद्ध्रेषतां यदि समीपतो जयः ।।
सन्ध्यासु दीप्तामवलोकयन्तो ह्लेषन्ति चेद्युद्धपराजयाय ।।"

विष्णुधर्मोत्तरे--"ह्लेषतस्तुरगान् ज्ञात्वा घोषो वा वाजिनो भवेत् ।
तदा विजयमाख्याति स्वामिनो ध्रुवमेव तु ।।"

शालिहोत्रः--ऐन्द्र्यां हयस्याभिरुतान्नृपस्य च महद्भयम् ।
आग्नेयां वाऽप्यग्निभयं याम्यायां मरणं ध्रुवम् ।।
क्षुधाभयं च नैर्ऋत्यां वारुणे जलसंप्लवम् ।
वायव्यां व्याधिनाशञ्च सौम्ये च शत्रुरोधनम् ।।
ऐशान्यां तुरगरुताद द्विजातीनां महद्भयम् ।
खे रवेत्तत्तदेवाशु विद्यात्तत्र महद्भयम् ।।
रात्रौ रुतं भवेत्स्वस्मिन्छत्रावह्नि रुतं भवेत् ।
एवं शुभाशुभं ज्ञेयं समे समफलं मतम ।।
दृष्ट्वा त्वशुभमुत्पातं शान्तिं तत्र च कारयेत् ।
शान्त्युक्तामुपसर्गेषु वाहानां हितमिच्छता ।।
उभौ कालौ तु विधिवद् ब्राह्मणान्मधुपायसैः ।
पुष्कलां दक्षिणां वापि हयागारेषु वाऽऽचरेत् ।।
पुष्पलाजाक्षतैर्वापि गोपुरेषु च कारयेत् ।।"

अथ ज्वलितफलम् । तत्र पराशरः—

"मुखादग्निविस्फुलिङ्गोल्काज्वालापतनमुत्तमाङ्गज्वलनं नाशाय । पृष्ठपुच्छगुदज्वलनं गात्रस्य धूपनं पश्चाज्ज्वलनं सेनापराजयाय च ।"

विष्णुधर्मोत्तरे—"नेत्रनासापुटप्रोथस्कन्धसासनमूर्धसु ।
हयानां ज्वलनं शस्तमतोऽन्यत्र न शस्यते ॥"

विष्णुगुप्तः—"नासापुटाश्रुपातप्रोथशिरोलोचनेषु रजनीषु ।
विजयाय प्रज्वलनं ताम्रसितहरितशबलानाम् ॥"

बृहद्यात्रायां वराहः—

"अन्तः पुरं नाशमुपैति मेढ्रे कोशक्षयं स्यादुदरे प्रदीप्ते ।
पायौ च पुच्छे च पराजयः स्याद्वक्त्रोत्तमाङ्गज्वलने जयश्च ॥
स्कन्धासनासज्वलनं जयाय बन्धाय पादज्वलनं प्रदिष्टम् ।
ललाटवक्षोऽक्षिभुजेषु धूमः पराभवाय ज्वलनं जयाय ॥"

शालिहोत्रः—"तन्मुखं सर्पिषाऽभ्यक्तं प्रोक्षयेद्गौरसर्षपैः ।
अहतक्षौमसवीतमाल्यदामविभूषितम् ॥
प्रदद्य दैवतेभ्यो वा द्विजेभ्यश्चैवातं तथा ।
सप्तरात्रात्परं वाऽपि निष्क्रमेणोपपादयेत् ॥
सुवर्णगोप्रदानेन भूमिदानेन वा पुनः ।
देवेभ्यः प्रणमेन्नित्यं प्रातरुत्थाय मानवः ॥
भोजयेद् ब्राह्मणांश्चैव दध्ना सर्पिःफलोदनैः ।
सायं प्रातस्तर्पयित्वा ब्राह्मणान् मधुपायसैः ॥
पुण्याहं वाचयेच्चैव स्वस्त्यायनकसंयुतम् ।
व्रतोपवासैः सन्तिष्ठेद्यमेन नियमेन च ॥
वायव्यैर्वारुणैश्चैव तथा चेन्द्रपुरोगमैः ।
आश्विनैर्वैष्णवै रौद्रैः सावित्रैश्च पुरोहितः ॥
सदा दुर्गामराणाञ्च सावित्राणां तथा बुधः ।
एवं कुर्वीत शालायां सप्तरात्रमतन्द्रितः ॥"

अथ पुष्पितफलम् । तत्र वराहः-

"अथ पुष्पं श्वेतं स्निग्धमवर्णशस्य प्रशस्तम । श्वेतस्य कृष्णं पीतं रक्तञ्च । यस्याश्वस्य ललाटे श्वेतकलेन्दुतारकासंस्थानं वा पुष्पं स्यात्त-

दनुसारि विजयं विद्यात्। आप्रोथात्कमलं यस्य हिरण्यपुण्ड्रकं धाम स्त्रीविजयावहम् । यस्य वा स्निग्धैः सर्वाङ्गस्थैः सन्नाहानुकारं तु विभ॰ वराष्ट्रविजयावहम् ।"

शालिहोत्रः—"विवर्णा विन्दवो वर्णाः प्रभवन्ति शरीरजाः ।
अग्रदन्तादिभागेषु तत्स्थानं पुष्पसंज्ञितम् ।।
वर्णेऽसवर्णं पुष्पन्तु सूक्ष्मत्वादुपलभ्यते ।
शुभाशुभव्यञ्जकानि संस्थानस्थानवर्णतः ।।
अग्रदन्तेषु यस्य स्युरुत्तरेष्वधरेषु च ।
स्निग्धश्वेतानि पुष्पाणि खुरेष्वपि तथैव च ।।
अर्थागमं तेषु विद्यादह्नां सप्ततिभिर्बुधैः ।
अपि वा सप्तभिः पक्षैर्मासैः सप्तभिरेव च ।।
स्थानैरेषु विवृद्धिः स्यात्केशेष्वर्थागमं विदुः ।
निगाले भोजनार्थाय अर्थलाभञ्च निर्दिशेत् ।।
दन्तात्पुत्रांश्च लभते कण्ठे पुष्पाणि यस्य तु ।
ग्रीवोपस्कन्धक्रोडेषु पुष्पितेषु धनागमः ।।
अंशयोः पुत्रलाभाय वाह्वोर्मित्रविवृद्धये ।
जानुजंघाकलाकूर्चैः पुष्पितैस्तु सुरप्रियः ।।
कक्षयोः कुक्षिपार्श्वेषु पृष्ठे वा चार्थसिद्धये ।
सेनापत्यं तु नाभ्यंशे विजानीयाद्विचक्षणः ।।
मुष्कयोः पुष्पिते वाहे पुत्रोत्पत्तिं विनिर्दिशेत् ।
सर्वाङ्गपुष्पितो वाजी श्वेतैः सर्वार्थसाधकः ।।
हितो धनकरो नित्यं पुत्रपौत्रविवर्धनः ।
श्वेतैः श्वेतानि वाऽत्यर्थं स्निग्धानि वसनानि च ।।
अर्थलाभाय पुष्पाणि यस्य तत्सदृशानि चेत् ।
पुत्रपौत्रविवृद्धिश्च अर्थवृद्धिस्तथैव च ।।
वर्धते वाऽश्वकोशेन चक्रं वास्य विवर्द्धते ।
ससत्त्वानां प्रशस्तानामायुधानान्तथैव च ।।
छत्रध्वजपताकानां वेदितव्याकृतीनि च ।
नन्द्यावर्त्तसवर्णानि तथा शंखाकृतीनि च ।।

पुष्पमाङ्गल्यरूपाणि वर्णाढ्यर्णोत्तमानि च ।
स्निग्धानि समरूपाणि प्राङ्मुखानि च वाजिनाम् ॥
तान्याहुर्धनलाभाय विपरीतस्तु गर्हितः ॥"

अथ दन्तादिवैकृत्यफलम् । तत्र पराशरः—

"अधिकैर्दन्तैः स्वामिनो धनक्षयं विद्यात् । उपर्यधिकैः स्वामिनां संग्रामे बधं ह्रस्वैः करालैर्विसृमरैर्भर्तु रनर्थं विनाशञ्च । दन्तास्तु चत्वारिंशत् । अतोऽधिकं न्यूनं वा भर्तृ नाशाय । योऽजातवृषणः कर्णौ यस्य करांगुष्ठपर्व-प्रमाणौ कर्णमूलयोः शङ्के स्यातां सोऽश्वो राष्ट्राद्बहिः कार्यः ।"

वराहः--मुहुर्मुहुर्मूत्रशकृत्करोति न ताडयमानोऽप्यनुलोमयायी ।
अकार्यभीतोऽश्रुविलोचनश्च शिवं न भर्त्तुस्तुरगोऽभिधत्ते ॥"

अत्रानुक्तविशेषशान्तिषु हयोत्पातेषु सावित्री मन्त्रकरणकलक्षहोमप्रभूत-कनकान्नगोमहीदानादिका वा शान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्येति ।

इत्यश्वाद्भुतम् ।

## अथ खञ्जनाद्भुतम्

तत्र पराशरः-अथ शाङ्गकस्तद्यथा-समन्तभद्रःप्रभद्रोऽनुभद्र आकाशभद्रश्चेति भेदाः । यस्योरः शिरोग्रीवा अञ्जनाभास्तं समन्तभद्रं विद्यात् । शिर उरसी यस्य कृष्णे तं प्रभद्रम्, कण्ठोरसी यस्य तमनुभद्रम् । कण्ठगता रेखा यस्य कृष्णा तमाकाशभद्रमिति ।" वसन्तराजः—

समन्तभद्रश्च ततः प्रभद्रस्ततोऽनुभद्राम्बरभद्रसंज्ञौ ।
एषाञ्चतुर्णामपि खञ्जनानामाचक्ष्महे संप्रति लक्षणानि ॥
यस्य कन्धरोरः शिरसां समन्ताद्विभर्त्ति कार्ष्ण्यं स समन्तभद्रः ।
कृष्णेन युक्तः शिरसोरसा च भवेत्प्रभद्रः सितकन्धरास्यः ॥
कण्ठोरसी यस्य हि खञ्जनस्य कृष्णे भवेतां स मतोऽनुभद्रः ।
कृष्णा भवेत्कण्ठगतैक रेखा यस्य त्वसावम्बरभद्रनामा ॥
मध्यादमीषां शुभकार्यसिद्ध्यै यो यो भवेत्पूर्वतरः स मुख्यः ॥"

एते च वर्णक्रमेण शुभाशुभसूचकाः। तथाहि पराशरः- "अगस्त्योदयादि शरद्यते दृष्ट्वा क्रमाद् ब्राह्मणादीनां शुभाशुभमावेदयन्ति। सर्वेषां वा समन्त-भद्र इति।"

वराह.—"स्थूलोऽभ्युन्नतकण्ठः कृष्णगलो भद्रकारको भद्रः।
आकण्ठमुखात्कृष्णः सम्पूर्णः पूरयत्याशाम् ॥
कृष्णो गलेऽस्य विन्दुः शितकरटान्तः स रिक्तकृद्रिक्तः।
पीतो गोपीत इति क्लेशकरः खञ्जनो दृष्टः ॥"

वसन्तराजः—"स्याद्यो हरिद्रारससन्निकाशो गोमूत्रनामा स तु खञ्जरीटः।
निरीक्षितः प्राग्दिवसे प्रभूत दुःख द्भवं शंसति यावदब्दम्॥"

वटकणिकायां—"खञ्जनकः पूर्वाह्णे श्रीमतिदेशे शुचौ बृहत्कायः।
कृष्णगलश्चेति शुभः पीतोऽतोऽतियोऽतिपीतश्च॥"

विष्णुधर्मोत्तरे—"प्रथमं शार्ङ्गके दृष्टे शुभेदेशे शुभं वदेत्।
संवत्सरं मनुष्यस्य अशुभं वा शुभं वदेत्॥"

अथ शुभस्थानमाह वसन्तराजः—

"नद्यादितीरव्रजगोपुरीषगोपुच्छदूर्वानृपमन्दिरेषु।
अट्टालजम्बालफलप्रवालक्षीरद्रुमोपस्कृततोरणेषु॥
एतेषु चाद्येऽहनि खञ्जरीटो दृष्टोऽतिहृष्टः सहसोपविष्टः।
भक्ष्यन्नपानप्रियगोऽश्ववस्त्रलाभाय रोगोपशमाय विष्टः॥
गजाश्वशालोपवनान्तरेषु प्रासादहर्म्याग्रसिताम्बरेषु।
दध्यादिभाण्डेष्वथ लिप्तभूमौ सुवर्णराजान्तिकचामरेषु॥
सच्छायहृद्याम्बरपुष्पपत्रफलावनम्रेषु शुभद्रुमेषु।
येनोपविष्टः प्रथमेह्नि दृष्टस्तस्य श्रियं खञ्जनको ददाति॥"

नद्यादितीरेषु आदिशब्देन तडागादयोऽत्र बोद्धव्याः।

वराहः—"अथ मधुरसुरभिफलकुसुमहतेषु सलिलाशयेषु पुण्येषु ।
करितुरगभुजगमूर्ध्नि प्रासादोद्यानहर्म्येषु ॥
गोगोष्ठसत्समागमयज्ञोत्सवपार्थिवद्विजसमीपेषु ।
हस्तितुरङ्गमशालाच्छत्रध्वजचामराद्येषु ॥
हेमसमीपसिताम्बरकमलोत्पलपूजितोपलिप्तेषु ।
दधिपात्रधान्यकूटेषु च श्रियं खञ्जनः कुरुते ॥
पङ्के स्वाद्वन्नाप्तिर्गोरससम्पच्च गोमयोपगते ।
शाद्वलगे वस्त्राप्तिः— — — — ... — —॥"

वसन्तराजः—"स्याद्गोमये गोरसलाभहेतुर्वस्त्रस्य लाभाय च शाद्वलादौ ।
खादन् पिबन् भोजनपानलब्धो लाभाय गेहस्य च नावि दृष्टः ॥"

पराशरः—पिबत्यम्भः पानागमं गोमध्ये गृहलाभः परसन्दर्शितेऽन्यस्त्रीसमागमं फलविलिखिते क्षेत्रे पाणिग्रहणमिति ।

वसन्तराजः—"संदर्शितेऽन्येन च खञ्जरीटे स्यादन्यनार्या सह सङ्गलाभः ।
विवाहलाभो हलखातभूमौ धान्यस्य राशावपि धान्यलाभः ॥"

वराहः—"मृतविभिन्नविकलरोगितः स्वतनुसमानफलप्रदः खगः ।
धनकृदभिबिलीयमानको वियति च बन्धुसमागमप्रदः ॥
पृष्ठे त्वजाविकानां प्रियसङ्गममावहत्याशु ॥"

वसन्तराजः—भूमौ धनाय रववान्नभस्थः स्याद्बन्धसङ्गाय तथान्तरिक्षे" । भवे सुभीते प्रियसङ्गमाय इत्यर्थः । अग्निशालायां मैथुने निधिलाभ इति ।

पराशरः—गोऽश्वाजाविकमहिषपृष्ठे पृथ्वीधनधान्यागमः । महिषीपृष्ठव्यतिरिक्तान्यावयवेष्वशोभनं तत्फलमशुभदेशे प्रशस्तम् । वृषभककुदि सेनापत्य गजशिरस्यातपत्रे च राज्यागममिति ।

वसन्तराजः-"तुरङ्गमातङ्गमहोरगेषु सरोजगोच्छत्रबृषेषु येन ।
पूर्वे च दृष्टोऽहनि खञ्जरीटो निःसंशयं तस्य भवेन्नृपत्वम्" ॥

सर्पशिरसि विशेषो विष्णुधर्मोत्तरे-

"साङ्गकं तु नरो दृष्ट्वा भुजङ्गमशिरोगतम् ।
अवश्यं तदवाप्नोति यत्किञ्चिन्मनसेप्सितम्" ॥

कृष्णसर्पशिरसि विशेषमाह **पराशरः**—कृष्णभुजङ्गमस्तकारूढो महदविकलं वसुधाधिपत्यमिति । **वसन्तराजः**--

"क्षेत्रे ग्रामो ग्रामकत्वे पुरी स्यात्पुर्यां सत्यां मण्डलं मण्डले च ।
सर्वाऽप्युर्वीत्येवमत्रातिमात्रो यो लाभस्तं राज्यमित्यालपन्ति ॥
एवं प्रकारेषु मनोरमेषु स्थानान्तरेष्वेषु फलान्तराणि ।
इच्छानुरूपाणि ददात्यवश्यं पूर्वत्र दृष्टोऽहनि खञ्जरीटः" ॥

**वराहः**-"सूर्योदये प्रशस्तो नेष्टफलः खञ्जनोऽस्तमयेऽतीव ।
नृपतिरपि शुभं शुभप्रदेशे खगमवलोक्य महीतले विदध्यात् ॥
सुरभिकुसुमधूपयुक्तमर्घं शुभमभिनन्दितमेवमेति वृद्धिम्" ॥

**वसन्तराजः**-दृष्ट्वोदितेऽगस्त्यमुनौ सुदेशे सुवेषितं खञ्जनकं विदध्यात् ।
मन्त्रेण पूजां शिरसा प्रणामं तत्सूचितस्येष्ट फलस्य सिद्ध्यै ॥

**मन्त्रः**—त्वं योगयुक्तो मुनिपुत्रकस्त्वमदृश्यतामेषि शिखोद्गमेन ।
विलोक्यसे प्रावृषि निर्गतायां त्वं खञ्जनाश्चर्य नमो नमस्ते ॥

**अथाशुभस्थानानि** । तत्र

**पराशरः**- शुष्ककाष्ठपलालदग्धास्थिभस्मतृणतुषाङ्गारभग्नगृहयूपशङ्कुशून्यकुम्भकण्टकिवल्लीशकटस्तम्भप्राकारशिखरपाषाणसिकतास्वप्रकृष्टं दृष्ट्वा व्याधिकलहानर्थागमान्विद्यात् । तथा मृते मरणम्, बद्धे बन्धनम्, अशुचौ व्याधिम् , खरकरभपृष्ठे मरणं प्रवासो वा , युध्यमाने कलहम्, श्मशाने वा दृष्ट्वा विद्यादिति ।

**वसन्तराजः**- वल्लीदृषत्कण्टकिशुष्कवृक्षदग्धास्थिशूलाकृतभाजनेषु ।
शून्यालये लोमसु गेहकोणे यूपे पलाले सिकतासु काष्ठे ॥
एषु प्रदेशेष्वथ वा पुरेषु यदीदृशेषूपहतेषु दृष्टः ।
कुमूर्तिचेष्टः स तदा करोति न्यक्कारभीरू कलहाद्यनर्थान्" ॥

**वराहः** - "गृहपटलेऽर्थभ्रंशो वध्रे बन्धोऽशुचौ भवति रोगः ।
पक्षौ धुन्वन्नशुभः शकटस्थे देशविभ्रंशः' ॥

**वसन्तराजः** -"वध्रीवरत्रास्वशुचौ च रोगो गृहच्छदे स्याद्द्रविणस्य नाशः ।
निरीक्ष्यते वा निशि देशभङ्गो निद्राभिभूते च भवन्ति रोगाः" ॥

**वराहः** - महिषोष्ट्रगर्दभास्थिश्मशानगृहकोणशर्करादृस्थः ।
प्राकारभस्मकेशेषु चाशुभो मरणरुग्भयदः" ॥

**वसन्तराजः** -"श्वानोष्ट्रबालेयकपृष्ठपातस्थितः स्वपत्युर्विदधातिमृत्युम् ।
पक्षौविधुन्वन् दिवसस्य चान्ते बृद्धो मृतो वा न शुभः कदाचित्" ॥

**पराशरः**- "येन येन प्रकारेण नरः पश्यति शार्ङ्कम् ।
सद्यः प्रकारो विज्ञेयो यथा तस्य तथात्मनि" ॥

**विष्णुधर्मोत्तरे**-"यथाविधं नरः पश्येत् शार्ङ्कं प्रथमेऽहनि ।
आत्मनश्च तथा तेन ज्ञातव्यं वत्सरं फलम्" ॥

**वराहः**- आवर्षात्प्रथमे दर्शने फलं प्रतिदिनन्तु दिनशेषे ।
दिक्स्थानमूर्त्तिलग्नर्क्षशान्तिदीप्तादिभिश्चोह्यम् " ॥

अथाशुभखञ्जनदर्शनशान्तिस्तत्र वराहः-

अशुभमपि विलोक्य खञ्जनं द्विजगुरुसाधुसुरार्चने रतः ।
न नृपतिरशुभं समाप्नुयान्न यदि दिनानि च सप्तमांसभुक्" ॥

**वसन्तराज**.-"कुचेष्टितोन्यः कुवयाः कुवेषो निरीक्ष्यते खञ्जनकः कदाचित् ।
दृष्ट्वा विशेषात्परितोषयेत्तं घाताय तत्सूचितदुष्कृतस्य ॥
मांसं न भुञ्जीत शयीत भूमौ स्त्रियं न सेवेत दिनानि सप्त ।
स्नायाज्जपेत्संजुहुयाच्च खञ्जनं समर्चयेत्पिष्टकृतं शुभाय" ॥

**पराशरः**- सर्वौषधैस्सर्वगन्धैः सर्वबीजैश्च मानवः ।
अहोरात्रोषितः स्नातो रत्नधारेण वारिणा ॥
देवद्विजातिपूजाभिराशीर्भिर्गतकिल्बषः ।
खञ्जरीटकृताद्दोषान्मुच्यते महतोऽप्यसौ" ।

**अयमर्थः** - उपोषितश्च स्वेष्टदेवतां यथाशक्ति घृतेन तदीयमन्त्रेण सम्पूज्य हुत्वा तन्मन्त्रञ्च जत्वा पिष्टकमयं खञ्जनं कृत्वा पूर्वोक्ततन्मन्त्रेण सम्पूज्य विसर्ज्यसर्वौषधिसर्वगन्धसर्वबीजसर्वरत्नमिश्रितजलेन स्नात्वा द्विजगुरुंश्च भोजनदक्षिणाभिश्च सन्तोष्यशिषं गृहीत्वा सप्तदिनानि स्त्रीमांसपरित्यागी भूमौ शुद्धवस्त्रादौ स्वपेत् । सावित्र्या वा होमादि । सर्वबीजादि परिभाषा नाडीनक्षत्रप्रकरणे लिखिता । एतदशक्तौ गोहिरण्यदानादि स्वस्त्यनादि सामान्या शान्तिः कर्त्तव्या । **वसन्तराजः**-

"पूर्वोक्तमेतच्छकुनं समस्तं यात्रादिकालेष्वपि तुल्यमाहुः ।
खञ्जनस्य परिकीर्त्तितं शुभं दर्शनं भवति मङ्गलप्रदम् ।।
यात्यसौ यदि पुनः प्रदक्षिणं तत्करोति कथितस्य वाञ्छितम्।"

**वसन्तराजः**-"प्रत्यक्षमाश्चर्यमिदं विहाय सर्वो जनः पश्यति खञ्जनस्य ।
अङ्गारखण्डः किल भूमिभागे तस्मिन्भवेद्यत्र करोति विष्ठाम् ।।
यत्रावनौ मैथुनमभ्युपैति खञ्जो भवेत्तत्र महानिधानम् ।।"

**काश्यपः**--मैथुनं कुरुते यत्र तत्राऽधो निधिमादिशेत् ।
भक्तन्तु छर्दते यत्र तत्राधः काचमादिशेत् ।।

**वराहः**-"तस्मिन्निधिर्भवति मैथुनमेति यस्मिन्
तच्छर्द्दयति तत्र तलेऽस्ति काचः ।
अङ्गारमप्युपादिशन्ति पुरीषणेऽस्य
तत्कौतुकापनयनाय खनेद्धरित्रीम् ।।"

शान्तादिदिशिलक्षणं तत्रत्यखञ्जनफलञ्चाह **वसन्तराजः**--

"दग्धादिगुक्ता दिननाथमुक्ता विवस्वदाप्ता भवति प्रदीप्ता ।
सा धूमिता यां सविताभ्युपैति शेषा दिगन्ताः किल पञ्चशान्ताः ।।
दग्धादिगैशी ज्वलितादिगैन्द्री धूमान्विता चानलदिक् प्रभाते ।
इत्येवमेवं प्रहराष्टकेषु भुंक्ते दिशोऽष्टौ सविता क्रमेण ।।

दग्धेषु दग्धं ज्वलिते ज्वलं वा फलं ज्वलिष्यत्यथ धूमितेषु ।
दिशाविभागेषु विभज्य जातः कार्यो युतानां शशिने सदैव ॥"

तेन शान्तादिदिशि साधुस्थाने सदृक्षे तद्दर्शनं शुभमित्यर्थः ।

इति खञ्जनाद्भुतम् ।

## अथ पिपीलिकापतङ्गादिमक्षिकामशकलूताभ्रमरभेकाद्भुतम्

**वसन्तराजः**—"स्थूलास्तथा याः कपिलाः कदाचिदगोचरं यान्ति घृतेण्डिकाख्याः ।
विज्ञेन तासां शकुनं गवेष्यं पिपीलिकानामिह नापरासाम् ॥
अत्यर्थपूर्णेऽञ्जनकुङ्कुमाभ्यां ग्राह्यं गृहे नेष्टमथापराणाम् ।
स्तोकस्थितावस्करनीरदेशे पिपीलिकानां शकुनं गवेष्यम् ॥
सुवर्णरत्नधनमध्यतो यदा सम्भवन्ति सुकृतप्रचोदिताः ।
स्वर्णरत्नमणिबृद्धिहेतवस्तद्भवन्ति कपिलाः पिपीलिकाः ॥
तोयपूर्णकलशाजिरान्तगा भक्तपूर्णपिठराश्च निर्गताः ।
निर्दिशन्ति कपिलाः पिपीलिका द्रव्यबृद्धिमचिरेण भूयसीम् ।
आरनालघटमूलगाः शुभं धान्यवृद्धिमपि धान्यमध्यगाः ।
सूचयन्ति च महानसोद्गता गेहदाहमचिराद् घृतेण्डिकाः ॥
यदि प्रविश्याज्यघटे घृतेण्ड्यस्तिष्ठत्यहोरात्रकृताधिवासाः ।
स्वल्पैरहोभिः कृतसन्निपाता मुष्णन्ति चौरा भवनन्तदानीम् ।
तुल्या निदाघेन भवन्ति वर्षा विनिर्गतास्वम्बुघटस्य मूलात् ।
धान्यस्य मध्यात्पुनरुद्गतासु धान्यार्घपातो वनकीटिकासु ॥"

**धान्यार्घपातो**—धान्यस्य महार्घता । वर्षानिदाघतुल्या भवति—अत्यनावृष्टिर्भवतीत्यर्थः । **पुनस्तत्रैव**—

स्वल्पाश्रयाः स्वल्पवतो घृतेण्ड्यो मृत्युं रुजं वा जनयन्ति दीर्घाम् ।
उत्पत्तयेऽनर्थपरं परा याः स्युर्देहलीदेशविलोक्यमानाः ॥
बह्व्यो गृहस्योपरि निस्सरन्ति रक्ताः पिपील्यो यदि सर्वमर्थम् ।
हरन्ति चौरा मरणं भयं वा तज्जायतेऽवश्यमहोभिरल्पैः ॥

केदाररथ्यानृपदेवगेहचैत्यद्रुमद्यूतसमान्तरेषु ।
दृष्टा घृतेण्ड्यः खलु चत्वरादौ देशस्य भङ्गं जनयन्त्यवश्यम् ॥
विनिर्गता प्राग्गृहगर्भभूमेः कुर्वन्ति शून्यं भवनं घृतेण्ड्यः ।
अग्नेर्विभागे स्वजनागमाय भवन्ति वृद्ध्यै दिशि दक्षिणस्याम् ॥
पयोधरो वर्षति यातुधान्यां योषिदनाप्तिर्दिशि पश्चिमायाम् ।
विहाय गेहं गृहिणी प्रयाति विनिर्गताभिर्दिशि मारुतस्य ॥
कुर्वन्ति ताः सम्पदमुत्तरस्यां देशस्यभङ्गं ककुभीशवत्याम् ।
ब्रह्मप्रदेशे दिनसप्तकेन लाभं पृथिव्या उपयोगसिद्धम् ॥"

**भीष्मपर्वणि** कुरुक्षयनिमित्तम्—

"अरुणोदये प्रदृश्यन्ते शतशः शलभव्रजाः ॥"

**पराशरः**—"अथेन्द्रादिदिक्पतङ्गावरोधने राजापनय—बलप्रकोपरोगपरचक्रागमोपबधशस्यक्षयरोगगोगजबधमादिशेत् ।"

**मयूरचित्रे**—ग्रामे पिपीलिका यत्र नगरेषु पुरेषु च ।
अतिमात्रं प्रदृश्यन्ते तत्राप्युत्सादनम्भवेत् ॥
उड्डिका मक्षिका दंशाः शलभा मशका अपि ॥
भयरोगकरं प्राहुर्द्रव्यनाशं रिपोर्भयम् ।
अनग्निज्वलनप्रोक्ता तत्राग्नेयी द्वितीयका ।
शान्तिरन्याऽथवा कार्या नारदोक्ता पुरोधसा ॥
औदुम्बरीणां समिधा सहस्रं जुहुयाच्छुचिः ।
अष्टोत्तरमथाग्नेयैर्मन्त्रैः समधुसर्पिषा ॥
दासीदाससमायुक्तं गृहन्दद्याद् द्विजाय च ।
कृष्णा धेनुस्तिलप्रस्थो दातव्यो हितमिच्छता ॥

अथवा प्रभूत कानकान्नदानादिका शान्तिः कर्त्तव्या । **वसन्तराजः**—

"अश्वादिलाभं जघनोरुभागे कण्ठे च भोज्याभरणादिलाभः ।
मुखे तु लक्ष्मीः शिरसि त्वभीष्टमारोहणं मर्कटिका करोति ॥

पुंसां समारोहति यद्यदङ्गं शुभार्थिनी मर्कटिका सदैव ।
फलानि तेषामुपभोगभुञ्जि भवन्त्यवश्यं सुमनोहराणि ॥
श्रूयेत वामे यदि मञ्जुगुञ्जन् दृश्येत वा वामदिशं प्रसर्पन् ।
आस्वादयन् वा कुसुमं प्रशस्त भृङ्गस्तदास्यात्तु महान् प्रमोदः॥"

पराशरः—"भेका अतिपीताभा सुभिक्षाय । अनिदन्ते वर्षाय । स एवानावृष्टिभयं ब्रूयाद्बहुशीर्षादिदर्शने ।"

अत्रानुक्तविशेषशान्तिषु पिपीलिकाद्यद्भुतेषु फलगुरुलाघवानुसारेण सावित्रीमन्त्रकरणकलक्षहोमकनकान्नदानादिका शान्तिः कर्त्तव्या ।

इति पिपीलिकाद्यद्भुतम् ।

अथ गृहगोधिकाद्भुतम्

अत्र वसन्तराजः--

"कुड्यमत्स्य इति याऽभिधीयते पल्लिकेति गृहगोधिकेति च ।
कालदिक्क्रमवशेन निश्चितं तत्र शकुनमुदीर्यतेऽधुना ॥
समागमात्सङ्गममाह पल्ली युद्धेन युद्धं विरहं वियोगात् ।
यच्छत्यवश्यं सुरतप्रसक्ता पुंसां वरस्त्रीबहुकेलिलाभम् ॥
सूर्योदये पूर्वदिशि ब्रुवाणा पल्लीभयं जल्पति भूमिपालात् ।
हुताशभीतिं च विहारदेशे मध्यन्दिने दूतमुखेन वार्त्ताम् ॥
धनागमः स्यादपराह्णकाले दिनावसाने तु फलं तदेव ।
आहारकाले विहितस्वरायां पुर्य्यां भवेदागमनं नृपस्य ॥
निधानलाभं दिनपूर्वयामे द्वितीययामेऽभिमतार्थसिद्धिः ।
युवत्यवाप्तिः प्रहरे तृतीये तुर्येऽर्थहानिर्विरुतेन पल्याः ॥
आद्ये दिनस्य प्रहरेऽह्निभागे प्रमीतवार्त्ता प्रहरे द्वितीये ।
इष्टार्थलाभो गृहगोधिकाया रुतेन लाभो वसुनोऽपराह्णे ॥
सुखन्दिनान्ते विरुतेन पल्या आहारकालेऽभिमतार्थलाभः ।
स्याद्वह्निभीतिः प्रहरे द्वितीये यामे तृतीये द्रविणस्य लाभः ॥

चतुर्थयामे दिशि पावकस्य कृतस्वरः किञ्चिदपूर्वरूपम् ।
नैमित्तिकानामिह कुड्यमत्स्यः कुतूहलं दर्शयति क्षणेन ॥
प्रभातकाले दिशि दक्षिणस्यां कार्यं शुभं स्याद्विरुतेन पल्याः ।
बन्ध्वागमः स्यात्प्रहरे दिनस्य मध्यन्दिने पुण्यसमागमः स्यात् ॥
योषाऽपराह्णे समुपैति काऽपि दिनावसाने परदारसङ्गः ।
आहारकाले सुचिरङ्गतस्य स्यात्क्षेमवार्त्ता प्रियबान्धवस्य ॥
यामे द्वितीये स्वजनैर्विरोधं तृतीययामे द्रविणस्य लाभः ।
कृतस्वरो जल्पति कुड्यमत्स्यो यामे चतुर्थे कलहं महान्तम् ॥
पल्ली दिनादौ दिशि राक्षसानां कृतस्वरा शंसति कार्यसिद्धिम् ।
विप्रागमं प्राक्तनयामभागे दूतागमं चाऽपि दिनस्य मध्ये ॥
रक्षां तृतीये प्रहरे दिनस्य दिनावसाने च विशेषवार्ता ।
प्रस्वापकाले कलहं रटन्ती यामे च पान्थागमनं ब्रवीति ॥
द्वितीययामे रुधिरप्रपातो मृत्युस्तृतीये प्रहरे निशाया ।
व्याधिश्चतुर्थप्रहरे निशायाः कृतस्वरायां गृहगोधिकायाम् ॥
प्रभातकाले ककुभि प्रतीच्यामाचार्यवर्यः समुपैति पूर्णम् ।
शान्ति दिनस्य प्रहरद्वितीये पल्लीरुतैर्मध्यदिनेऽर्थहानिः ॥
आयाति रौद्रः पुरुषोऽपराह्णे कुमारिकाऽभ्येति विकासकामा ।
भुक्तिक्रियायां नृपतेः प्रसादः पल्लीरुते वह्निभयं प्रदोषे ॥
यामे द्वितीये पृथिवीशवार्त्ताः निधानलाभः प्रहरे तृतीये ।
स्यात्कुड्यमत्स्ये रटति प्रतीच्यां निशावसाने वपुषोऽवसानम् ।
स्याच्चौरवार्त्ता दिशि मारुतस्य रुतैः प्रभाते गृहगोधिकायाः ।
अभ्येति मृत्युः प्रहरे प्रवृत्ते मध्यन्दिने भूपतिरभ्युपैति ॥
विद्वान् समभ्येत्यपराह्णकाले विद्यात्परं दूतमुपैति सायम् ।
वृद्धिः प्रदोषे प्रहरे द्वितीये सिद्ध्यत्यभीष्टं रटितेन पल्याः ॥
यामे तृतीये नियतं निशायाः शुभावहा काप्युपयाति वार्त्ता ।
निशावसानेऽभिमतार्थलाभः स्यात्कुड्यमत्स्यारटितेन पुंसाम् ॥
दिश्युत्तरस्यामुदिते दिनेशे पल्ली रटन्ती द्रविणागमाय ।
मित्रागमाय प्रथमे च यामे हुताशभीत्यै दिवसस्य मध्ये ॥

अर्थोऽपराह्णेऽभिमतोऽभ्युपैति प्रियो जनोऽभ्येति च वासरान्ते ।
निशामुखे शिष्टसमागमः स्याद्यामे कलिः स्याद्विरुतेन पल्याः ॥
निधानलाभः प्रहरे द्वितीये स्याच्चौरभीतिः प्रहरे तृतीये ।
निशावसानेऽपि च भाषमाणे स्यात्कुड्यमत्स्ये विपुला समृद्धिः ॥
प्रार्तदिगीशाननिषेवितायाः पल्लीरुतैः सिद्ध्यति चिन्तितोऽर्थः ।
दिनार्द्धयामे स्वजनोऽभ्युपैति वृद्धिर्भवेद्वासरमध्यभागे ॥
रक्षाऽपराह्णेऽस्तमयेऽभ्युपैति कन्यार्थलाभोऽभ्यवहारकाले ।
वृद्धिस्तथाद्ये प्रहरे निशायाः कन्यागमः स्यात्प्रहरे द्वितीये ॥
भयं तृतीये प्रहरे निशान्ते रौद्रं भवत्यारटितेन पल्याः ॥
ब्रह्मप्रदेशेऽभ्युदिते दिनेशे नरेशवार्त्ताश्रवणं वदन्ति ॥
ब्रह्मप्रदेशेऽह्नि पूर्वयामे स्याद्भूतवार्त्ता करुणाय पल्याः ।
दिनस्य मध्ये कलहाय नादः स्यादर्थलाभाय तथाऽपराह्णे ॥
विप्रागमायाभ्यवहारकाले प्रनष्टलाभाय च पूर्वयामे ।
मध्ये चमूपस्य रणाय रात्रेरुल्काप्रपाताय तृतीययामे ॥
ब्रह्मप्रदेशे प्रहरे चतुर्थे शुभाय शब्दो गृहगोधिकायाः ।
शुभावहा शान्तदिशि प्रशान्ता दीप्ता प्रदीप्ते शुभदा न पल्ली" ॥

अत्रानुक्तविशेषशान्तिषु गृहगोधिकाद्भूतेषु गोप्रदानादिका सामान्या शान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्येति ।

इति गृहगोधिकाद्भुतम् ।

## अथ वृषमहिषाद्यद्भुतम्

गर्गः —"शिवाय स्वामिनो रात्रौ बलीवर्दो नदन् भवेत्
उत्सृष्टवृषभो राज्ञो विजयं सम्प्रयच्छति" ॥

पराशरः - बलीवर्दोऽभ्रतश्च योऽनिमित्ततो वित्रस्तः प्रशब्दन्नावेदयति महद्भयम् । दक्षिणेन यदा भूर्यन्नहृष्टरूपमुत्क्राम्य जघनचरणान् धूनयत्यर्थम् । अन्यदेशाक्रामणं भिन्नवृतिस्तद्वसुभृतः ।

मयूरचित्रे-"मुह्यन्ति वृषभा यत्र निरुद्धा गृह एव च ।

माद्यं वाऽपि भवेद्गेहे धनहानिश्च जायते ।।
हव्यमष्टोत्तरन्तत्र त्र्यम्बकेनाम्बुपत्रकम् ।
सहस्रं दक्षिणा गौस्तु ब्राह्मणाय शुभन्ततः" ।।

**वसन्तराजः**--"युद्धाय नाशाय च तुल्यकाले पार्श्वद्वयस्थौ महिषौ भवताम्" यात्रापरमेतत् ।

**औशनसे**-"यस्य राज्ञो जनपदे नित्यमेव गवां क्षयः ।
भयन्तत्र विजानीयादचिरात् समुपस्थितम्" ।।

**नारदः** - "रुधिरं प्रसवेद्यत्र दुह्यमानासु धेनुषु ।
प्रभुश्च म्रियते तत्र धनहानिर्न संशयः ।।
दधिमधुघृताक्तायाः पालाश्याः समिधोऽयुतम्" ।

**मयूरचित्रे**-' धेन्वाः संदुह्यमानायाः कृमयः संभवन्ति चेत् ।
ऐन्द्रीं शान्तिं ततः कुर्यात्सहस्रं जुहुयादथ ।।
त्रातारम्भण्डलमिति मन्त्रेणाष्टोत्तरं शुचि ।
चरुकर्माशनं चास्य ब्राह्मणांस्तर्पयेत्ततः ।।
पायसैर्मधु-संयुक्तैर्दधि-क्षीर-गुडोदनैः ।
महोत्पातोपशान्त्यर्थं हुतान्ते बहुदक्षिणाः" ।।

**गर्गः** - "धेनुर्धेनुं पिबेद्यत्र ह्यनड्वाननुडुहस्तथा ।
स्वयमेवाथ पिबते धेनुः स्वाङ्गमथापि वा ।।
प्राप्तेषु त्रिषु मासेषु परचक्रभयं वदेत्" ।।

**गार्गीये** - "तथा वृषोऽतिबलवान् शृङ्गाभ्यामुत्किरेन्महीम् ।
नर्दते च तथा गौर्वा स्वामिनो बधमादिशेत् ।।

**मयूरचित्रे**- 'स्त्रीगवी नर्दते यत्र मृत्युः षण्मासतो भवेत् ।
जातवेदसमन्त्रेण जुहुयादयुतं शुचिः ।।
अपामार्गस्य समिधो होतव्या गौश्च दक्षिणा" ।।

**नारदः** - "स्त्रीगवी नर्दते यत्र दोषं तत्र विनिर्दिशेत् ।

कुलोत्सादो भवेत्तत्र धनहानिश्च जायते ।।
धान्यानामयुतन्तत्र घृताक्तानां समारभेत् ।
श्रीश्च ते इति मन्त्रेण धेनुन्दद्याच्च दक्षिणाम् ।।
एवं निर्वर्तिते होमे ततः सम्पद्यते शुभम्" ।।

**विष्णुधर्मोत्तरे**-भूमिं पादैश्च निघ्नन्त्यो दीना भीता अकारणम् ।
अन्योन्यं लग्नपुच्छाश्च गावो भयकरा मताः ।।
अभक्ष्यं भक्षयन्त्यश्च गावो दन्तांस्तथास्वकान् ।
त्यक्तस्नेहाश्च वत्सेषु गर्भक्षयकरा मताः ।।

गर्भक्षयश्च-स्वामिगृहे ।

**तत्रैव** - "भयाय स्वामिनो ज्ञेयमनिमित्तं रुतङ्गवाम् ।
निशि चौरभयाय स्यात् विकृतिर्मृत्यवे तथा ।।
आर्द्राङ्ग्यो हृष्टरोमाश्च प्रविशन्त्यस्तथा गृहम् ।
सिंहलग्नमृगा वापि विज्ञेयाः स्वामिवृद्धये ।।
महिष्यादिषु चाप्येतत् सर्वं वाच्यं विजानता" ।।

**वसन्तराजः**-' हम्भारवो वा समभीष्टसिद्ध्यै गवां तथा स्युर्निशि हुंकृतानि ।
गावो निशीथे सरवा भयाय जयाय राज्ञो दिवसे रटन्त्यः ।।
भृशं विरुद्धा यदि मक्षिकाभिस्तदाऽऽशुवृष्टिं सरमात्मजैर्वा ।
हम्भारवोन्मिश्रितहुंकृता या वत्सोत्सुका हर्षपरीतचित्ताः ।।
ज्ञेयाः सुरभ्यः शुभदाः सदैव गोभिः समानाः शकुने महिष्यः ।
अजा निशीथे यदि रौति तेन सर्वाणि गेहे लभते सुखानि" ।।

**वराहः**-"गावो दीनाः पार्थिवस्याशिवाय पादैर्भूमिं कुट्टयन्त्यश्च रोगान् ।
मृत्युं कुर्वन्त्यश्रुपूर्णायताक्ष्यः पत्युर्भीतास्तस्करानारुवन्त्यः ।।
आगच्छन्त्यो वेश्म हम्भारवेण संसेवन्त्यो गोष्ठवृद्ध्यै गवां गाः ।
आर्द्राङ्ग्यो वा हृष्टरोमाः प्रहृष्टा धन्या गावः स्युर्महिष्योऽपि चैवम्" ।।

**पराशरः**-"धेनुकानामनिमित्तामुत्क्रामः प्रकृत्यारोग्यम्" ।

अत्रानुक्तविशेषशान्तिषु वृषाद्यद्भुतेषु सावित्रीमन्त्रकरणकलक्षहोमादिका कनकान्नगोदानादिका वा सामान्या शान्तिः फलगुरुलाघवमवगम्य कर्त्तव्येति ।

इति वृषमहिषाद्यद्भुतम् ।

## अथ विडालाद्यद्भुतम्

**वसन्तराजः**-"शस्तो रुदन्नामिषपूर्णवक्त्रो रक्ताननो नादकृतः प्रशस्तः ।
नानाप्रकारैर्विरुतैः समेतो निन्द्यो विडालः खलु युद्ध्यमानः" ॥

**यात्रापरमेतत्** ।

**पराशरः**—"अथ विडालो दीप्तायामेकस्वरो व्याहरन् शस्त्रकोपं भयञ्च करोति । दीप्तायां भयमेवाशु । मुक्तः कान्तारे तु स्त्रीजनक्षयाय । खरोऽनुप्रधावन् ग्राममध्ये घोरस्वरो भयाय । उच्चैर्नदन् भैरवं नर्दत्यकस्माच्छ्रेष्ठभयायेति"।

अत्रानुक्तविशेषशान्तिषु कनकान्नगोदानादिका शान्तिरव्यगन्तव्येति ।

इति विडालाद्भुतम् ।

## अथ शृगालाद्भुतम्

तत्र **वसन्तराजः**—

"हुवाहुवेति प्रथमं तत्रश्च टाटेति दीर्घः सुतरां रवो यः ।
स्याज्जम्बुकानां स्वनतां प्रशान्तस्तदन्यशब्दः कथितः प्रदीप्तः ॥
शृगालशब्दो भवने निशायामुच्चाटनार्थं दिशि पश्चिमायाम् ।
प्राच्यां भयायोत्तरतः शिवाय याम्ये विभागे भयनाशनाय ॥
अनर्थहेतुर्गतिशब्दहीनः सदा शृगालः खलु दृष्टमात्रः ।
शस्तोऽह्निवामा गतिरस्य शब्दो वामे निनादो निशिजो वहूनाम् ।
विहाय वामां दिशमन्यदिक्षु शब्दायमाना न शुभाः शृगालाः ।
गत्या रवो ग्रामपुरप्रवेशे शस्तो रवो नो मृगधूर्त्तकानाम्" ॥

प्रस्थाने--वामे दृष्टो रुत: प्रशस्त:। प्रवेशे--दक्षिणतो व्रजन् ब्रुवंश्च शस्तः। रामायणे आरण्यकाण्डे सीताहरणनिमितं मारीचबधानन्तरमागच्छतो रामस्य—"क्रूरस्वरो भयकारो गामायुः पृष्ठतो नदन्"।

वनपर्वणि द्रौपदीहरणनिमित्तम्—

तेषान्तु गोमायुरनल्पघोषो निवर्त्ततां वाममुपेत्य पन्थाम्।
प्रव्याहरन्तं प्रविमृश्य राजा प्रोवाच भीमञ्च धनञ्जयञ्च॥
यथा वदत्येष विहीनयोनिः शाला मृगो वाममुपेत्य पार्श्वम्।
सुव्यक्तमस्मान्नवमन्यपापैः कृतो विमर्दः कुरुभिः प्रसह्य॥

बार्हस्पत्ये-"ग्राममध्ये तु वाशेत वनादागत्य जम्बुकः।
तीव्रस्वरेण महता दृष्टो ग्रामबधाय सः"॥

गार्गीये—"दिवा गृहं प्रविशति जम्बुको यस्य निर्भयः।
ध्रुवं गृहपतेस्तस्य विनाशः क्षिप्रमुच्यते"॥

औशनसे--"परित्यज्य स्वकां वाचं यत्र गोमायुरन्यथा।
वाचं वदेज्जन्तुभयं गोमायुवदनं स्मृतम्॥
युगपद्यत्र गोमायू वाशेते विस्वरं क्वचित्।
तत्र केचिद् भयं प्राहुर्गर्गर्षिवचनं श्रुतेः॥
ऐन्द्राग्नीस्तत्र दीप्तास्यादिन्द्राग्नीर्वात्र मन्त्रिका।
यं गोमायुः प्रवदति इति प्रभृति कर्म च"॥

अथ शिवा। तत्र वसन्तराजः-
"शोभना शुभफलाप्तिसूचकं कथ्यते कलिभयं शिवारुतम्।
शान्तदीप्तककुभां विभागतो ज्ञानमत्र च सदा प्रयुज्यते"॥

काश्यपः-"नैव दारुणता तस्याः सज्वलायाः स्वभावतः।
ज्वालया साग्निकं वक्त्रं वमन्ती साऽशुभा शिवा"॥

वराहः--मौनं गता प्रतिरुते नरद्विरदवाजिभिः।
या शिवा सा शिवं सैन्ये पुरे वा संप्रयच्छति॥

उच्चैर्घोरं वर्णमुच्चार्य पूर्वं पश्चात्क्रोशेत क्रोष्टुकस्यानुरूपम् ।
या सा क्षेमं प्राह वित्तस्य चाप्तिं संयोगं वा प्रोषितेन प्रियेण ॥
शान्ता त्ववर्णात् परमा रुवन्ती टाटामुदीर्णामिति वाश्यमाना ।
टेटे च पूर्वं परतश्च थेथे तस्याः स्वतुष्टिप्रभवं रुतं तत् ॥
या रोमाञ्चं मनुष्याणां शकृन्मूत्रञ्च वाजिनाम् ।
रावात् त्रासञ्च जनयेत्सा शिवा न शुभप्रदा ॥
भेभेति शिवा भयङ्करी भो भो व्यापदमादिशेच्च सा ।
मृतिबन्धनिवेदिनी फिफे हूहू चात्महिता शिवा स्वरे" ॥

**पराशरः**—"दीप्ता वा काकलीस्वरा सद्यः संग्रामिकस्य भयाय आसप्तरात्रान्मरकानुबन्धिनी च । खरुतं वदनं कुर्याद्राजमृत्युम् । शकटमारुह्य वाश्यमानायां विघाताय । खट्वामारुह्य स्त्रीमृत्यवे । देवागारं चैत्यं वाऽमात्यश्रेष्ठविघाताय वर्षं गोहरणं भयं वा विद्यात् । इन्द्रकीलमारुह्य चेद्वर्षाय स्यादनृताववर्षायेति" ।

**वसन्तराजोऽप्याह**—

"रोमोद्गमं या जनयत्यकस्मात् फे- इत्यतिक्रूररवा नराणाम् ।
मूत्रं पुरीषञ्च तुरङ्गमाणां सा सर्वदा स्यादशिवा शिवेह ।
ज्वालां विमुञ्चत्यतिरौद्रनादा समाकुला यातुरिवासमन्तात् ।
रोमाञ्चकं वै जनयत्यकस्मात् कुर्याच्छिवा वा पुरराजघातम् ॥
तरङ्गिणीरोधसि सौम्यरूपा त्रीन् पञ्च वा मुञ्चति रौति नादान् ।
शिवाऽशिवा तां नृपतिस्तदानीं वदेत देवीमभिनन्दनीयाम् ॥
ग्रामस्य मध्यं समवाप्य यस्य ज्वालामुखी मुञ्चति फेत्कृतानि ।
विशून्यतां गच्छति निश्चयेन लोकस्य वा स्यादसुखं प्रभूतम् ॥
श्मशानभूमौ दिनमध्यभागे मध्ये जनं चेत्तु गृहप्रवेशे ।
या रौति तस्यै बलिमर्घ्ययुक्तं भक्त्या प्रदद्याद्यदि भद्रमिच्छेत्" ॥

**मयूरचित्रे**-"प्राकारे नगरे द्वारे राजगेहे चतुष्पथे ।
स्थानेष्वेषु शिवाक्रन्दो देशभङ्गकरः स्मृतः" ॥

लङ्काकाण्डे कुम्भकर्णबधनिमित्तम्—

"घोररूपाः शिवा नेदु सज्वालकवलैर्मुखैः ।।"

बराहः—"पूर्वोदीच्योः शिवा शस्ता शान्ता सर्वत्र पूजिता ।
धूमिताऽभिमुखी हन्ति स्वरदीप्ता दिगीश्वरान् ।।
अन्यं प्रतिरुता यत्स्यात् सा बन्धमृतिशंसिनी ।
वारुण्यानुरुता सैव संशते सलिलागमम् ।।

पराशरः—"प्राच्याद्यष्टादिदिक्षु दीप्तासु शिवा व्याहरन्ती पूर्वस्यां स्त्रीहरणं कुर्यात् । पूर्वदक्षिणस्यां गृहपतेर्घातमग्निदाहश्च । दक्षिणस्यां वैश्यबधमागन्तुबधं वा । दक्षिणपश्चिमायां सजातोभयं शत्रोर्गणस्य । पश्चिमायां सलिलघातं शूद्रोपद्रवञ्च । पश्चिमोत्तरस्यां दीर्घार्त्तिं ब्राह्मणपीडां वा । उत्तरस्यां व्याधिम् । उत्तरपूर्वस्यां दृष्टपुंसः प्रवेशनम् । नैर्ऋत्यां वायव्यां याम्यायां वारुण्यां व्याहरेच्छरीरघाताय स्यात् । दक्षिणतो मेघसंनादा कष्टाय । पश्चिमतः श्रेष्ठामात्यबधाय । भेरीमृदङ्गघोषाभा चेदुत्तरतो द्विर्वहेद् भूमिकम्पाय । त्रिर्महोल्काभयाय । फेरुण्डकस्य त्रिचतुःषट्सप्तकृत्वः इति रुतेष्दानुपूर्व्यात् फलं विद्यात् । प्राच्यां तावद्दिशि कन्याहरणमग्न्युत्पातं क्षत्रियसन्नाहं ग्रहस्य केतोरुदयमिति । दक्षिणपूर्वस्यां दिशि गोयुगप्रणाशं गवाञ्च सह पालैरात्मघातं महद्भयमग्न्युत्पातम् । दक्षिणस्यां पलायनं राजदण्डयोग स्वचक्रदोषं मरकम् । नैर्ऋत्यां फेरुण्डकक्रीडितं न गुणाय केनचित्कस्यचिद वृक्षाद्यारोहणं ब्रूयादुद्धरणञ्च । तथैव चतुष्पदकीटानां वचनयून्यस्य शूलादवपतनं मृतस्य चिन्ता कार्यादुद्धरणम् । वारुण्यां केनचित्कस्यचिद् हर्षविनोददानं हस्तग्राह पुंसो बधं तथा श्रेणीशानग्रहणनैगमैर्बन्धनं भेदनं वातोद्भ्रमणमिति । वायव्यां राहुणा चन्द्रग्रहणमनिलप्रादुर्भावं जरामरणमुल्काप्रपतनं राष्ट्रस्यानयमिति । उत्तरस्यां दुष्टपुंसो निग्रहणं सन्धिच्छेदं ग्रामघातं पुररोधं स्त्रीहरणम् । ब्राह्म्यां वर्षाश्मपाताशनिप्रादुर्भावं महार्घवर्षभूचलनदुर्भिक्षमिति । अष्टकृत्वः प्रतिसर्वतो वाशितं योगक्षेमायेति ।"

वसन्तराजः—"स्थित्वा प्रदीप्ते ककुभो विभागे ज्वालामुखी फेत्कुरुतेऽतिरौद्रम् ।
ग्रामस्य तस्य प्रकरोति नाशं तस्याऽथवाऽनिष्टशिवस्य मध्ये ।।

दिक्ष्वारुदन्ती सकलासु रौद्रं भ्राम्यत्यखिन्ना परितः पुरं चेत् ।
शृगालजाया खलु तदब्रवीति युद्धं महच्चैव तथा विघातम् ॥
करोति फेफे इति सर्वदिक्षु यदा तदा स्थानविघातयुद्धे ।
शिवाऽभिधत्ते क्षुधिता त्वसंख्यान् रौद्रस्वरान् मुञ्चति चेदुपेक्ष्या॥
सर्वदिक्षु शुभा दीप्ता विशेषेणाथ शोभना ।
पुरे सैन्येऽथ सव्या या कष्टा सूर्योन्मुखी शिवा ॥"

**पराशरः**—"सर्वत्र घोरप्रणादिनी सर्वतो ग्रामं परिगच्छन्ती च शस्त्रोत्पाताय । भृशं स्वरे ह्युद्घुष्टकान्यभिधाय पीडा शस्त्राभिघाताय प्रमाणी कुर्यात् । सन्ध्यायां मनुष्यवधायेति ।"

**वराहः**—"शिवोदये यत्र दिवाकरस्य भीमा रवा चोर्ध्वमुखी विमुञ्चेत् ।
समागता वायसगृध्रसंघैस्तदा भयं वेदविदो वदन्ति ॥"

अथ दिग्यामप्रकरणम् । तत्र **वसन्तराजः**—

"आद्ये दिनस्य प्रहरे प्रवृत्ते महेशदेवेशहुताशदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
अह्नो द्वितीये प्रहरस्य भागे सहस्रनेत्रानलकालदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
प्राप्ते तृतीये प्रहरे दिनस्य हुताशकालासुरराजदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
समागतेऽह्नः प्रहरे चतुर्थे प्रेतेशदैत्येशजलेशदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
आद्ये निशायाः प्रहरे प्रवृत्ते रक्षोधिपाम्भःपतिवायुदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
ततो द्वितीये प्रहरे निशायास्तोयाधिनाथानिलसौम्यदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
यामे तृतीयेऽपि हि यामवत्याः समीरदोषाकरशम्भुदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥

समागते रात्रितुरीययामे निशाकरेशानसुरेशदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ।।"

अथ दिक्चक्रयामप्रकरणम् । तत्र बार्हस्पत्ये—

"कृतान्तरक्षोवरुणानिलेन्दुदिक्ष्वाद्ययामे रटितैः श्रृगालयाः ।
स्यादिष्टवार्त्ता श्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ।।
रक्षः प्रचेतोऽनिलसोमशम्भुदिक्षु द्वितीये प्रहरे रवेण ।
स्यादिष्टवार्त्ता श्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ।।
क्लेशवातेन्दुमहेशशक्रदिक्ष्वारवेण प्रहरे तृतीये ।
स्यादिष्टवार्त्ता श्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ।।
समीरसोमेशसुरेशवह्निदिक्षु स्वरेण प्रहरे चतुर्थे ।
स्यादिष्टवार्त्ता श्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ।।
शशाङ्करुद्रेन्द्रहुताशकालदिक्ष्वारवः पञ्चमयामभागे ।
स्यादिष्टवार्त्ता श्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ।।
ईशानशक्राग्निकृतान्तरक्षोदिक्षु स्वरेण प्रहरे च षष्ठे ।
स्यादिष्टवार्त्ता श्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ।।
इन्द्राग्निकालासुरपाशपाणिदिक्ष्वारवे सप्तमयामकाले ।
स्यादिष्टवार्त्ता श्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ।।
वह्न्यन्तकृन्नैर्ऋतिपाशवातादिक्ष्वष्टमे च प्रहरे स्वरेण ।
स्यादिष्टवार्त्ता श्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ।।
मध्यन्दिने यावदहानि पञ्च शिवासमीपे नगरस्य यस्य ।
विरौति घातं विदधाति तस्य भयञ्च वह्निप्रभवं प्रभूतम् ।।
या पञ्चरात्राणि कथञ्चिदेवं क्रूरा रवा व्याहरते श्रृगाली ।
यस्यान्तिके तं बहवो हयेन मुष्णन्ति चौरा जनसन्निवेशम् ।।
स्थानस्य यस्योपगता समीपं दिनानि या चोच्चरते प्रभाते ।
स्वरेण रौद्रेण श्रृगालभार्या स्यात्तत्र हानिर्महती नराणाम् ।।
सुरक्षितस्यापि मनुष्यलक्ष्मीग्रमिस्य शीघ्रग्रहणं विधत्ते ।
त्रयं दिनानां दिवसावसाने शिवा रटन्ती परुषस्वरेण ।।"

अथ लोमासिका। तत्र वराहः –

"लोमासिकायाः खलु कक्कशब्दः पूर्णः स्वभावप्रभवः स तस्याः।
येऽन्ये स्वरास्ते प्रकृतेर्व्यपेताः सर्वे प्रदीप्ता इति संप्रदिष्टाः॥"

वसन्तराजः—"सिद्ध्यै सदा सर्वसमीहितानां स्याल्लोमसीदर्शनमग्रतस्तु।
राजप्रसादं कथयन्त्ययुग्मां दृष्ट्वा ध्रुवं लोमसिकां च पृष्ठे॥
सव्याय सव्या च गतिः सदाऽऽसां नृपादरस्त्रीधनलाभहेतुः।
खीखीतिशब्दादपरो विरावो दीप्तो भवेल्लोमसिकासमुत्थः॥"

नारदः—"मध्याह्ने चार्द्धरात्रे वा उदयेऽस्तमयेऽथवा।
ग्राममध्ये यदा विप्र फेत्कारं कुरुते शिवा॥
ग्रामदाहो भवेत्तत्र राज्ञो वा मरणं भवेत्।
अतः शान्तिं प्रवक्ष्यामि येन संपद्यते शुभम्॥
दधिमधुसमायुक्तं सिद्धार्थं घृतमिश्रितम्।
चरुं वै वैश्वदैवत्यं कृत्वा चैव विधानतः॥
जुहुयात्पञ्च साहस्रं जातवेदसि मन्त्रवित्।
धेनुं च दक्षिणां दद्यात् सुवर्णं धान्यमेव च॥
अस्मिन्नाशु कृते शान्तिः शुभ ग्रामस्य वै भवेत्॥"

अत्रानुक्तविशेषशान्तिषु श्रृगालाद्भुतेषु मृगपक्षिविकारविहिता शान्तिरवगन्तव्या। तदसम्भवे फलगुरुलाघवतारतम्यात् कनकान्नगोदानस्वस्त्यनादिका शान्तिर्वा कर्त्तव्येति।

इति श्रृगालाद्भुतम्।

## अथ कृष्णपेचिकाद्भुतम्

वसन्तराजः – "प्रभूतपुष्पे परमप्रमोदो व्याधिर्व्यथाऽनर्थरुजस्तु लाभः।
अत्यर्थलाभं फलशोभिशाखे वृक्षे भवेत् क्षीरिणि भूमिलाभः॥
स्वस्थानलाभः सुतरौ सुचेष्टे धान्यानि सौख्यानि पुनः स्वभूमौ।

भक्ष्यपूर्णवदनः शुभशब्दो यत्प्रदेशनिरतो विहङ्गमः ।
सम्पदं प्रवितरत्यति वह्नीं तां निहन्ति पुरुस्थितवक्षाः ॥"

वराहः – "चिरिल्विरिल्विभिः स्वनैः शुभङ्करोति पिङ्गलाः ।
अतोऽपरे तु ये स्वराः प्रदीप्तसंज्ञकास्तु ते ॥"

वसन्तराज.—

'मध्ये घनाथो महती च शाखा शुभाय तस्यां शुभशब्दकारी ।
प्रान्ते च लाभो वदनावलम्बी स्यादन्तरस्यां शुभदो न पिङ्गः ॥
भूरिकोटरयुते परिशुष्के पादपे रटति मोटितशाखे ।
अम्बरे च कुरुते यदि शब्दं मृत्युदस्तदचिरेण पतत्री ॥
उन्मूलिते भूरुहि दष्टशब्दे नष्टावशेषऽपि विनाश्यतेऽर्थः ।
प्रलम्बमानः सकलं विनाशमसंशयं शंसति खेचरोऽयम् ॥
अधिष्ठितः कीकसकाष्ठशूलान्यङ्गारवद्भस्मित - वामलूरान् ।
शान्तस्वरो वञ्छितकार्यनाशं दीप्तारवो वक्ति मृतिं विहङ्गः ॥
कण्डूयमानः खग उत्तमाङ्गं पुष्पाप्तयेऽभीप्सितलब्धये च ।
कण्डूयमानोऽक्षि हितेक्षणाय महार्थलाभाय च सम्प्रदिष्टः ॥
कणस्य कण्डूयनतो नराणां गीतेषु वार्त्ताश्रवणे भवेताम् ।
कण्ठस्य कण्ठाभरणाप्तियुक्तिः स्कन्धे करीन्द्रस्य तथैव रोहः ॥
मुखे च मण्डूतिरभीष्टभोज्यमालिङ्गनं वक्षसि बान्धवस्य ।
लाभ. प्रियाया युवतेर्विशेषाद्बाह्वोः पशून् वाञ्छति पिङ्गलायाः ॥
कक्षप्रदेशे धनपुत्रलब्धी कुक्षावपि स्यात्सुतसङ्गमाय ।
पार्श्वे प्रियायाः परिरंभणाय स्थानाय सम्यक्सुतलब्धये च ॥
भर्त्तृव्ययौ बन्धनधान्यलाभौ कण्डूयमाना जठरं ददाति ।
कटीपुरस्तात् कटिसूत्रवस्त्रपुत्राप्तये पिङ्गलिका नराणाम् ॥
भवेन्नितम्बेऽम्बरयोषिदाप्तिर्जानूरुभागे रिपुतो जयः स्यात् ।
कण्डूयतेऽधस्तदलं कृतीनां लाभोऽल्पदेशाद् द्रविणागमश्च ॥
सुगन्धिवस्तूनि वसु प्रभूतं घोणाग्रकण्डूयनतो ददाति ।
ललाटकण्डूयनतो नरस्य स्यात्पट्टबन्धो महती च कीर्त्तिः ॥

मुदं विहङ्गोऽङ्गविलोकनेन स्पर्शेन गल्लस्य सुखं मुखस्य ।
भद्राणि वक्षोग्रहगात्रफलानि क्रीडासुखं क्रीडनके ददाति ॥
निरीक्ष्य वक्षो यदि वामभागं स्पृशेत्तदा संङ्गमकृत्प्रियाभिः ।
यदा पुनः पश्यति वक्ष एव खगस्तदा मित्रसमागमाय ॥
महार्थलाभोऽरिपराजयश्च पक्षद्वये मूर्ध्निकृते भवेताम् ।
एकत्र पक्षे द्वितीयेऽथ वास्या विस्तारिते पिङ्गलया धनर्द्धिः ॥
महद्धनं देहजपक्षपुच्छप्रसारणात्त्रोटिपुटेन पुंसाम् ।
भवत्यभीक्ष्णं शुभमाभिमुख्ये सङ्गो विहङ्गद्वयसन्निकर्षे ।
रतौ रताप्तिः खलु पिङ्गलायाः परस्परं प्रेम च पुच्छकम्पे ।
लीलाविलासं कुरुते सलीलमन्योन्यकण्डूयनतः प्रियाणि ।
अन्योन्यकर्णाननचुम्बनार्थविहङ्गमो सङ्गमभोज्यहेतुः ॥
एवंविधाः शोभनकायचेष्टाः स्युः पिङ्गलायाः शुभदास्सदैव ॥
पिको व्रजित्वा यदि दक्षिणेन स्थित्वा च शान्ते शुभदं निनादम् ।
कुर्यात्तदर्द्धि महतीं ददाति गाहत्यशास्त्रस्वरचेष्टितोऽसौ ॥
अवामपादोच्छ्रयणेन सौख्यमाख्याति वामोच्छ्रयणादसौख्यम् ।
धूत्वा शिरोङ्गान्यथवा विहङ्गः शुभस्वरो रोगमुपाददाति ॥
अशास्त्रशब्दस्तु ददात्यसाध्यं वाधावहं दुस्तरदुःखदाहम् ।
त्वचं समुच्छिद्य तरोरधस्तात् पत्राणि पुष्पाणि फलानि चाऽपि ॥
पक्षी क्षिपन् देहभृतां सपक्षं क्षिपञ्च लक्ष्मीं क्षपयत्यवश्यम् ।
अर्धं पदा वा यदि वा समग्रं कण्डूयतेऽसौ शुभदा न चेष्टा ॥
स्याद्दक्षिणस्यास्य कलेवरस्य कण्डूयनं वामपदा न भद्रम् ।
स्थानपदीप्तर्वसतेर्विनाशः काष्ठापदीप्तेस्तु कलेवरस्य ॥
निनाददीप्तेस्तु भवेद्व्रतस्य दीप्तित्रये स्थानवपुर्धनानाम् ।
दिक्कालचेष्टाऽभिरनिष्टमिष्टं यत्पिङ्गलायाः फलमामनन्ति ॥
तथैव तादृक् सुधिया समस्तं खगान्तरेभ्योऽप्युपलक्षणीयम्" ॥

अत्रानुक्तविशेषशान्तिषु कृष्णपेचिकाद्भुतेषु मृगपक्षिविकारविहिता शान्तिरौत्पातिकफलगुरुलाघवमवगम्य कनकान्नदानादिका वा शान्तिरवगन्तव्येति ।

इति कृष्णपेचिकाद्भुतम् ।

## अथ वायसाद्भुतम्

तत्र वसन्तराजः--

"अथोच्यते काकरुतं रुतानां मूर्ध्निस्थितं शाकुनभाषितानाम् ।
अचिन्तिताचिन्तितभूरिकार्यं पूर्वादिकाष्ठाप्रहरक्रमेण ॥
ये ब्राह्मणक्षत्रियवैश्यशूद्राः काका भवन्त्यन्त्यजपञ्चमास्ते ।
वर्णाकृतिभ्यामृषिभाषिताभ्यां सदैव युक्तैरुपलक्षणीयाः" ॥

लक्षणन्त्वाह तत्रैव—

"बृहत्प्रमाणो गुरुदीर्घतुण्डो दृढस्वरः कृष्णवपुः स विप्रः ।
पिङ्गाक्षनीलास्य विमिश्रवर्णः स्यात्क्षत्रियो रूक्षरवोऽतिशूरः ॥
आपाण्डुनीलः सितनीलकण्ठो नात्यन्तरूक्षारटितश्च वैश्यः ।
भस्मच्छविर्भूरिककारशब्दः शूद्रः कृशाङ्गश्चपलोऽतिरूक्षः ॥
विरूक्षसूक्ष्मास्यतनुर्विशङ्को यः कन्धरां दीर्घतरां विभर्ति ।
स्थिरारवः स्थैर्यसमेतबुद्धिः काकोऽन्त्यजातिः स तु पञ्चमोऽत्र ॥
द्रोणाभिधः कृष्णतनुर्द्विजेभ्यो ग्राह्यः स काकः खलु मुख्यवृत्त्या ।
तस्मादृते श्यामगलो निरीक्ष्यः श्वेतस्तु निन्द्योऽद्भुतदर्शनोऽसौ ।
सद्यस्त्रिसप्ताहदशाहपक्षैः पञ्चापि काकाः फलदाः क्रमेण" ॥

विष्णुधर्मोत्तरे--"पुरतो धनलब्धिः स्यादाममांसस्य छर्द्दने ।
भूलब्धिः स्यान्मृदः क्षेपे राज्यं रत्नार्पणे महत् ॥

पराशरः—प्रथमं यस्याग्रत आममांसं छर्दयंस्तस्य धनागमं वेदयति । गुडं गुडभक्तं वा धनस्य । पायसं दुग्धं दधि वा स्त्रियाः पुत्रस्य सुहृदो नार्या वा । शर्करां सहिरण्यामन्नं वा बालान् कीटान् कृमिं वा छर्दयन् शस्यलाभं पापसमागमं वा स्त्रीलाभम् । मृत्तिकामन्यत आहृत्य शयने कोष्ठागारे वा निपातयति पूर्णभूमिलाभाय । अन्यं शकुनिमग्रतो वस्त्रलाभाय । अग्रतः पांशुकर्द्दमं चाश्नाति तत्प्रवासाय, धनागमाय वा । भक्तं गुडं वा धनागमाय । तुण्डेन जलप्रियधनावाप्तये । वामतो दधिसर्पिषी गबामन्नस्य लाभाय । अग्रतः फलं वैभ-

वस्य लाभाय। शुक्लं चेलं स्त्रीलाभाय"।

विष्णुधर्मोत्तरे--"प्रोषितागमनङ्काकः कुर्वन् द्वारि गतागतम्"।

पराशरः—"गृहद्वारि चेद्गतागतं कुर्यादागन्तूनां समागमं कुर्यात्। यस्य वेश्मान्यार्द्रलेखं पातयेत्तस्य विद्यागमो भवेत्। आर्द्रकाष्ठलाभाय आर्द्रपक्षो वाऽन्नमुल्लोऽप्यतिश्रीलाभाय। चेलं परामृश्य गृहे तिष्ठन् क्षेमाय। तुण्डेन व्रीहीन् गोऽश्वकुञ्जरवेश्मसु पुत्रलाभाय"। पातयेदिति सम्बन्धः।

वराहः – "सुस्निग्धपत्रपल्लवकुसुमफलानम्रसुरभिमधुरेषु।
सक्षीराव्रणसंस्थितमनोज्ञवृक्षेषु चार्थसिद्धिकरः॥
निष्पन्नशस्यशाद्वल- भवनप्रासादहर्म्यहरितेषु।
हर्म्योच्छ्रयमङ्गल्येषु चैव विरुवन्धनागमदः"॥

वसन्तराजः--"विरौति कुम्भे मणिकेऽथ वायः स गर्भवत्याः सुतहेतुमन्ज॥
उड्डीयते कण्टकिनीञ्च शाखामादाय राजागमनाय काकः॥
छायार्थलाभं भुवि भूमिलाभं विघ्नं जले ग्रावाणि कार्यनाशम्।
करोति काको विरुवन्नरस्य प्रस्थायिनः स्थानगतस्य वापि"।

वराहः—"सक्षीरार्जुनवञ्जुलकूलद्वयपुलिनगा रुवन्तश्च।
प्रावृषि वृष्टिं दुर्दिनमनृतौ स्नाताश्च पांशुजलैः॥
सलिलमवलोक्य विरुवनवृष्टकरोऽब्दानुकारी वा॥"

विष्णुधर्मोत्तरे –"शास्त्राङ्गवाहनोपानच्छस्त्रवस्त्रादिकुट्टने।
मृत्युस्तत्पूजने पूजा तद्वद्विष्ठाकरं शुभम्॥

वृहद्यात्रायां –"उपानच्छत्रयानाङ्ग--च्छत्रछायावकुट्टने।
मृत्युं तत्स्वामिनो विद्यात्पूजा स्यात्तु प्रपूजने॥"

वराहः—वाहनशस्त्रोपानच्छत्रच्छायाङ्गकुट्टने मरणम्।
तत्पूजायां पूजा विष्ठाकरणेऽन्नसंप्राप्तिः॥"

काकपूजनन्तु प्रायश्चित्तरूपम्। तत्करणे शुभमित्यर्थः।

पराशरः—"अनामिषं छत्रमुपानहौ वा तुण्डेन कुट्टनं महाभयाय। शयने शरकाण्डं कुलविनाशाय। तालपत्रमसीवल्कलश्रेष्ठचर्मास्त्रप्रदेशांश्चतुष्पदान् शयने विलिखन् नाशाय। शुष्ककाष्ठजीर्णचेलं विनाशाय। यस्य शयनमवमूत्रयेत्तस्य भार्यां दुष्टां विद्यात्।"

वृद्धयात्रायां—"हरेदुपलभेद्वाऽपि यद्द्रव्यं वायसोऽग्रतः।
तत्प्राप्तिनाशौ विज्ञेयौ हेमपीते विनिर्दिशेत्॥"

पीतद्रव्ये उपनीते हेमप्राप्तिं विद्यादित्यर्थः।

विष्णुधर्मोत्तरे—"यच्चैवोपनयेद्द्रव्यं तस्य लब्धिं विनिर्दिशेत्।
द्रव्यं वाऽपि नयेद्यत्तु तस्य हानिं विनिर्दिशेत्॥
पीतं शुक्लं तथा रूक्षं रूप्यमेव तु भार्गव॥"

पराशरः—"शुष्कगोमयराशौ पादौ विलिखन्नेव पालाशभूर्यपत्रं वा गृहीत्वोपसर्पेत् तस्य वस्त्रलाभः स्यात्। यस्य कर्षेत् नाशस्तेषामेव। प्रेष्ये चेत् प्रेष्यमाने दृषदि काको निपतेत्तस्य व्याधिभयं मरणभयं वा।"

वराहः—स्कन्धवारादीनां निवेशसमये रुवंश्चलत्पक्षः।
सूचयतेऽन्यत्स्थानं निश्चलपक्षस्तु भयमात्रम्॥
प्रविशद्भिः सैन्यादीन् सगृध्रकर्कैर्विनाऽऽमिषं ध्वांक्षैः।
अविरुद्धैस्तैः प्रीतिर्द्विषतां युद्धं विरुद्धैश्च॥
विरुद्धस्याग्रतः पक्षौ धुन्वन् ध्वांक्षो भयप्रदः।
मृत्युरभ्युपसर्पंश्च संस्पृशंश्च तथा भवेत्॥"

वसन्तराजः—"भ्रमन्नधो द्वौ परिधूय पक्षौ काकः कुनादः प्रलयङ्करोति।
क्रुद्धोऽधिरूढः करटारवश्च रोगेन मृत्युं कुरुते नराणाम्॥
द्वारप्रदेशे रुधिरानुलिप्तो विरौति काकः शिशुनाशनाय।
पक्षौ विधुन्वन् विरुवन् विरूक्षः शान्ते प्रदीप्ते च भवेन्न शस्तः॥
रुवंस्तु दृष्टस्तृणपूर्णवक्त्रो हुताशभीतिं करटः करोति।
स्यात्प्रस्थितस्याप्यथवा स्थितस्य दुःखं प्रभूतं दिवसत्रयेण॥"

वराहः—यदि शृङ्खलां वरत्रां वल्लीमादाय वाशते बन्धः।
पाषाणस्थे तु भयं क्लिष्टपूर्वाध्वगयुतिश्च ॥

पराशरः—"सुमनोदामवेष्टनं वस्त्राणि वा हरन् प्रदक्षिणी कुर्वन् कामाप्तिम्। यस्याग्रतो भुवि रज्जुं पातयेत्तस्य चौरागमाय। पथि सपत्रां शाखां वेलयन् नाशाय। रज्जुमग्रतो विकर्षन् सर्पतस्करेभ्यो भयमावेदयति। अस्रमुपभुक्तां शाखां वा ग्रामस्य निष्क्रामघाताय।"

विष्णुधर्मोत्तरे—"न्यसेद्रज्जुं पुरस्तान्निवेदयति बन्धनम्।
रक्तद्रव्यं गृहेदग्धं क्षिपन् वह्निनिवेदकः॥"

पराशरः—"दीप्तोद्विग्नो विटपेऽवकुट्टयन् वह्निकृद्विधुतपक्षः।
रक्तद्रव्यं दग्धं तृणकाष्ठं वा गृहे विदधत्॥"

वराहः—शिरो विकम्पयन्तो वाशमानाः सशर्करदीप्तस्थानाद् गणतो ग्रामाभिमुखं धावन्तोऽग्निभयमावेदयन्ति। तृणरज्जुकार्पासतन्तूंश्चाग्निभयाय। शुष्काष्ठ चौरभयाय। गृहे किञ्चिद्विलिखेद्यस्य तस्य भवेत्कुटुम्बिनी दुष्टा। वामेन मण्डले यदा निलीयमाना तदा सैव विधवा। बहवश्चेत्परस्परं भ्रमेयुस्तदा स्त्रीविनाशः स्यात्। परस्परमाहन्युः स्वजनो दुष्येत्। गृहेषु पुनरुत्पतेयू राजागमम्। अथैकश्चेज्जीवन्तमाखुमादाय गृहे निपातयेत् श्रीनाशाय। तमेव मृतं कलहाय। सर्वस्वहरणाय पूतिवाश्य पुच्छं प्रचालयन्।"

वराहः—"पूतिवाश्य पृष्ठतो दक्षिणेन यायाद्द्रुतं क्षतजकारी।
एकचरणोऽर्कमीक्षन् विरूवंश्च रूधिरहेतुः ॥
दृष्टार्कमेकपादस्तुण्डेन लिखेद्यदा स्वपिच्छानि।
पुरतो जनस्य महतो भयमभिधत्ते तदा बलिभुक्॥"

पराशरः—"सूर्योदये जन्तुं तुण्डेन दारयेयू राज्ञोऽमात्यस्य वा बधः।"

वराहः—मृतपुरुषाङ्गावयवे स्थित्वाऽभिरूवंश्च मृत्युकरः।

भुञ्जन्नस्थि च चञ्च्वा यदि रुवत्यस्थिभङ्गाय च ।।
रज्ज्वस्थिकाष्ठकण्टकिनिस्सारशिरोरुहानने रुवति ।
भुजगगजदंष्ट्रितस्करशस्त्राग्निभयान्यनुक्रमशः ।।
ऊर्ध्वमुखाश्चलपक्षाः पथि भयदाः क्षुद्भयाय धान्यमुखाः ।
सेनाङ्गस्था युद्धं परिमोषं चान्यभृत्पक्षाः ।।
काष्ठरज्ज्वस्थिनिस्सारकेशकण्टकि भिद्रुवन् ।
व्यालाहिव्याधिशस्त्राग्नितस्करेभ्यो भयङ्करः ।।
युद्धं सेनाङ्गसंस्थे तु मोषकृत्सबिलेखने ।
चरन् निशि विनाशाय दुर्भिक्षं धान्यमोषकृत् ।।

विलेखनम्—अङ्गादि विलेखने ।

पराशरः—"निश्यन्तरिक्षे संघशः सशब्दं चरेयुर्नृपजनपदभयम् । सन्ध्यायां सर्व उपरिक्रम्य निलीना अन्नभयम् ।"

मात्स्ये—"दुर्भिक्षावेदिनो ज्ञेयाः काका धान्यमुखा यदि ।
जनानभिभवन्ति स निर्भया रणवेदकाः ।।"

पराशरः—"धान्ये शिरो निधाय कम्पयन् पुरीषं वा भक्षयन् दुर्भिक्षाय ।"

वराहः—"अकार्यसंहितैर्भेदो रोधश्चक्राकृतिस्थितः ।
वर्गगैश्चाभिघातः स्याद्रिपुबृद्धिश्च निर्भयैः ।।
अनिमित्तसंहतैर्ग्राममध्यगैः क्षुद्भयं प्रवाशद्भिः ।
रोधश्चक्राकारैरभिघातो वर्गवर्गस्थैः ।।
अभयाश्च तुण्डपक्षैश्चरणविघातैर्जनानभिभवन्तः ।
कुर्वन्ति शत्रुबृद्धिं निशि विचरन्तो जनविनाशम् ।।
सव्येन खे भ्रमद्भिः स्वभयं विपरीतमण्डलैश्च परात् ।
अत्याकुलं भ्रमद्भिः वतोद्भ्रान्तिर्भवति काकैः ।।"

विष्णुधर्मोत्तरे—"अपसव्यं भ्रमन्तश्च मण्डले रणवेदिनः ।"

वसन्तराजः—"निष्कारणं सम्मिलिता रुवन्तो ग्रामस्य नाशाय भवन्ति काकाः ।
रोधञ्च चक्राकृतयो वदन्ति सव्यापसव्य भ्रमणाद्भयञ्च ।।

विघातमाहुर्बहुवर्गसंस्था रात्रौ रुवन्तो जनताविनाशम् ।
लोकञ्च चञ्चूचरणप्रहारैरुद्वेजयन्तः परचक्रवृद्धिम् ॥"

पराशरः—वित्रस्तत्वात् तत्सधूमास्तु उड्डीनाश्चोर्ध्वं वायसाः क्रोशन्त्यारुवन्तः सर्वे सव्या युद्धागमाय च । अथ वाश्यमानोऽग्निगृहस्थो रूक्षं व्याहरेद्कुलश्रेष्ठविनाशं विद्यात् । प्राकारेषु कुलश्रेष्ठविनाशम् । शयने कुटुम्बविनाशम् । घटस्थे कुटुम्बिनीं दुष्टाम् । लोहितद्रव्ये ताम्रागमम् । कृष्णे आयशश्च श्वेते रजतस्य इन्द्रध्वजपताकावाहनायुधेषु दीनस्वरास्तिष्ठेयुश्चमूबधः । दक्षिणमण्डलानि कुर्युः स्वपक्षागमम् । वामान् परचक्रागमम् । वृक्षपत्राणि लक्षयेयुः भक्ष्यानुबन्धः । परस्परं पक्षान् योजयेयुर्वस्त्रागमम् । मध्याह्ने शिरोग्रीवार्द्धतो व्याहरेयुः शस्त्रोत्पातः । पुराट्टालकेषु परिवृत्तेऽह्नि युद्धेति व्याहरेयुः पुरनाशः । दीप्तादीप्तस्वराः संघशः पुरत उड्डीयेरन् सेनाग्रामसामर्थ्यघातमावेदयेयुः । अग्नेय्यामग्निभयम् । याम्ये मरकभयम् । नैरृत्यां वारुण्याञ्च भयम् । वायव्यां वातवेगम् । उदीच्यां शस्त्रकोपम् । ऐशान्यां वर्षम् । दीप्तायान्दिशि मण्डलानि कुर्वन्त आगच्छेयुर्यथादिशं वर्णोपद्रवः । ऊर्ध्वमुखा मण्डलिनो निलीयेरन् वातोदभवो वा वर्षं वा । पुरुषादूर्ध्वमन्तरिक्षगतानां चेष्टां व्यबहरतां प्रमाणी न कुर्यात् ।"

वराहः—"ऐन्द्रादिदिगवलोकी सूर्याभिमुखो रुवन् गृहे गृहिणः ।
राजभयचौरबन्धनकलहाः स्युः पशुभयं चेति ॥
शान्तामैन्द्रीमवलोकयन् रुवन् राजपुरुषमित्राप्तिः ।
भवति च सुवर्णलब्धिः शाल्यन्नगुडाशनाप्तिश्च ॥
आग्नेय्यामनलाजीविकयुवतिप्रवरधातुलाभश्च ।
याम्ये माषकुलत्थाभोज्यं गान्धर्विकैर्योगः ॥
नैरृत्यां हस्त्यश्वोपकरणदधितैलभोज्याप्तिः ।
वायव्यां माषसुरासवधान्य-समुद्ररत्नाप्तिः ॥
मारुत्यां शस्त्रायुध-सरोजवल्लीफलाशनावाप्तिः ।
सौम्यायां परमान्नाशनं तुरङ्गाम्बरप्राप्तिः ॥

ऐशान्यां संप्राप्तिर्घृतपूर्णानां भवेदनडुहाश्च ।
एवं फलं गृहपतेः गृहपृष्ठसमाश्रिते भवति ॥"

वसन्तराजः—"सूर्योदये पूर्वदिशि प्रशस्तस्थानस्थितोऽसौ मधुरं विरौति ।
नाशं रिपोश्चिन्तितकार्यसिद्धिस्त्रीरत्नलाभः स करोति काकः॥
ध्वांक्षः प्रभाते यदि वह्निभागे विरौति तिष्ठन् रमणीयदेशे ।
शत्रुः प्रणश्यत्यथवा वशित्व प्रयाति योषित्समवाप्यते च ॥
रुवन्प्रभाते यदि दक्षिणस्यां काकः समावेदयते च दुःखम् ।
रोगार्त्तिमृत्युं परुषस्वरेण रम्येण चेष्टागमयोषिदाप्तिः ॥
नऋत्यभागे यदि च प्रभाते करोति काकः सहसा विरावम् ।
क्रूरन्ततः कर्म किमभ्युपैति दूतागमो मध्यमिका च सिद्धिः ॥
प्रातः प्रतीच्यां यदि रौति काको ध्रुवन्तदा वर्षति वारिवाहः।
स्त्रीरत्नभूभृत्पुरुषागमश्च कलिः कलत्रेण समन्तथा स्यात् ॥
ध्वांक्षे सशब्दे पवनालयस्थे वस्त्रान्नयानाभिमतागमाः स्युः ।
पन्थागमो ब्राह्मणवृत्तिनाशः स्यादन्यदेशे गमनं स्वदेशात् ।
दिश्युत्तारस्यां सरवः प्रभाते निरीक्षमाणो बलिभुग्नराणाम् ॥
ददाति दुःखं भुजगाच्च भीतिं दरिद्रतां नष्टधनेष्टलाभौ ।
दिशीशवत्यां यदि रौति काकः आगच्छतस्तद्वणिजाऽन्त्यजातिः।
व्याधिं च धत्ते प्रियवस्तुलाभं भवेन्न वा रोगवतोऽवसानम् ॥
ब्रह्मप्रदेशस्थितवायसस्य प्रभातकाले मधुरस्वरेण ।
अभीप्सिताभ्यागमनन्तदा स्यात्स्वामिप्रसादो द्रविणस्य लाभः॥"

दिक्चक्रप्रकरणे सूर्योदयः—

"प्राच्याञ्च यामे प्रथमे सुशब्दः काको भवेच्चेष्टितकार्यसिद्ध्यै ।
अभीष्टलोकागमनन्तथा स्यान्नष्टार्थलाभो नियतं नराणाम् ॥
आग्नेयभागे पथमे च यामे स्त्रीलाभविद्वेषविधौ भवेताम् ।
कृतान्तभागे बलिभुग्विरावः स्त्रीलाभसौख्यं प्रियसङ्गमाय ॥

नैर्ऋत्यदेशे प्रिययोषिदाप्तिर्मिष्टाशनं सिद्ध्यति चिन्तितोऽर्थः ।
दिशि प्रतीच्यां विरुतैर्भवेतामत्यर्थतोयागममाल्पवृष्टी ॥
वायव्यकोणे विटसङ्गतिः स्यान्नृपप्रसादोऽध्वरदर्शनञ्च ।
सौम्ये च भीस्तस्करशोकवार्त्ता सौम्या च वार्त्ता धनलाभवार्त्ता ॥
ईशानभागेऽभिमतेन सङ्गस्त्रासो हुताशाद्वहुलोकभङ्गः ।
ब्रह्मप्रदेशे सुखकामभोगः सम्मानसम्पद् द्रविणेष्टसिद्धिः ॥

इति दिक्चक्रप्रकरणे प्रथमः प्रहरः ।

प्राच्यां द्वितीये प्रहरे विरावैः काकस्य कश्चित्पथिकोऽभ्युपैति ।
चौराद्भयं व्याकुलता च वह्नी जायेत काचिन्महती च शङ्का ॥
आग्नेयभागे नियतः कलिः स्यात्प्रियासमाकर्णनयोषिदाप्तिः ।
याम्ये च वृष्टिर्महती च भीतिः प्रियस्य वैश्यस्य तथागमः स्यात् ॥
रक्षो दिशि प्राणभयं तथा स्युः स्त्रीभोज्यलाभाखिलभक्ष्यनाशः ।
भवेत्प्रतीच्यां प्रवला वलाप्तिर्योषागमो वृष्टिसुवर्षणं च ॥
समीरभागेऽध्वगचौरसङ्गो हृतागमः स्त्रीपिशितान्नलाभः ।
सौम्ये धनेष्टागमनं जयश्च रम्ये रवे चौरभयन्त्वरण्ये ॥
महेश्वराशाधिगतस्तु काकश्चौराग्निसंन्तापविरुद्धवार्त्ता ।
ब्रवीति रूक्षै रटितैररूक्षैस्सभार्यगुर्वागमनं जयश्च ॥
ब्रह्मप्रदेशे प्रहरे द्वितीये काकः सुशब्दो नृपतिप्रसादम् ।
मिष्टान्नभोज्यञ्च ददाति पुंसां करोत्यसौ चौरभयं कुशब्दः" ॥

इति दिक्चक्रप्रकरणे द्वितीयः प्रहरः ।

ऐन्द्र्यां विरूक्षः प्रहरे तृतीये वृष्टिन्तथा चौरभयं ब्रवीति ।
हृष्टिस्तु राजागमनं जयञ्च करोति यात्रासु च कार्यसिद्धिम् ॥
आग्नेयभागेऽग्निभयङ्कलिश्च बिरुद्धवार्ता विफला च यात्रा ।
भवेद्विरूद्धैर्बलिभुग्विरावैर्जयादिवार्त्ता च भवेद्विशुद्धैः ॥
याम्यप्रदेशे कुरुतेति तूर्णं रोगन्तथाऽऽप्तागमनं विहङ्गः ।
क्षुद्राणि कार्याणि च यान्ति सिद्धिं सर्वाणि तन्मुख्यतया नराणाम् ॥

नैर्ऋत्यकोणे जलदागमश्च मिष्टान्नलाभो रिपवो नमन्ति ।
शूद्रागमश्चाप्तविरूपवार्त्ता भवन्ति यात्रासु च कार्यनाशः ॥
स्यात्पश्चिमे नष्टधनस्य लाभो दूताध्वयानं सुहृदागमश्च ।
योषागमाभीष्टजयादिवार्त्ता यात्रासु रम्ये रटितेऽर्थसिद्धिः ॥
वातालये दुर्दिनवातमेघाश्चौराप्तिनष्टार्थसमागमौ च ।
सन्तोषवार्त्तावरयोषिदाप्तिवार्त्ता रवे स्यान्मधुरे प्रशस्ता ॥
यामे तृतीये विरुवन्त्युदीच्यां काकेऽर्थलाभो नृपसेवकानाम् ।
भोज्यार्थबृद्धिः शुभदा च वार्त्ता प्रयाणके वैश्यसमागमश्च ॥
ईशानदेशे कुरुते सुशब्दो भोज्यं जयं हानिकरो कुशब्दः ।
ब्रह्मप्रदेशे तिलतण्डुलाभ्यां भोज्यं सताम्बूलमुपाददाति ॥

इति दिक्चक्रप्रकरणे तृतीयः प्रहरः ।

"ऐन्द्र्यान्तुरीये प्रहरेऽर्थऽलाभो भूमीशपूजाभयबृद्धिरोगाः ।
वह्निविभागे भयमृत्युरोगं शिष्टागमो वायसभाषितेन ॥
याम्ये रवे तस्करचौरभीतिः भवेच्च शिष्टागमरोगमृत्युः ।
नैर्ऋत्यकोणे महती प्रबृद्धिः स्यादिष्टसिद्धिः पथि चौरयुद्धम् ॥
दिशि प्रतीच्यां प्रहरे चतुर्थे द्विजातिरभ्येति ततोऽर्थलाभः ।
आयाति योषिद्विजयोम्बुबृद्धि सिद्धि प्रयाणे नृपविद्रवश्च ॥
वायव्यभागे करटस्य शब्दैरायाति योपित्प्रियमाननीया ।
ध्रुवं प्रवासो दिनसप्तकेन शिष्टागमः स्याद्गमने कृते च ॥
कौवेरभागे पथिकस्समेति ताम्रादिलाभः कुशला च वार्त्ता ।
वैश्याद्धनाप्तिस्तुरगाधिरूढा यात्रा विभूत्यै म्रियते च रोगैः ॥
ईशानभागे वलिभुग्विरावः सुवर्णवार्त्ता सरुजो विनाशः ।
ब्रह्मप्रदेशे प्रहरे तुरीये वार्त्ता भवेन्मध्यमकेष्टसिद्धिः" ॥

इति दिक्चकप्रकरणे चतुर्थः प्रहरः ।

"यद्भाषितं शाकुनकैर्विमिश्रं शुभाशुभं दिक्प्रहरक्रमेण ।
तत्राशुभं यच्छति दीप्तशब्दः श्रेयस्करः शान्तरवस्तु काकः ॥
शान्ते प्रदीप्ते च समं विहङ्गः शुभप्रदो दीप्तपराङ्मुखः सन् ।

न क्वापि रौद्रारुचितः प्रशस्तः सर्वत्र शस्तो मधुरः स्वरस्तु ॥
काको रुवन्दीप्तककुब्विभागे फलानि शस्तानि ददाति सम्यक् ।
तान्येव तुच्छानि ददात्यसौ चेद्दीप्तान्दिशं पश्यति दीप्तसंस्थः ॥
यच्चोपदिष्टं फलमत्र दुष्टं तथैव तद्दीप्तिदिशिस्थितः सन् ।
ध्वांक्षो विरूक्षं विरुवन् करोति निरीक्षमाणः ककुभं प्रदीप्ताम् ॥
काकः प्रशस्ताभिमुखोऽतितुल्यं दीप्ताश्रितो दुष्टफलं ददाति ।
शान्ताश्रितः शान्तदिगीक्षणेन रूक्षारवोऽल्पं कथयन्त्यनिष्टम् ॥
शान्तारवः शान्तककुप्प्रदेशे तिष्ठन् प्रदीप्तां ककुभञ्च पश्यन् ।
ददात्यभीष्टं फलमल्पमेव दीप्तारवो यस्तु तदेव पूर्णम् ॥
आकारचेष्टारवभावविज्ञा दग्धादिकाष्ठादिनयोः प्रमाणे ।
सदाभियुक्ताश्च निरूपयन्ति विदन्ति ते काकरुतं मनुष्याः" ॥

अथ नीडफलम् । तत्र वसन्तराजः—

"वैशाखमासे निरुपद्रुतेषु द्रुमेषु काकस्य शिवाय नीडम् ।
निन्द्येषु शुष्केषु च कण्टकेषु वृक्षेषु दुर्भिक्षभयादिहेतुः ॥
प्रशस्तवृक्षे यदि पूर्वशाखामाश्रित्य काकेन कृतः कुलायः ।
तद्वृष्टिरिष्टा कुशलं प्रमोदो नीरोगता स्याद्द्विजयश्च राज्ञः ॥
आग्नेयशाखारचिते सुनीडे स्याद्वृष्टिरल्पाग्निभयं कलिश्च ।
दुर्भिक्षशत्रूद्भवदेशभङ्गा भवन्ति रोगाश्च चतुष्पदानाम् ॥
याम्यासु शाखासु च वायसेन नीडे कृतेऽल्पं जलपातमाहुः ।
व्याधिप्रकोपं करकं समन्ताद्यन्नक्षयं राजविरोधिताञ्च ॥
नैर्ऋत्यशाखारचिते च नीडे पश्चाद्घनो वर्षति वर्षकाले ।
पीडा नृणां विह्वलचौरभीतिदुर्भिक्षयुद्धानि भवन्त्यवश्यम् ॥
नीडे कृते पश्चिमवृक्षशाखामाश्रित्य काकैः कथिता च वृष्टिः ।
नीरोगता क्षेमसुभिक्षवृद्धिः सम्पत्प्रमोदाश्च भवन्ति लोकाः ॥
वायव्यशाखासु कृते च नीडे प्रभूतवातालपजलाः प्रमोदाः ।
स्युर्मूषिकोपद्रवशस्यनाशः पशुक्षयोद्वेगमहाविरोधाः ॥
कुवेरशाखामधिकृत्य नीडे कृते भवेत्प्रावृषि वृष्टिरिष्टा ।
भवन्ति वृक्षे च सुभिक्षसौख्यनीरोगता वृद्धिसमृद्धयोऽस्मिन् ॥

ईशानशाखासु च वृष्टिरल्पा वैरं प्रजानामुपसर्गदोषः ।
स्याद्बान्धवानां कलहप्रवृत्तिर्मर्यादया दीयत एव लोकः ॥
वृक्षाग्रनीडे त्वभिवर्षकाले मध्येतरोर्मध्यगतोयपातः ।
तुच्छाऽपि वृष्टिः प्रभवत्यधस्तात्स्फुटं यथोक्तं प्रदिशोऽस्फुटत्वात् ॥"

**पराशरः**—"बाहुल्यात्प्राच्यां नीडीकरणं क्षेमसुभिक्षाय । आग्नेय्याञ्चाल्पवृष्टये । दुर्भिक्षं दक्षिणस्याम् । नैर्ऋत्यां व्याधिं योगक्षेमञ्च । वारुण्यामवर्षम् । वायव्यां कालोपद्रवमतिवर्षञ्च । कौबेर्यामल्पवर्षणं सुभिक्षं क्षेमञ्च । ऐशान्यामल्पवृष्टिः प्रजानामुपसर्गदोषश्च । ब्राह्म्यामुच्चेषु वर्षं मध्ये मध्यं वृष्टिर्निम्नेष्ववर्षमेव । मृदुदृष्टेषु च प्रावृट् सम्पच्छस्यसम्पच्च । विपर्ययमसारेषु च । पूर्वोत्तरेण क्षीरवृक्षेषु निवसन्तः क्षेमाय ।"

**वराहः**—"शरदर्भगुल्मवल्लीधान्यप्रासादगेहनिम्नेषु ।
शून्यो भवति स देशः चौरानावृष्टिरोगार्त्तः" ॥

नीडेष्विति सम्बन्धः । **वसन्तराजः**—

"निम्नप्रदेशे तरुकोटरे वा वल्मीकवल्लीव्रततीप्रकीर्णे ।
काकस्य नीडे त्ववृष्टिदोषाद् भवन्ति शून्यो नियमेन देशः ॥
अवृष्टिरोगारिभयादिवृद्धिं विद्यादभूमौ बलिभुक् कुलाये ।
शुष्के च वृक्षे द्रुमपत्रराशौ प्राकाररन्ध्रेऽरिभयं प्रभूतम्" ॥

**पराशर**—'प्रासादाट्टालध्वजक्षेत्रेषु नीडानि चेत्कुर्युस्ततस्वामिनो विनाशं विद्यात् । वृक्षकोटरस्थलेषु वर्षा ।

**अथाण्डफलम्**—

काकानामेकाण्डता अप्रसूतिश्च न शिवाय । बहुष्वण्डेषु जातेषु यदि एकाण्ड एवावशिष्यते तदेकाण्डता शुभा भवति । यद्येक एव जायते स वारुणः शुभो भवतीति ।

**विष्णुधर्मोत्तरे**—"एकाण्डता तु काकानां यदि चैवाप्यनण्डता ।
निम्नेषु सन्निवेशेषु देशनाशकरः स्मृत." ॥

वराहः—"अण्डावकिरणमेकाण्डजाप्रसूतिश्च न शिवाय"।

वसन्तराजस्तु—

"एकं भवेद्वारुणमग्निसंज्ञं द्वितीयकं मारुतजं तृतीयम्।
ऐन्द्रं तथा नाम चतुर्थमेवमण्डानि काकयाः परिकीर्त्तितानि॥
काकया भवेद्वारुणमण्डलं चेत्पृथ्वी तदा नन्दति सर्वशस्यैः।
मन्दप्रवर्षोऽनलसंज्ञकाण्डे नोप्तस्य बीजस्य भवेत्प्ररोहः॥
जातानि शस्यानि समीरजेऽण्डे खादन्ति कीटाः शलभाः शुकाद्याः।
क्षेमं सुभिक्षं मुदिता धरित्री स्यादिन्द्रजेऽण्डेऽभिमतार्थसिद्धिः"॥

वराहः—'द्वित्रिचतुश्शावत्वं सुभिक्षदं पञ्चभिर्नृपान्यत्वम्"।

पराशरः—"द्वित्रिचतुश्शावप्रादुर्भावे योगक्षेमम्। एकशावतायां निरपत्यतायां च दुर्भिक्षम्"।

वराहः—"काकानां श्रवणे द्वित्रिचतुश्शावाः शुभावहाः।
चौरकश्वेतचित्राश्च वर्णाश्चौराऽग्निमृत्युदाः॥
अण्डावकिरणे ध्वांक्षा दुर्भिक्षमरकावुभौ।
शावानां विकलत्वे वा निश्शावास्त्वेकशावकाः"॥

चौरक इति गन्धद्रव्यविशेषः।

तथा—"वायसानां कृष्णशुनां नादस्तेषां तथैव च।
अनिशं श्रूयते यत्र तत्रापि सुमहद्भयम्॥
काका निशासु च गृहेषु च सम्प्रविष्टाः
सूर्योदये खलु शिवाद्रुतमुक्तनादाः।
गृध्राश्च मण्डल - समुत्पतिता भ्रमन्ति
नाप्तं भयं जनपदस्य निवेदयन्ति॥

पराशरः—"सर्वश्वेतः सामुद्रः सर्वजनपदे दृश्येत, अयोगक्षेमाय स्यात्"।

मात्स्ये—"काको मैथुनशतश्च श्वेतश्च यदि दृश्यते।
राजा वा म्रियते तत्र स वा देशो विनश्यति"॥

अत्रानुक्तविशेषशान्तिषु मृगपक्षिविकारविहिता शान्तिः फलगुरुलाघवमवगम्य कर्त्तव्येति ।

**वसन्तराजः**—"काकास्त्विहोत्पातयुगं पृथिव्यां महाभयं शाकुनिका वदन्ति ।
यदा त्वसौ मैथुनसन्निविष्टो दृश्येत यद्वा धवलः कदाचित् ॥
उद्वेगविद्वेषभयप्रवास—बन्धुक्षयव्याधिधनापहाराः ।
वृद्धिप्रणाशः कुलटापवादो नृणाम्भवत्यद्भुतदर्शनेऽस्मिन् ॥
शमाय तत्सूचितदुःखराशेः स्नानं वहिस्तत्क्षणमेव कुर्यात् ।
आत्मीयशक्त्या च सदक्षिणाभिर्द्विजाय दद्याद्वसनाशनानि ॥
नयेदहः शेषसुधर्मकर्मणा शयीत भूमावकृतान्नभक्षः ।
स्नात्वा प्रभाते विदधीत शान्तिं दद्यात्स्वशक्त्या द्रविणं द्विजेभ्यः॥
हविष्यभोजी न भजेच्च नारीं दिनानि सप्त त्रिगुणानि यावत्।
अकाकघातव्रतमादधीत बलिञ्च दद्याद् बलिभोजनेभ्यः ॥
देशेऽपि यत्राद्भुतमेतदुग्रमालोक्यते तत्र समापतन्ति ।
अवृष्टिदुर्भिक्षभयोपसर्ग—चौराऽग्निशत्रूद्भवधर्मनाशाः ॥
कर्माणि तस्योशमाय राजा प्रवर्त्तयेच्छान्तिकपौष्टिकानि ।
अन्नार्थगोभूमिवसूनि दद्याद्युद्धं विदध्यान्न च यावदब्दम् ॥"

अत्राप्येतदशक्तौ फलगुरुलाघवमवगम्य कनकान्नगोमहीदान-सावित्रीमन्त्रकरणकहोम-स्वस्त्ययनादिका सामान्या शान्तिरवगन्तव्येति ।

इति वायसाद्भुतम् ।

## अथ शुनकाद्भुतम्

**पराशरः**—"अथ श्वा श्वेतलोहितपीतकृष्णो ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रमशो निमित्तमभिदधाति ।"

**वसन्तराजः**—

"श्वेता द्विजा क्षत्रियकाश्च रक्ताः पीताश्च वैश्या असिताश्च शूद्राः ।
विमिश्रवर्णाः शुनकास्तथेह भवन्ति नानाविधकानुसंज्ञाः ॥

स्वजातिरूपेण विशेषतोऽमी सर्वे समस्तैरपि वा गवेष्याः ।
कौलेयकास्तेषु वदन्ति शस्तं कार्येषु सर्वेष्वपि कृष्णवर्णम् ॥
दृष्ट्वा शशाङ्कं यदि निर्विशङ्कः करोति शब्दं मुदितान्तरात्मा ।
तज्जागरूको विदधाति सौख्यं जनस्य सर्वं दुरितं निहन्ति ॥
उपस्थितप्राक्तनपुण्यपाकात् पुरःस्थितो दक्षिणपाणिना श्वा ।
शिरः स्पृशन्नुल्लसितान्तरात्मा यो मण्डलो मण्डललाभदोऽसौ ॥
क्रीडां विधत्ते शुभावेषितो यः सोऽभीष्टयोगं विदधाति पक्षः ।
पक्षो हरिद्रामिषगैरिकाद्यैः पूर्णाननो वक्ति सुवर्णलाभम् ॥
दृष्टि पुरः पुष्पफलांकुरेषु चिरं दधानो निधिलाभकारी ।
यः पल्लवैः क्रीडति वृक्षमूलं तथेक्षतेऽसौ वदतीति सौख्यम् ॥
रक्ताक्तमूर्धाभिमुखं समेति यो मण्डलः सोऽवनिलाभहेतुः ।
स्थितो न तेषां यदि च प्रदेशे पादेन कण्डूयति दक्षिणेन ॥
शिरःप्रदेशे नयने चरस्य तद्वित्तलाभं विदधाति सद्यः ।
स्थाने मनोज्ञे विधाति मूत्रं सन्तुष्टवेषः शुभावेषितः श्वा ॥
रम्यस्वनो यः सरमासुतोऽसौ करोत्यभिप्रेत्य यथार्थलाभम् ।
सिद्धान्नविद्धः फलमांसवक्त्रो लाभाय पक्षोऽभिमुखः सदैव ॥
सहस्रपादादिकलादिकस्तु स्तोकैर्दिनैः स्यान्महते भयाय ।
दक्षिणां यदि करोति चेष्टितं दक्षिणेन चरणेन मण्डलः ॥
लाभदो यदि यदा तदा भवेद्ग्रामकेन खलु तत्र लाभदः ।
काण्डनीमुशलकाञ्जीकधानीसूपकर्विकृतदक्षिणचेष्टम् ॥
लभ्यते बहुधनं शुनि मूत्रं तेषु कुर्वति तु भोज्यमभीष्टम् ।
अङ्कुरिते पल्लविते सपुष्पे फलान्विते भूरुहे सारमेयः ॥
पुष्पे फले क्षीरितरौ च पङ्के संपूर्णकुंभेऽम्भसि गोमये च ।
केदारमृत्स्नामणिकेष्टकासु प्रासादकुड्योपानत्पादुकेषु ॥
स्थानेषु वस्तुष्वपि शोभनेषु भूम्यादिलाभाय करोति मूत्रम् ।
शय्यासनच्छत्रहुताशनेषु छिद्रेषु धूलीनिवहेषु पक्षः ॥
स्थानेषु मूत्रं विसृजत्ययत्नः स्यादर्थलाभाभिमतो नराणाम् ।
मूत्रं विधायाभिमुखं प्रयाति यो जागरूकः शुभदः स पुंसाम् ॥

कार्येषु सर्वेष्वपि सर्वकालं न मूत्रयन्ती शुनकी प्रशस्ता ।
यस्येक्ष्यते वेश्मनि सारमेयः किरन्नसौ गोमयमांसविष्ठाः ।
रामां मनोज्ञां द्रविणं प्रभूत प्राप्नोत्यसौ सौख्यमनश्वरञ्च ।।
द्वारप्रदेशे जघनं निघृष्य तत्स्वागताभ्यागमनाय पक्षः ।।
करोति तत्रोपविशंश्च पुंसां समं जनेनाभिमतेन सार्धम् ।
प्रविश्य दोहे रभसेन पक्षः स्तम्भं समालिङ्गति योऽथ वाऽपि ।।
चुल्लीं समारोहति स ब्रवीति समागमं स्निग्धजनेन सार्धम् ।
फलं गृहीत्वा सहसा निवासं पक्षो विशन् जल्पति पुत्रलाभम् ।।

पराशरः—"किञ्चिद् भक्षयन् परस्य गृहं प्रविशेत्तस्य वृद्धये । आर्द्रामिषमादाय विशेच्चान्नपानलाभाय ।" वसन्तराजः—

"लिप्तपूरितचतुष्कविशेषे प्रांगणे श्वनिवहो रममाणः ।
सम्पद प्रवितरत्यतिवह्वीं तत्क्षणं न पुनरर्थकरोऽसौ ।।
उच्चावचे दक्षिणमक्षि लेढि नारीं स्वकीयामथ वाऽधिरूढः ।
शेते गृहस्योपरि जागरूकस्तदा यदाऽम्वु क्षिपति प्रभूतम् ।।
उच्चप्रदेशं भषणोधिरूह्य भवत्यभीक्ष्णं रविमीक्षमाणः ।
यदा तदा नाम चिरेण वृष्टिरम्भोदमुक्ता भवति प्रभूता ।।
वर्षासु वृष्टि सलिलेन मग्नां कुर्वन्ति चक्रभ्रमणं विशेषात् ।
अथो विधुन्वन्ति पिवन्ति तोय पक्षा यदाऽन्यत्र जलागमाय ।।
निर्गत्य तोयादभिरूह्य पालिं कौलेयकश्चेद्विधुनोति कायम् ।
तन्निश्चितं प्रावृषि वृष्टिमब्दः कृषीवलप्रीतिकरीं करोति ।।
जृम्भां प्रकुर्वन् गगनं विलोक्य यो जागरूकः कुरुतेऽशुघातम् ।।
सञ्चाल्य पार्श्वं वृषमम्बुप्रप्लुताक्षिभिः सर्वसमृद्धिशस्याम् ।
उच्चैरुवद्भिः सह कूटगेहप्रासादसंस्थैः श्वभिरुक्तकाले ।।
अत्राल्पवर्षान्नजलप्रदास्ते भवन्ति रोगाग्निजलप्रणाशाः ।
गोष्ठे यदा श्वा विधुनोति कायं तद्गोपुरे वापि पुरस्य पीडा ।।
शय्यासु शय्यातिभीतिरुच्चैर्भीतिस्तथाऽन्यस्य गृहस्य मध्ये ।।"

**वृहत्संहितायां वराहः —**

"उच्चैः स्वराः स्युस्तृणकूटसंस्थाः प्रासादवेश्मोत्तमसंस्थिता वा ।
वर्षासु वृष्ट कथयन्ति तीव्रामन्यत्र मृत्युं दहनं रुजश्च ॥
प्रावृट्कालेऽवग्रहेऽम्भोऽवगाह्य प्रत्यावर्त्तै रेचकैश्चाप्यभीक्ष्णम् ।
आधुन्वन्तो वा पिवन्तश्च तोयं वृष्टिं कुर्वन्त्यन्तरे द्वादशाहात् ॥
वृक्षोपगे क्रोशति तोयपातः स्यादिन्द्रकीले सचिवस्य पीडा ।
वायोर्गृहे शस्यभयं गृहान्तः पीडां पुरस्यैव तु गोपुरस्थः ॥
भयञ्च शय्यासु तदीश्वराणां याने भषन्तो भयदाश्च पश्चात् ।
अथापसव्या जनसन्निवेशे भयं भषन्तः कथयन्त्यरीणाम् ॥"

**विष्णुधर्मोत्तरे**—"स्कन्धावारुह्य सव्यस्थाः श्वानो रिपुविनाशकाः ।
इन्द्रस्थाने नरेन्द्रस्य पुरेशस्य तु गोपुरे ॥"

**पराशरः**—"गृहं समारुह्य लिखति पुरुषक्षयं गृहस्वामिनः। कलहायमानः श्वाऽनिमित्तकलहाय। सन्दधत् सन्धये। द्वारि चेलं गृहीत्वा परिक्रीडन् क्लेशायेति।"

**वृहत्संहितायां वराहः**—

"द्वारे शिरोऽन्यस्य वहिः शरीरो रोरूयते श्वा गृहिणीं विलोक्य ।
रोगप्रदः स्यादथ मन्दिरान्तर्बहिर्मुखः शंसति बन्धकीं ताम् ॥
एकेनाक्ष्णा साश्रुणा दीनदृष्टिर्मन्दाहारो दुःखकृत्तद् गृहस्य ।
गोभिः सार्द्धं क्रीडमाणः सुभिक्षं क्षेमारोग्यं वाऽभिधत्ते मुदं वा ॥"

**तत्रैव** —"नृतुरगकरिकुंभपर्याणसक्षीरवृक्षेष्टकासञ्चयच्छत्रशय्यासनोलूखलानि ध्वजं चामरं शाद्वलं पुष्पितं वा प्रदेशं यदा श्वाऽवमूत्र्याग्रतो याति यातुस्तदा कार्यसिद्धिर्भवेद्रार्द्रके गोमये मिष्टभोज्यागमः। शुष्कसम्मूत्रणे शुष्कमन्नं गुडो मोदकावाप्तिरथवा। अथ विषतरुकण्टकीकाष्ठपाषाणशुष्कद्रुमास्थिश्मशानानि मूत्र्यावहत्याथवा यायिनोऽग्रेसरोऽनिष्टमाख्याति। शय्याकुलालादि भाण्डाण्यभुक्तान्यभिन्नानि वा मूत्रयन् कन्यकादोषकृत्। भुज्यमानानि चेद् दुष्टतां तद्गृहिण्यास्तथा स्यादुगानतकम्। गोस्तु सम्मूत्रणेऽवर्णजः

सङ्करः। अथ गगनमुखमुपानहं सम्प्रगृह्योपतिष्ठेद्यदा स्यात्तदा कार्यसिद्ध्यै। मांसपूर्णाननेऽर्थाप्तिरार्द्रेण चास्थ्ना शुभम्। साग्न्यलातेन शुष्केन चास्थ्ना गृहीतेन मृत्युः। प्रशान्तोल्मुकेनाभिघातोऽथ पुंसः शिरोहस्तपादादिवक्त्रे भुवोऽभ्यागमः। वस्त्रचीरादिभिर्व्यापदः केचिदाहुः सवस्त्रे शुभम्। प्रविशति तु गृहं सशुष्कास्थिवक्त्रे प्रधानस्य तस्मिन् वधः। शृङ्खलाशीर्णवल्लीवरत्रादि वा बन्धनं चोपगृह्योपतिष्ठेद्यदा स्यात्तदा बन्धनम्। लेढि पादौ विधुन्वन् स्वकर्णावुपर्याक्रमंश्चापि विघ्नाय। यातुर्विरोधे विरोधस्तथा स्वाङ्गकण्डूयने स्यात्। स्वपंश्चोर्ध्वपादः सदा दोषकृदिति।"

**विष्णुधर्मोत्तरे**—"अन्तर्गृहे गृहेशस्य मरणाय भवेद्भयम्॥"

**पराशरः**—"वस्त्रखण्डं रज्जुं वा नयत्यग्निभयम्। चेल्लवणं वा धनक्षयम्। दधि तु भार्यायाः। पलायमान उपानहं प्रेष्यायाः। आनयने तु फलादिष्वेतेषु लाभम्। कण्ठानं श्वाऽऽरोहेद् भयमिति।"

**वसन्तराजः**—

"श्वा यति कस्थो विदधाति धर्मं यद्युत्कटेन स्थितिमानसेन।
उत्पादयत्याशु विरोधमुग्रं तज्जागरूकः सुहृदापि साकम्॥
उद्धूलिकोऽस्मादिति पूर्णवक्त्रो भयं पुरश्चौरभयाय पक्षः।
यस्याग्रतः श्वाऽस्थि शवं गृहीत्वा नयत्यसौ याति पुरं यमस्य॥
निर्मथ्य तोये स्ववपुर्विधुन्वन् कौलेयकश्चौरभयं करोति।
भयं त्वभीक्ष्णं पथिमन्दिरे वा ग्रीष्मेऽथवा चौरभयाय भूमेः॥
मांसास्थ्यभीक्ष्णाणि च भस्ममध्ये स्याद्गोपतेरग्निभयं प्रभूतम्॥"

**पराशरः**—"शुष्कमलफलं कण्टकिनं स्वक्षीरं वा वृक्षमवमूत्रयत्यरिप्रादुर्भावम्। अतो विपरीते धनलाभम्। तमेव खनति धनलाभम्। नवान्नपूर्णां वा स्थालीमवभूयति कन्याप्रदः। पुराणं स्त्रियाः। शय्यां भार्याया अथवा कुटुम्बिन्या मृत्युम्। शिरस्त्राणं स्त्रियं नरं वा तस्यैव धनलाभं सौभाग्यं वा। दधिपूर्णं कलशं चौरमुपस्थितं वा उदकुम्भं चौरमेव च। नवं चेच्छकटं कम्पयन् यानोद्यच्छकटं याति यानोपयुक्तं वा स्वामिनो वधम्। ग्राममध्ये ऊर्ध्वमुखो नदन् नखैर्भूमिञ्च लिखेद्भयमिति।"

बृहत्संहितायां वराहः—

"खंखेति चौच्चैश्च मुहुर्मुहुर्ये रुदन्ति दण्डैरिव ताड्यमानाः ।
श्वानोऽभिधावन्ति च मण्डलेन पैशुन्यतां मृत्युभयञ्च कुर्युः ॥
उकारवर्णे विरुतेऽर्थसिद्धिरोकारवर्णेन च वामपार्श्वे ।
व्याक्षेपमौकाररुतेन विन्द्यान्निषेधकृत्सर्वरुतैश्च यात्राम् ॥"

वसन्तराजः—

"अत्यर्थनादं यदि वाऽतिदीनं दृष्ट्वा दिने संभषणं बहूनाम् ।
कौलेयकानां विमलं विजृम्भं नदन्ति मूर्धस्वरकाः सकम्पम् ॥
विनाऽमिषं यत्र च जागरूकाः कुर्वन्ति शब्दं बहवो मिलित्वा ।
उत्पद्यते विग्रहमेव भूतेष्वत्राचिराद्विग्रहमग्रभूतम् ॥"

पराशरः—"तूर्णम्भूतं धावेयुरभीक्ष्णमुपद्रवम् । निशि शूनां संघशः सततमभिक्रन्दनं पुरविनाशायेति ।"

वसन्तराजः –

"ग्रामं निशायां खलु सारमेयाः शून्यं विधातुं सहिता रटन्ति ।
ग्रामे मिलित्वा भषणाः श्मशाने भवन्ति नाशाय च मुख्यपुंसः ॥
ग्रामस्य मध्ये बहवो मिलित्वा श्वानो मुहुः क्रूररवा रटन्तः ।
मुख्यस्य पुंसः कथयन्त्यसौख्यं श्वाऽरण्यगः स्यात्सदृशो मृगेण ॥"

पराशरः-बहुषु पथिषु नदत्सु परचक्रेणाशरीरयाताः समेत्यैकश्चेद्बहुशः पांशुं नयद्भिः क्षिप्त्वा वैकस्मिन् जलपार्श्वे क्षिपत्यविषममेव च भूमिं लिखत्यन्येषु च तृणैराच्छाद्यावतिष्ठमानेष्वम्भोभयम् । पर्वसु भूमिं पन्थानमूर्ध्वं वा प्रेक्षमाणेषु राहुदर्शनाद् ग्राममध्ये ऊर्ध्वमुखा नदन् मुखैर्भूमिं विलिखेद्भयम् । ग्रामाद् बालकान् वा समादाय गच्छेद् भयं विद्यादिति ।"

मात्स्ये—"काष्ठोन्मुखास्थिभृगास्या श्वानो मरकवेदकाः ।"

पराशरः –"सूर्योदये प्राङ्मुखं नर्दत्यग्निभयम् । अपरसन्ध्यायां गवेडकप्रवेशे वा रथ्यासु धावन्तः सारमेयाः सन्ध्ययोरुर्ध्वमुखा बहवः समं नदेयुर्भयायेति ।"

वसन्तराजस्तु—

"दिनकराभिमुखोऽस्तमये भयं निगदिताः खलु कर्षकभीतयः ।
पवनदिङ्निनदस्तु निशामुखे भवति चेतस समीरणभीतिदः ॥"

अत्रानुक्तविशेषशान्तिषु शुनकाद्भुतेषु सावित्रीमन्त्रकरणकलक्षहोमादिका मृगपक्षिविकारविहिता वा शान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्येति ।

इति शुनकाद्भुतम् ।

अथ स्वप्नाद्भुतम्

चरकः-"दृष्टं श्रुतार्थं भूतञ्च प्रार्थितं कल्पितं तथा ।
भावितं दोषजञ्चैव स्वप्नं सप्तविधं विदुः ॥
तत्र पञ्चविधं पूर्वमफलं भिषगादिशेत् " ॥

बृहद्यात्रायां—"प्रत्यक्षवद्भवति यः स्फुरतीव चान्तः
स्वप्नस्य यस्य नियमात्सदसत्फलाप्तिः ।
स्वप्नाः शुभाशुभफलाः कथिता नराणा-
मुद्वेगमात्रमिह तानुपवर्णयामि " ॥

सत्याचार्यः -"आयुस्तृतीयभागे शेषे गतिजः प्रकीर्त्तितः स्वप्नः ।
पूर्वे काले त्वागामिकोद्भवास्ते निर्देश्याः ॥
अनूक आद्ये स्मृत आयुषोंऽशे शेषे त्रिभागे गतिजः प्रदिष्टः ।
गतैष्यजात्यन्तरसत्त्वसङ्गः स्वप्ने ह्यनूके गतिजे च नित्यम् ॥
धातुप्रकोपग्रहपाकचिन्ता दुष्टाभिचारोद्भवगुह्यकोत्था ।
धातोः प्रकोपादनिलात्मकस्य तच्चाद्रितुङ्गस्थललंघनानि ॥
पित्तोऽधिके काञ्चनरक्तमाल्यदिवाकराग्निज्वलनानि पश्येत् ।
श्लेष्माधिकश्चन्द्रभशुक्लपुष्पसरित्सरोऽम्भोनिधिलंघनानि ॥
जघन्यमध्यप्रथमे निशांशे प्रावृट् शरन्माधवसंज्ञिते च ।
काले मरुतपित्तकफप्रकोपः साधारणः स्यात्खलु सन्निपातः ॥
दशासु चोक्तं ग्रहपाकजातं चिन्तावदृष्टं च तथा तथैव ।

वीभत्ससत्त्वाभिभवोपचारे विश्वोद्भवो गुह्यकजः प्रदिष्टः ॥
अनूकचिन्तागतिदोषदृष्टान्यभीक्ष्णकर्माणि च निष्फलानि ।
अदृष्टदीर्घाः कथिताश्च तद्वदनित्यपाकाः कथितावशेषाः" ॥

**पराशरः**—"तस्य त्रिविधदर्शनमपार्थक यथार्थमन्यार्थं च । मनो हि निद्रानिहिततत्त्वविज्ञानं कदाचिदतिहर्षशोकक्रोधचिन्ताभयमदप्रमोदेर्ष्याकलुषितमतिदृष्टश्रुतार्थभूतार्थभावितमाविशुद्धधातुदोषप्रकोप-प्रतापप्रतप्तेन्द्रियमिवोद्भ्रान्तमवशमभिक्षिप्तमतिबहुशोऽतिव्याकुलं दिवावृत्तं वा स्वप्नगतमनुभवति तदनियतमपार्थक चोपदिशन्ति ।

अथ कायवाङ्मनोविशुद्धानां चातिसत्त्वानां देवताः प्रत्यक्षवदभिदर्शयिन्ति तद्यथार्थमित्याचक्षते । न चानिमित्तभाविनो भावाः । कालो हि भूतार्थनिमित्तमेष्यफलबोधकं स्वप्नाख्यमभिदधाति । तदन्यथा दृष्टमन्यथानियतफलमिति भवति चात्र मनोविकारजस्वप्नमभिवाञ्छन्त्यपार्थकम् । यथार्थदर्शनार्थत्वाद्यथार्थं देवताश्रयं वा । योऽन्यदर्शनादन्यफल आत्मनिमित्तजस्तमन्यार्थमनेकार्थं प्रवक्ष्याम्यखिलार्थतोऽन्यः" ।

**अथ शुभस्वप्नम्** —

**पराशरः**—तत्रावनेर्भुजगचलनोद्धृत्य स्कन्धारोपणे वा ग्रसनमभिलंघनमर्कचन्द्रसंभक्षणं तृणमधिरोहणमुदधिसलिलसकलाभिपानमभितरणमवनेश्च रुधिरपरिप्लावनमन्त्रैरविकलपरिवारणं भुजापरिष्वजनं वा सकलवसुधाधिपत्याय । तथा स्निग्धहरितफलितसितसुरभिकुसुमकुसुमित-प्रशस्ततरुसमधिरोहणम् । बृहदमलदृढहर्म्यश्वेतगजमस्तकक्षितिधरसितशिखरज्वालितरथनृपतिशिरसामपि । नरशिरोभक्षणमसृग्ह्रदावगाहनमभिषेचनपानानुलेपनमवनिविजयाय राज्ञाम् । अराज्ञामिष्टधनविद्यासुखाधिपत्याय ।

**वृहद्यात्रायां**—"स्वाङ्गप्रज्वलनं परोपशमनं शक्रध्वजालिङ्गनं
द्रवसंयुक्तचरैर्निपत्य च तरोः प्रक्षेपणं दिक्षु च ।
वद्धो वा निगडैर्ग्रसेच्च दहनं नानाशिरो बाहुना

छत्रं वा द्विरदोऽभिषिच्य विभृयाद्दिव्योऽथवा ब्राह्मणः ।।
उडुपदिनकृद्भङ्गः शृङ्गं च्युतास्वभिषेचनम्
यदि च महिषीसिंहीव्याघ्रीगवां मुखदोहनम् ।
जठरनिसृतैश्चान्त्रैर्ग्राम-द्रुमाद्रिविचेष्टनं
विशति यदि वा सुश्लिष्टाङ्गीतनुः प्रवराङ्गना ।।
नरजहृदयमूर्धाभक्षणं वा स्वदेहे
सुतनुभुजगसिंहेभाममांसादनानि ।
तृणतरुकुसुमाम्बुप्रोद्भवो वा स्वनाभौ
क्षितिगिरिपरिवर्त्तोन्मूलने वाऽधिराज्यम् ।।
दिनकरशशितारामक्षणस्पर्शनानि
हरणमपि च मूर्ध्नः सप्तपञ्चत्रिधा वा ।
वृषभगृहनगेन्द्राश्वेभसिंहाधिरोहा
ग्रसनमुदधिभूम्याश्चाधिराज्यप्रदानि ।।
विपुलरणविमर्दद्यूतवादैश्च जित्वा
पशुमृगमनुजानां लब्धिरध्यासनं वा ।
विलसनपरिलेपोऽगम्यनारीगमो वा
स्वमरणशिखिलाभः शस्यसंदर्शनञ्च ।।
सितसुरभिमनोज्ञालेपमाल्याम्बराणां
द्विजसुरगुरुराज्ञां दर्शनान्याशिषश्च ।
मणिरजतसुवर्णाम्भोजपात्रेषु भुंक्ते
यदि दधिपरमान्नं मज्जतेऽसृग्ह्रदे वा ।।
सिततुरगफलध्वजातपत्र—व्यजनसरोजमणिद्विजेन्द्रलाभः ।
अभयविजयभुङ्क्ते वेति शब्दाः परिणतराज्यफलप्रदाः प्रदिष्टाः ।।"

**योगयात्रायाम्---**

"खं लेढि जिह्वया यः स्युरदक्षो दीर्घयाऽवरः स्वप्ने ।
अपि दासकुले जातः स सागरान्तां महीं पाति ।।
शाद्वलतीरोपान्तां वसुधां नवशस्यशालिनीमटताम् ।
पद्मानि चिन्वतां वा स्वप्नान्ते वृद्धयः पुंसाम् ।।

शोकश्चिन्ता रुदितं व्याकुलता बन्धनं वधः क्लेशः ।
वृद्धिकराण्युक्तानि स्वप्नान्ते वाऽपि मरणानि" ॥

पराशरः – "दुर्गाधिरोहणं स्वभुजचलान्मानुषामनुषामनुपद्विषदनिमित्त-पातनमसिशरकवचचापभूषणान्यप्रहरणलाभः शत्रुविजयाय । सिंहव्याघ्रतुरगर्षभगजनररथादिरोहणमलसलिलपुलिनविमलनभोग्रहार्कचन्द्रतारोदयाभिदर्शनम्, दर्शनं च सुरगुरुनृपतिसिद्धद्विजाचार्यकसितसुरभिकुसुमितवनप्ररूढवन-हरितोद्यान - विविधवन - नवशस्यपाकापाण्डु प्रवर्त्तितमहीतलानां तथाऽऽमम-त्स्यमांसभक्षिभिः स्वाङ्गारशमनं परान्नानाङ्गसंभक्षणमभिनववास्तुप्रवेशकरण-दर्शनमभिप्रवेशोऽवनिपतिमहिषीणां भवनशयनासनाङ्गज्वलनसकृदनुलेपन-प्रभक्षणमदिरान्नपान - सङ्गाभिताडनमगम्यागमनपलितपाणिसमेतवृद्धकेशश्मश्रु-नखरोम्णामभिलषितकार्यसिद्धवृद्धयेऽधमानाम् । सिंहव्याघ्रतुरगर्षभभुजङ्ग-मानां लाभश्च सितकुसुमितलतास्रग्वीणाऽऽसनशयनकर्णिकाञ्जलिकादशनयन-पादुकास्थवृककङ्काविकानां स्त्रीलाभाय । वृश्चिकादिदर्शनं मणिरत्नदर्शनं काञ्चनप्रदीपगजकलभतुरगकिशोरवत्सहंसपर्भिकलाभः पुत्रलाभायेति" ।

चरकः – "स्वप्ने चोपलभेत पद्मोत्पलकुमुदामातकादीनि ।
पुन्नामधेयान्येव प्रसन्नमुखवर्णता भवेद् ब्रूयात् ॥
पुत्रमियं जनयिष्यति तद्विपरीतेति सा कन्याम्" ॥

बृहद्यात्रायाम् –

"मुद्रादृषदञ्जनीविपञ्चीस्त्रीसङ्गारिषु चाङ्गनाप्तिरुक्ता ।
लब्धे सरकेऽथ दर्पणे वा भृङ्गारादिषु चोद्भवं सुतस्य" ॥

पराशरः—"श्वेतसूक्ष्माविरजः प्रशस्ताहतवसनभृङ्गारव्यजनसितचामर-ध्वजातपत्रद्विरदपायससैन्धवलवणदधिपयः प्रशस्तमितकुसुमवनशस्यलाभोऽर्थ-लाभायेति" ।

विष्णुधर्मोत्तरे—

"आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् ।
आरुह्य नावं प्रतिगृह्य वीणां भुक्त्वा रुदित्वा ध्रुवमर्थलाभः ॥

स्वप्ने भवेद्यः कृमिपूर्णदेहैरपेक्षते गात्रविभूषणञ्च ।
विष्ठाऽनुलेपो रुदितं क्षतञ्च स्वप्ने त्वगम्यागमनञ्च धन्यम् ॥
यस्तु प्रश्यति स्वप्नान्ते राजानं कुञ्जरं हयम् ।
सुवर्णं बृषभञ्चाञ्च कुटुम्बस्तस्य वर्द्धते ॥
क्षीरिणं फलितं वृक्षमेकाकी योऽधिरोहति ॥
अपि दासकुले यातः स भूपालो भविष्यति ।
दीप्तमन्नं फलं पुष्पं कन्यां छत्रं ध्वजं रथम् ॥
यस्तु पश्यति स्वप्नान्ते तस्य श्रीः सवतोमुखी ॥
मानुषानाञ्च मांसानि स्वप्नान्ते यस्तु भक्षयेत् ।
हरितानि च पक्वानि तस्यापि श्रृणु ये गुणाः ।
पादे पञ्चशतं लाभः सहस्रं वाहुभक्षणे ।
राज्यं शतसहस्राणि लभेन्मस्तकभक्षणे ॥
अस्त्रैर्वेष्टयते यस्तु ग्रामं नगरमेव वा ।
ग्रामे स्यान्मण्डलाभोगी नगरे पार्थिवो भवेत् ॥
नौकाञ्चारोहयेद्यस्तु भिन्नां लब्ध्वा समुत्तरेत् ।
प्रवासं निर्दिशेत्तस्य शीघ्रमागमनं पुनः ॥
बलाकीं कुक्कुटीं क्रौञ्चीं लब्ध्वा यः प्रतिमुच्यते ।
स भार्यां लभते हृद्यां सरलां प्रियवादिनीम् ॥
नित्यमभ्यर्चितां दृष्ट्वा प्रतिमाञ्च विशेषतः ।
व्यवहारे जयस्तस्य बलञ्च विपुलम्भवेत् ॥
आदित्यमण्डलं स्वप्ने चन्द्रं वा यदि पश्यति ।
रोगैर्विमुच्यते रोगी चारोगी श्रियमाप्नुयात् ॥
यस्तु श्वेतेन सर्पेण दशते दक्षिणे भुजे ।
धनलाभो भवेत्तस्य सम्पूर्णे दशमे दिने ॥
निगडैर्बध्यते यस्तु क्रोशते यः पुनः पुनः ।
पुत्रश्च जायते तस्य दशकर्म विनिर्दिशेत् ॥
रुधिरं पिवति यः स्वप्ने सुरां वाऽपि कथञ्चन ।
ब्राह्मणो लभते विद्यामितरस्तु लभेद्धनम् ॥

यस्तु मध्ये तलापस्य भुञ्जीत दधि पायसम् ।
विस्तीर्णे पुष्करे पात्रे पार्थिवोऽसौ न संशयः ॥
उरगो वृश्चिकश्चैव जलौका दृश्यते यदि ।
विजयश्चार्थलाभश्च पुत्रलाभो भवेदिति ॥
दधि दृष्ट्वा भवेद्बृद्धिर्गोधूमैश्च धनागमः ।
यवैर्यज्ञागमो विद्याल्लाभः सिद्धार्थकेन तु ॥
फलिते फलितं विद्यात् पुष्पिते बृद्धिमाप्नुयात् ।
धूमायन्तं ज्वलन्तं वा धमायन्तञ्च श्रियावहम् ॥
आसने शयने याने शरीरे वा हुताशने ।
शुक्लाम्बरधरा नारी शुक्लगन्धानुलेपना ॥
अवगूहति यं स्वप्ने तस्य श्रीः सर्वतोमुखी ।
पीताम्बरधरा नारी पीतगन्धानुलेपना ॥
अवगूहति यं स्वप्ने लक्ष्मीन्तस्य विनिर्दिशेत् ।
सर्वाणि शुक्लानि सुशोभनानि कार्पासभस्मास्थिकपालवर्जम् ॥
सर्वाणि कृष्णानि विनिन्दितानि गोहस्तिदेवद्विजवाजिवर्जम् ।
शैलप्रासादनागाश्ववृषभाणाञ्च रोहणम् ॥
द्रुमाणां श्वेतपुष्पाणां गजानाञ्च तथा द्विज ।
तृणद्रुमोद्भवो नाभौ तथैव बहुलाभता ।
तथा च वहुशीर्षत्वं पतितोद्भव एव च ॥
सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता ।
चन्द्रार्कताराग्रसनं परिमार्जनमेव च ॥
भूम्यम्बुधीनां ग्रसनं शत्रूणाञ्च वधक्रिया ।
जयो विवादद्यूतेषु संग्रामेषु तथा द्विज ॥
भक्षणञ्चार्द्रमांसानां मत्स्यस्य पायसस्य च ।
दर्शनं रुधिरस्यापि स्नानं वा रुधिरेण च ॥
सुरारुधिरमद्यानां पानं क्षीरस्य चाऽप्यथ ।
अन्त्रैर्विचेष्टनं भूमौ निर्मलं गगनन्तथा ॥
मुखेन दोहनं शस्तं महिषीनां तथा गवाम् ।
सिंहीनां हस्तिनीनाञ्च वडवानान्तथैव च ॥

प्रासादो देवविप्रेभ्यो गुरुभ्यश्च तथा शुभः ।
अम्भसा त्वभिषेकस्तु गवां शृङ्गश्रुतेन च ॥
चन्द्राद् भ्रष्टेन वा राज्ञां ज्ञेयं राज्यप्रदं हि तत् ।
राज्येऽभिषेकश्च तथा छेदनं शिरसोऽपि वा ॥
मरणं वह्निलाभश्च वह्निदाहो गृहादिषु ।
लब्धिश्च राज्यलिङ्गानां तन्त्रीवाद्याभिवादनम् ॥
तथोदकानां तरणं तथा विषमलंघनम् ।
हस्तिनीवडबानाञ्च गवाञ्च प्रसवो गृहे ॥
आरोहणमथासाञ्च रोदनञ्च तथा शुभम् ।
वरस्त्रीणां तथा लाभस्तथालिङ्गणमेव च ।
निगडैर्बन्धनं धन्यं तथा विष्ठानुलेपनम् ॥
जीवितां भूमिपालानां सुहृदामपि दर्शनम् ।
दर्शनं देवतानाञ्च विमलानान्तथाम्भसाम् ॥
शुभान्यथैतानि नरस्तु दृष्ट्वा प्राप्नोत्ययत्नाद् ध्रुवमर्थलाभः ।
स्वप्नानि धर्मज्ञभृतां वरिष्ठ व्याधेर्विमोक्षन्तु तथाऽतुरोऽपि ॥"

**अथाशुभं स्वप्नमाह पराशरः –**

"श्ववानरोष्ट्रखरनकुलमार्जारमहिषवराहद्वीपिभासाद्यप्रशस्तान्यदंष्ट्रिनखिक्रव्याददर्शनमभिद्रवणं वातक्लेशाय । यानं व्याधये । वधो बधाय । निपातः पराजयाय । केशलोमनखदर्शनपातनं मणिरत्नाभरणपतनं छेदनाय । हरणं व्याधिक्लेशबन्धुनाशाय । श्मश्रुकर्मोन्मर्दनं सकृन्मूत्रकरणं नग्नताऽत्मनो घृततैलवसनाभ्यङ्गवसनादिविकृतपुरुषस्त्रीभिरमानुषैरसकृदभिद्रवणं पक्वमत्स्यभक्षणं व्याधिक्लेशभयाय । विरेचनमन्नक्षयाय । घृतोदपूर्णकुम्भकमण्डलूपस्थानच्छत्रसूत्रवद्धरज्जुदर्शनं लाभो वाऽध्वगमनाय । मत्तप्रव्रजितनग्नशौण्डिकप्रशुष्कनदीह्रदतीर्थाभिदर्शनं शुकमयूरगोधामूषिकाजाविकनटनर्त्तकाश्ववारणगीतवादनं स्वयं वा गीतनृत्यवादनं कांस्यभाण्डावभेदः सेतुतरूच्छेदः प्रवेशस्तमसि शून्यभिन्नागारेषु च शुष्कवृक्षदर्शनारोहणमवनेर्विचलनमशनिमेघनभोनीहारदर्शनं क्रमिकीटपतङ्गदशमशकमक्षिकाभिदर्शनमभिलपनं च । अञ्जनत्रपुताम्रशीशलोहाभावो रथशिखरयानच्छत्रावपतनं मज्जनं वा कलुषजले

पङ्कवल्मीकपांशुसिकताऽधिरोहणमवसनं वा कलिक्लेशानर्थाय। स्वभवनप्रासादहर्म्यनिपतनमभिनिष्क्रमणं वा स्वगृहादुत्थितरुदितानामङ्गनानामङ्गुलीभिः सम्मार्जन्या वा मार्जनं सर्वस्वनाशाय। चन्द्रार्कनिपतनमभिप्लवो वा चक्षुर्व्याघाताय पार्थिवोपद्रवाय वा। नगरपुरशिखरतोरणेन्द्रध्वजसुरपतिभवननिपतनं नृपतिविघाताय स्वपतिक्लेशाय वेति।"

बृहद्यात्रायां वराहः—

"नाभेरन्यत्रगात्रे तृणतरुकुसुमप्रोद्भवः स्नेहपानं
क्रीडायां नोपभोगाः खरकपिकरभव्यालरौद्रैश्च सत्त्वैः।
कायस्यालेपनं वा कलुषजलमसीगोमयस्नेहपङ्कै-
र्दृग्जिह्वादन्तबाहुप्रयतनमथ वाऽनर्थशोकप्रदानि ॥
गीतक्रीडितभूषितप्रहसित - प्रेंखेलितास्फोटिता-
न्यर्केन्दुध्वजतारकानिपतनं श्रोतोवहाधोगमः ।
रज्जुच्छेदचिताप्रपातजननीगात्रप्रवेशस्तथा
स्वप्ने कांस्यविवर्णनञ्च शिरसि क्लेशामयानर्थदम् ॥
स्थलपशुमृगकीटानूपचमण्डिजानां
प्लवनमुदकनाशौ स्याद्विवाहोत्सवो वा ।
सरसिजजतुभाण्डक्रीडनं नर्तनं वा
मलिनविवसनत्वं वाऽऽशु शोकप्रदानि ।
पुंद्रव्यनाशेषु हृताद्वियोगश्छेदश्च पाणेः कमलापहारे।
प्रासादशृङ्गादिशिरोवतारा: स्वप्नेषु नेष्टाः खलु संप्रदिष्टाः ॥
सर्पे कर्णं नासिकां वा प्रविष्टे तच्छेदः स्याद्वेष्टने चाशु बन्धः ॥
लास्ये प्राप्नोति बधं रुदिते हास्यं प्रगीतके रोगः।
पवनं कलहप्रायं प्रतिलोमफलः किल स्वप्नः ॥
चित्रं कर्म विचित्रं यः पश्यति नैव वर्त्तितं स्वप्ने।
शोकः समाश्रयेत्पतितं वासार्थमिवाण्डजे वृक्षम् ॥
स्वप्ने पिवतः पुंसो विरेचनं स्नेहमौषधं वाऽपि।
रोगो ग्लपयति देहं हिमकिरणपात इव पद्मम् ॥

मञ्जर्योदधियात्राशयबलबालोषिता रजतयष्टिः ।
बभ्री सकोषवीणा कार्यलाभाय लभ्यन्ते ॥
व्यावल्गितविक्रीडितविलसितसंगीतनृत्यहसितानि ।
स्वप्ने प्रतिबुद्धानामायासकराण्यभिहितानि ॥
हरिणारोहे भ्रमणं मृत्युर्न चिरेण शूकरारोहे ।
उष्ट्रारोहे व्याधिर्वृद्धिः स्यात् कुञ्जरारोहे ॥"

**योगयात्रायां वराहः**—

"श्मश्रुकेशनखदैर्घ्यकर्त्तनं वानरीविकृतनार्युपासनम् ।
रक्तवस्त्रसरुजाङ्गनार्दनं रोगमृत्युभयशोकतापदम् ॥"

**विष्णुधर्मोत्तरे**--"रक्ताम्बरधरा नारी रक्तगन्धानुलेपना ।
अवगूहति यं स्वप्ने व्याधिं तस्य विनिर्दिशेत् ॥
दन्ता यस्य विशीर्यन्ते केशा यस्य पतन्ति च ।
धननाशो भवेत्तस्य पीडा वापि शरीरतः ॥
अभिद्रवन्ति यं स्वप्ने शृङ्गिणो दंष्ट्रिणोऽपि वा ।
वानरा वा वराहा वा तस्य राजकुलाद्भयम् ॥
अभ्यङ्गितस्तु तैलेन रजसा ज घृतेन च ।
स्नेहेन वा तथाऽन्येन व्याधिन्तस्य विनिर्दिशेन् ॥
यस्तु पश्यति स्वप्नान्ते स्वीयञ्चालङ्कृतं वपुः ।
विवाहं मरणं वाऽपि व्याधिन्तस्य विनिर्दिशेत् ॥
नाभिं विनाऽन्यगात्रेषु तृणवृक्षसमुद्भवः ।
चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ॥
मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ।
उच्चात्प्रपतनञ्चैव दोलारोहणमेव च ॥
अर्जनं पद्मलोहानां हयानामपि मारणम् ।
रक्तपुष्पद्रुमाणाञ्च चाण्डालस्य च दर्शनम् ॥
वराहर्क्षखरोष्ट्राणान्तथा चारोहणक्रिया ।
भक्षणं पक्षिमांसानां तैलस्य कृशरस्य च ॥

नर्त्तनं हसनञ्चैव विवाहो गीतमेव च।
तन्त्रीवाद्यविहीनानां वाद्यानामपि वादनम् ॥
स्रोतोवहाभिगमनं स्नानङ्गोमयवारिणा।
पङ्कोदकेन च तथा वर्हतोयेन वाऽप्यथ ॥
मातुः प्रवेशो जठरे चितारोहणमेव च।
शक्रध्वजाभिगमनं पतनं शशिसूर्ययोः ॥
दिव्यान्तरिक्षभौमानामुत्पातानाञ्च दर्शनम्।
देवद्विजातिभूपानां प्रजानां क्रोध एव च ॥
आलिङ्गनं कुमारीणां पुरुषाणाञ्च मैथुनम्।
हानिश्चैव स्वगात्राणां विरेकवमनक्रिया ॥
दक्षिणाशाभिगमनं व्याधिनाऽभिभवस्तथा।
फलोपहारश्च तथा शाद्वलानां विशोधनम् ॥
गृहाणाञ्चैव पातश्च गृहसंमार्जनन्तथा।
क्रीडा पिशाचक्रव्यादवानरान्त्यनरैरपि ॥
परादभिभवश्चैव तस्माच्च व्यसनोद्भवः।
कषायवस्त्रधारित्वं तद्वस्तुक्रीडनन्तथा ॥
स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम्।
एवमादिनि चान्यानि दुःस्वप्नानि विनिर्दिशेत् ॥

अथ स्वप्ने विशेषमाह मत्स्यपुराणे—

"एकस्यां यदि चेद्रात्रौ शुभं वा यदि वाऽशुभम्।
पश्चाद दृष्टश्च यस्तत्र तस्य पाकं विनिर्दिशेत् ॥
तस्मात्तु शोभने स्वप्ने पश्चात्स्वापो न विद्यते।
प्रत्यूषे मङ्गलं कृत्वा पश्चात्प्रस्तरणं शुभम्" ॥

वृह्द्यायात्रां वराहः—

"दृष्ट्वा स्वप्नं शोभनं नैव स्वप्यात् पश्चाद्दृष्टो यः स्वपाकं विधत्ते।
शंसेद्दुष्टं तज्ज्ञसाधुद्विजेभ्यस्ते चाशीर्भिः पूजयेयुर्नरेन्द्रम्" ॥

तेन शुभस्वप्नदर्शनानन्तरं प्रस्वापो नैव शोभनः। अशुभस्वप्नदर्शनोत्तरं शयनमपि न दोषाय। कदाचिच्छुभस्वप्नदर्शनेन पूर्वदृष्टाशुभस्वप्नदोषनाशसंभवादिति।

अथ रिष्टस्वप्नमाह पराशरः—

"श्वावानरोष्ट्रखरनकुलमार्जारमहिषवराहद्वीपिश्येनभासाद्यप्रशस्तान्यदंष्ट्रिनखिक्रव्यादानामधिरोहणं नग्नं वाऽऽरूह्य याम्याशाभिगमनं मज्जनं वा क्वचिद्भस्मरक्तचन्दनतैलमसी - प्रलिप्तगात्राशोकपुण्डरीकभृतो विसानि भक्षयतः पांशुसिकतागोमयेषु महति कलुषह्रदे वा निमज्जनं तथा कुसुमितकिंशुककोविदारकरवीरचैत्ययष्टिरूपाधिरोहणं करवीरकमलदलमालाबन्धो वा भृष्टयवमसिभस्मतैलजशापानं गात्रानुलेपनं वा मरणायेति"।

कालावल्यां—"गृध्रश्च काकगोमायुरक्षः प्रेतपिशाचकैः।
भक्ष्यते प्रोक्ष्यते वाऽपि खरजात्युष्ट्रसैरिभैः॥
आत्मा यदीदृशः स्वप्ने दृश्यते भावविह्वलः।
तत्राब्दैके गते नूनं गम्यतेऽन्तकवश्यता॥

विष्णुधर्मोत्तरे—"सुवर्णं रजतं मूत्रं पुरीषं वमते निशि।
स्वप्ने स दशमे मासि प्रयाति यममन्दिरम्"॥

देवलः—"छर्दिमूत्रपुरीषेषु सुवर्णरजतप्रभम्।
प्रत्यक्षमथवा स्वप्ने नवमासान् स जीवति"॥

पराशरः—"सुवर्णरजतमूत्रपुरीषाणां वा स्वप्ने छर्दनं दशमे मासि मरणाय। अथ यक्षरक्षः - प्रेतपिशाचानां स्वप्ने दर्शनमतीन्द्रियाणां नवमे मासि मरणायेति"।

कालावल्यां—"रक्तगन्धप्रलिप्ताङ्गो रक्तमाल्योपशोभितः।
तैलाभ्यक्तोऽतिभीतश्च मुण्डितो रक्तवस्त्रधृक्॥
खरमारुह्य वेगेन दक्षिणां दिशमाव्रजेत्।
यस्यात्मा दृश्यते स्वप्ने तन्नाशो वत्सरार्धतः"॥

मार्कण्डेयः– "करालैर्विकटैः कृष्णैः पुरुषैरुद्यतायुधैः।
पाषाणैस्ताडितः स्वप्ने सद्यो मृत्युं व्रजेन्नर." ॥

देवलः—"कृष्णैश्च विकटैश्चैव पुरुषैश्चोद्यतायुधैः।
पाषाणैस्ताडयते स्वप्ने षण्मासान् न स जीवति" ॥

कालावल्यां–"लोहदण्डयुतं कृष्णं नरं कृष्णपरिच्छदम्।
स्वप्ने च पार्श्वतो दृष्ट्वा त्रिमासान् मृत्युराप्यते" ॥

देवलः–रक्तगन्धाम्बरः स्रग्वी गच्छेद्वा दक्षिणामुखः।
खरोष्ट्रमपि वा रोहेत्त्रीन् मासान् नाभिजीवति।
दृष्ट्वाऽत्मानं मृतं स्वप्ने द्वादशाहं स जीवति" ॥

मार्कण्डेयः–"केशाङ्गारं तथा भस्म भुजङ्गान् निर्जलां नदीम्।
दृष्ट्वा स्वप्ने दशाहात्तु मृत्युरेकादशे दिने" ॥

देवलः–"भस्माङ्गारांश्च केशांश्च नदीं शुष्कां भुजङ्गमान्।
पश्येद्यो दशरात्रञ्च न जीवेत्तादृशः पुमान्" ॥

सुश्रुतः–"अन्तावसायिभिर्यो वा कृष्यते दक्षिणामुखः" ॥
तत्र स्वस्थस्य व्याधये व्याधितस्य मरणायेति सम्बन्धः।

लिङ्गपुराणे–"मुक्तकेशो हसंश्चैव गायन् नृत्यंश्च यो नरः।
याम्यां दिशमितो गच्छेत्तदन्तं तस्य जीवितम् ॥"

मार्कण्डेयः—"क्षुद्रवानरयानस्थो गायन् वै दक्षिणां दिशम्।
स्वप्ने प्रयाति तस्यापि न मृत्युः कालमृच्छति ॥"

वायुपुराणे–"क्षुद्रवानरयुक्तेन रथेनाशां तु दक्षिणाम्।
गायन्नथ व्रजेत्स्वप्ने विद्यान्मृत्युमुपस्थितम् ॥
उष्ट्रा वा रासभा वापि युक्ताः स्वप्ने रथाऽशुभाः।
यस्य सोऽपि न जीवेत्तु दक्षिणाभिमुखो गतः ॥

कृष्णाम्बरधरा श्यामा गायन्त्योऽप्सरसोऽङ्गनाः ।
नयेयुर्दक्षिणामाशां स्वप्नेऽप्येवं न जीवति ॥"

**मार्कण्डेयः** - "उष्ट्रासभयानेन यः स्वप्ने दक्षिणां दिशम् ।
प्रयाति तं चेज्जानीयात्सद्यो मृत्युं नराधिपः ॥"

**चरकः** - "श्वभिरुष्ट्रैः खरैर्वाऽपि याति यो दक्षिणां दिशम् ।
स्वप्ने पक्षां तथाऽऽसाद्य स जीवन्तं विमुञ्चति ॥"

**देवलः** - "कृष्णाम्बरधरा श्यामा गायन्ती वाऽप्यथाङ्गना ।
यं नयेद्दक्षिणामाशां स्वप्ने सोऽपि न जीवति ॥"

**विष्णुधर्मोत्तरे**-"कृष्णाम्बधरा नारी कृष्णगन्धानुलेपना ।
अवगूहति यं स्वप्ने मृत्युं तस्य विनिर्दिशेत् ॥
नर्त्तको यत्र दृश्यन्ते गायन्ति च हसन्ति च ।
उत्सवञ्चैव कुर्वन्ति मरणन्तस्य निर्दिशेत् ॥
खरोष्ट्रमहिषैर्यस्तु यानमारोहते नरः ।
अभ्यङ्गितस्तु तैलेन स मृत्युं शीघ्रमाप्नुयात् ॥
देवता यत्र नृत्यन्ति गायन्ति च हसन्ति च ।
आस्फोटयन्ति धावन्ति देशस्तत्र विनश्यति ॥"

**सुश्रुतः** - "कृष्णाम्बरधरानारी हसन्ती मुक्तमूर्धजा ।
यं चाकर्षति वद्ध्वा स्त्री नृत्यन्ती दक्षिणामुखम् ॥"

तस्य मरणायेति शेषः ।

**मार्कण्डेयः**- "रक्तकृष्णाम्बरधरा गायन्ति च हसन्ति याः ।
दक्षिणाशां नयेन्नारीः स्वप्ने सोऽपि न जीवति ॥"

**वायुमार्कण्डेयलिङ्गपुराणेषु**---

"नग्नं श्रवणकं स्वप्ने हसमानं महाबलम् ।
एकं वा वीक्ष्य च बहून् विद्यान्मृत्युमुपस्थितम् ॥"

वायुमार्कण्डेयपुराणयो.--
आमस्तकतलो यस्तु निमज्जेत्पङ्कसागरे ।
दृष्ट्वा तु तादृशं स्वप्नं सद्य एव न जीवति ॥"

चरकः---"लाक्षारक्ताम्बराभं यः पश्यत्यम्बरमन्तिकात् ।
सरक्तपित्तमासाद्य तेनैवान्ताय नीयते ॥"

वायुपुराणे---"यस्तु प्रावरणं शुक्लं स्वकं पश्यति मानवः ।
कृष्णं रक्तमपि स्वेन तस्य मृत्युरुपस्थितः ॥
छिद्रवासश्च कृष्णञ्च स्वप्ने यो बिभृयान्नरः ।
नग्नं वा श्रवणं स्पृष्ट्वा विद्यान्मृत्युमुपस्थितम् ॥"

लिङ्गपुराणे--श्वभ्रे यो निपतेत्स्वप्ने द्वारं चास्य पिधीयते ।
न वोत्तिष्ठति यस्तस्मात्तदन्तं तस्य जीवितम् ॥
अग्निप्रवेशं कुरुते स्वप्नान्ते यस्तु मानवः ।
नच स्मृतं न चाभिज्ञा तदन्तं तस्य जीवितम् ॥"

मार्कण्डेयः--"स्वप्नेऽग्निं प्रविशेद्यस्तु नच निष्क्रमते पुनः ।
जलप्रवेशादपि वा तदन्तं तस्य जीवनम् ॥"

चरकः---"नृत्यन्रक्षोगणैः सार्द्धं यः स्वप्नेऽम्भसि सीदति ।
स प्राप्य भयमुन्मादं याति लोकमतः परम् ॥
कलुषेऽम्भसि पङ्के वा कूपे वा तमसाऽवृत्ते ।
स्वप्ने मज्जति सोद्वेगः स्रोतसा क्रियते च यः ॥
रक्षः - प्रेतपिशाचस्त्रीचाण्डालद्रविडान्ध्रकैः ।
गृध्रोलूकैश्च काकाद्यैः स्वप्ने यः परिवार्यते ॥
वंशवेत्रलता-याततृणकण्टक-सङ्कटे ।
संगृह्यते मुह्यति च स्वप्ने यः प्रपतत्यपि ॥
भूमौ पांशूपधानानां वल्मीके वाऽथ भस्मनि ।
श्मशानायतते श्वभ्रे स्वप्ने यः प्रपतत्यपि ॥
यस्योत्तमाङ्गे जायन्ते वंशगुल्मलतादयः ।
वयांसि च विलीयन्ते स्वप्ने मौढ्यमियाच्च यः ॥

स्वप्नोऽयं व्याधितानाञ्च भयाय महते स्मृतः ।
लता कण्टकिनी यस्य दारुणा हृदि जायते ॥
स्वप्ने गुल्मस्तु मत्ताय क्रूरो विशति मानवम् ।
नग्नस्याज्यावसिक्तस्य जुह्वतोऽग्निमनार्चिषम् ॥
पद्मान्युरसि जायन्ते स्वप्ने कुष्ठैर्मरिष्यति ।
मत्तं नृत्यन्तमाविध्य प्रेतो हरति यं नरम् ॥
स्वप्ने हरति यं मृत्युरपस्मारपुरःसरः ।
शष्कुलीर्वाऽपूपान् वा स्वप्ने खादति यो नरः ॥
स्नेहं बहुविधं स्वप्ने चाण्डालैः सह यः पिबेत् ।
स चेत्प्रच्छर्दयेत् तादृक् प्रतिबुद्धो न जीवति ॥
प्रेतैः सह पिबेन्मद्यं यः स्वप्ने कृष्यते शुना ।
सुघोरज्वरमासाद्य प्रयाति यममन्दिरम् ॥
स्नेहं बहुविधं स्वप्ने चाण्डालैः सह यः पिबेत् ।
बुद्ध्यते स प्रमेहेन गृह्यते स च मानवः" ॥

पराशरः—"सुरर्षिसिद्धगणगन्धर्वयक्षनागानामुपयाचितानुबन्धे यथोक्तदर्शन-निमित्तानुबन्धिफलमिति" ।

तथा—"शुभाशुभस्वप्नविधानमुक्तमयुक्तयुक्तं च समुह्य बुद्ध्या ।
देशादिवर्णाकृतिसम्पदश्च तत्तत्फलं संपरिकल्पयेच्च ॥
पादादिपादोत्तरपादवृद्ध्या वर्षार्धमासत्रयमासकालाः ।
क्षया विभागेषु चतुर्षु दृष्टाः स्वप्ना अनिष्टेष्टफलप्रदाः स्युः" ॥

वराहः—"आद्ये वर्षाद्वत्सरार्धाद्द्वितीये पाको वर्षार्धार्धभागे तृतीये ।
मासात् पाकः शर्वरीपश्चिमान्ते सद्यः पाको गोविसर्गेषु दृष्टः ॥
भूयः प्रस्वपनं न चास्य कथनं गङ्गाभिषेको जयः
शान्तिः स्वस्त्ययनं निषेवणमिति प्रातर्गवां शृङ्गयोः ।
विप्रेभ्यश्च तिलान्नहेमकुसुमैः पूजा यथाशक्तितः
पुण्यं भारतकीर्त्तनञ्च कथितं दुःस्वप्नविच्छित्तये" ॥

**विष्णुधर्मोत्तरमात्स्ययोः--**

"स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः।
षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्त्रियामिकाः॥
चतुर्थे मासमात्रेण पच्यन्ते नात्र संशयः।
अरुणोदयवेलायां सद्यः स्वप्नफलं भवेत्"॥

**तथा** "एषामकथनं शस्तं भूयः प्रस्वप्नं तथा।
कल्कस्नानं तिलैर्होमो ब्राह्मणानाञ्च पूजनम्॥
स्तुतिश्च वासुदेवस्य तथा तस्य तु पूजनम्।
नागेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्ननाशनम्"॥

**वृहद्यात्रायां वराहः--**

"तथाम्बुसंस्पर्शनमन्त्रहोमस्तिलप्रदानं स्वप्नञ्च भूयः।
शान्तिर्जपश्चाकथनं दमश्च दुःस्वप्नहन्त्रीणि पयश्च गाङ्गम्"॥

**पराशरः--**

देवद्विजाग्नि-प्रतिपूजनानि मन्त्रोपजाप्यानि पवित्रमेव।
तिलान्नगोभूमिहिरण्यदानं दुःस्वप्नसंदर्शननाशकानि"॥

**नारदस्तु**—'चन्द्रादित्ययोराकाशे स्वप्ने चैवार्धदर्शनम्।
ततः स्नानं प्रकुर्वीत प्रभाते द्विजसत्तम॥
तिलानामयुतं तत्र जुहुयात्सुसमाहितः।
तिलोऽसीति तु मन्त्रेण ततः संपद्यते शुभम्॥
धेनुञ्च दक्षिणां दद्यात् ततः संपद्यते शुभम्।
ब्राह्मणांस्तोषयेत्तत्र दक्षिणा-भोजनादिना॥
दानञ्च द्विविधं देयमशुभानां विनाशनम्।
ततः शान्तिर्भवेत्तत्र दुःस्वप्नञ्च विनश्यति॥
षड्भिर्मासैस्तु संपूर्णैरन्यथा मरणं भवेत्"॥

**चण्डीपाठहोमादिना च दुःस्वप्ननाशस्तथाहि मार्कण्डेयः--**

"दुःस्वप्नञ्च नृभिर्दृष्टं सुस्वप्नमुपजायते"॥

भारते तु हिरण्यदानं दुःस्वप्ननाशकरमित्युक्तम् । तथाहि--

आदित्योदयसम्प्राप्तो विधिमन्त्रपुरस्कृतम् ।
ददाति काञ्चनं यो वै दुःस्वप्नञ्च प्रहन्ति सः" ॥

तत्रैव--"नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने ।
इच्छाश्राद्धं प्रकुर्वीत नवशस्याशने तथा" ॥

इति वचनाच्छ्राद्धमपि तन्नाशकमिति ।

अत्रानुक्तविशेषशान्तिषु फलगुरुलाघवमवगम्य लक्षहोम-चण्डीपाठादि शान्तिर्विधेयेति ।

## इति स्वप्नाद्भुतम् ।

## अथ पोतक्यद्भुतम्

तत्र **वसन्तराजः**--

"ग्रामेण तुल्यः स्वकटेन नीलो योऽसौ पुमान् पाण्डुरगण्डयुग्मः ।
लघ्वी ततो धूम्रनिभा च नारी तत्पोतकी युग्ममुदाहरन्ति ॥
कण्डूयमाना चरणौ नराणां विदेशयानं कुरुते कुमारी ।
मुखस्य काष्ठादिषु घर्षणेन कष्टं कुमारी वितरत्यनन्तम् ॥
वामेन यान्ती विमला विशन्ती प्रस्थापयत्यन्त्यजसंनिवेशम् ।
केशास्थिवक्त्राभरणं नराणां काष्ठानना वस्त्रमुपादधाति ॥
अङ्गारवक्त्रा क्षयकृत्कुलस्य बन्धं भयं जल्पति रज्जुवक्त्रा ।
स्नानेन धूल्यां विपदं विचेष्टोद्भ्रान्ती जलस्नानमनिष्टमाह ॥
पङ्के रुजं भस्मनि जीवनाशं शश्वत् परिभ्राजकतां विधत्ते ।
निश्चेष्टका या परतन्त्रभावमूर्ध्वानना प्रेतपुरीनिवासम् ॥
वृक्षावतीर्णा द्रविणप्रणाशं स्थानाभिघातं कुरुते प्रसुप्ता ।
रोगाभिघातं तनुबर्धनेन तिरोहितत्वेन भयं प्रसूता ॥
प्रसारणात्पक्षयुगस्य देव्याः कलिः कुटुम्बस्य परस्परं स्यात् ।
गुणाश्च दोषाश्च यदा विमिश्रा निरूप्यमाणे शकुने भवन्ति ॥
ग्राह्यास्तदा तेष्विह भूरयो ये तान् पोतकी संविदधाति पश्चात्" ॥

अत्र पोतवयद्भुतेषु मृगपक्षिविकारविहिता कनकान्नगोदानादिका शान्तिर्वा फलतारतम्यात् कर्त्तव्येति ।

इति पोतवयद्भुतम् ।

## अथ मिश्रकाद्भुतम्

**औशनसे** "उत्पाता विविधात्मानो दृश्यन्ते यत्र तत्र वै ।
देशे भवति शीघ्रं वै षण्मासाद् भयमुत्तमम् ॥"

अथ **दिव्यमिश्रकम्** । तत्र **मयूरचित्रे**—

"पतने तारकाणाञ्च तारां पश्येदरुन्धतीम् ।
त्रिशंकुं च ध्रुवञ्चैव भ्रमन्तश्चक्रवद्यदि ॥
ऋषयो व्योम्नि दृश्यन्ते तदा युद्धं महद्भयम् ॥"

अथ **दिव्यनाभसमिश्रकम्** । तत्र **पराशरः**—

"तत्र राहोरदर्शनं केतोश्च मघासु च वक्रातिपीडनं ब्रह्मराशिभेदः केतूल्काग्रहभेदश्च रोहिणीनां सौरेण सप्तर्षिध्रुवेन्दुग्रहपीडनं केतोर्वा मरक्दुर्भिक्षशस्त्रवृष्टिभिः प्रजाक्षयायेति ।"

**मार्गवीये** —"द्विवर्णे परिघे वापि त्रिवर्णे वा बलाहके ।
उदयास्तमनं कुर्याद्यदि सूर्यः कदाचन ॥
पृथिव्यां राजवंश्यानां महद्भयमुपस्थितम् ।
लोकक्षयकरं विद्याद्यदि देवो न वर्षति ॥"

**मयूरचित्रे** —"आदित्ये छिद्रमालोक्य दिवोल्कापातदर्शनम् ।
अपवराहुग्रहणे कुर्यात्सौर्यं चरुं द्विजः ॥"

अथ **नाभसमिश्रकम** । तत्र **बार्हस्पत्ये** —

"द्यौः स्याद्यदा नष्टदिवाकरप्रभा सरेणुवृष्टिर्द्विजधूमदर्शनाः ।
तथाऽतिरौद्रा ज्वलिताग्निसप्रभा न तत्र वासं विषये विदध्युः ॥"

भार्गवीये "अनस्ततानतं यत्र नभो गुलगुलायते ।
क्षिप्रं तद्द्रवते राष्ट्रं दशवर्षाणिपञ्च च ॥"

मात्स्ये--"अनभ्रे वा तथा रात्रौ श्वेतं याम्योत्तरेण तु ।
इन्द्रायुधं ततो दृष्ट्वा चोल्कापातं तथैव च ॥
दिग्दाहपरिवेषौ च गन्धर्वनगरन्तथा ।
परचक्रभयं विद्याद्देशोपद्रवमेव च ॥"

बार्हस्पत्ये--"अनभ्रे पतते विद्युदशनिर्वा घनैर्विना ।
अनभ्रे वा भवेद्वर्षं राजा राष्ट्रञ्च नश्यति ॥"

मयूरचित्रे--"प्रासादे भवने क्षेत्रे ग्राममध्ये तथा गवि ।
निर्घातोऽशनिरुल्का च पतन्ति यदि सन्ध्ययोः ॥
रात्रौ शक्रधनुर्व्योम्नि भूपदेशक्षयावहः ।
विश्ववर्त्तीति वायुश्च तीव्रो वा ग्रह एव च ॥
पतेदुल्का तथा तस्मिन् वायव्यः पच्यते चरुः ।
अप्रसूतौ प्रसूतानां स्त्रीणां यः स्मर्यते बुधैः ॥
उल्कापाते सदिग्दाहे दिशां दाहे यथाक्रमम् ।
प्रवर्त्तिते तु संग्रामे रोगोपद्रव एव च ॥
शान्तिन्तत्र प्रवक्ष्यामि सर्वोत्पातनिवर्हणीम् ।
इमा रुद्रेति मन्त्रेण समिधः कनकस्य तु ॥
अष्टोत्तरसहस्रन्तु घृताक्ता जुहुयाच्छुचिः ।
रुद्रैकादशकं जप्यं माहिषो वलिरेव च ॥
कुर्याच्छिवोत्सवञ्चैव भूमिदोहसमं ततः ।
ग्रामे वा नगरे चैव गोष्ठे च शिवसन्निधौ ॥
शान्तिकर्माणि कुर्वीत नृपादेशो द्विजातिकः ।
चरुः कार्योऽशनं तस्य पूजयित्वा द्विजांस्तथा ॥
पायसं मधुसंयुक्तं दधिसर्पिः--पयोयुतम् ।
शतमष्टाधिकञ्चैव जपेद्रुद्रं समाहितः ॥
सुवर्णं रजतं कांस्यं मणिरत्नविभूषितम् ।
ब्राह्मणाय तथा दद्याद् व्रतान्ते चैव मेदिनीम् ॥

अङ्गारवृष्ट्यां दिग्दाहे महाभयमुदाहरेत् ।
अप्रसूतौ तु या प्रोक्ता वायव्यः पच्यते चरुः ॥
वज्रोल्कापतनविद्युद्दिग्दाहाः प्रभवन्ति चेत् ।
श्वेताः पीतास्तथा रक्ताः कृष्णा विप्रादिनाशनाः ॥
श्यामा रूक्षास्तथा ध्वस्ताः शस्यपीडावहाः स्मृताः ।
लाङ्गूलाकृतयस्तासु शिखिकण्ठसमत्विषः ॥
अमात्यान्नैगमांश्चैव घ्नन्ति वै कर्षकांस्तथा ।
एषा साधारणी शान्तिः कर्त्तव्या गर्गभाषिता ॥
निर्घातश्चाशनिर्घोरा दिग्दाहश्चैव नित्यशः ।
देशभ्रंशाय बोद्धव्याः पराभूत्यै नृपस्य च ॥
अत्र साधारणी शान्तिः कर्त्तव्या गर्गभाषिता ॥"

अथ भौममिश्रकम् । तत्र पराशरः--

"चैत्यप्रासादतोरणशिखरिशिखराद्रीणामकस्मात् प्रपतनं देवध्वजेन्द्रयष्टिक्षितिपातः पत्रछेदनमवनिपतेर्विनाशाय ।"

वराहः--"शक्रध्वजेन्द्रकीलस्तम्भद्वारप्रपातभङ्गेषु ।
तद्वत्कपाटतोरणकेतूनां नरपतेर्मरणम् ॥"

वार्हस्पत्ये —"प्रासादशोपतिमहीपतिवारणाना-
मिन्द्रध्वजोच्छ्रितवनस्पतिवाजिनाञ्च ।
नैषां भवन्ति पतनानि शुभावहानि
यस्यां दिशि प्रतिभयानि तथोत्तराणि ॥
शिलोच्चयानाञ्च शिलाप्रपातो वनद्विपानाञ्च विषाणपातः ।
चैत्यद्रुमाणाञ्च तथैव पातो भयानि राज्ञः प्रतिवेदयन्ति ॥
महोरगानाञ्च विवर्त्तितानि हुताशनस्य ज्वलनं च तोयात् ।
शक्रध्वजानाञ्च तथैव पातो भयन्तु राज्ञः प्रतिवेदयन्ति ॥"

औशनसे --"नमन्ति यस्य प्रासादाः प्रज्वलन्ति च यस्य वै ।
दृढानि प्रतिशीर्यन्ते यस्य स म्रियतेऽचिरात् ॥
इन्द्रयष्टिर्भ्रंष्टते चाविशस्तो वायुरुद्व्रजेत् ।
यदा तदा विजानीयाद्राज्ञः पीडामुपस्थिताम् ॥

स्तम्भवृक्षध्वजा यत्र स्रवेयू रुधिरं वसाम् ।
धूमा येषु ज्वलेयुर्वा मन्त्रिणो मृत्युरेव च ॥

वार्हस्पत्ये—

"गिरिवरपतनं सभूमिचालं प्रतिभविता शयनस्थितान् मनुष्यान् ।
मृगशकुनिगणाश्च दीप्तवाचो महति भये सुसमुपस्थिते भवन्ति ॥
आबालवत्सा पुरचत्वरेषु गावो यदा दीप्तरवा भवन्ति ।
शृगालनादाश्च भवन्ति दीप्ता तदा भयं वेदविदो वदन्ति ॥
आरण्यो ग्रामवासी मृगशकुनिगणो ग्रामवासे वनान्ते
गृध्राणां सन्निपाता नरपतिभवने गोपुरे वा पुरे वा ।
गर्भे वा मानुषीणां खरकरभमुखानेकरूपा प्रसूति—
र्देशानां विद्रवार्थे स्थितिरिति नियता देवतानाञ्च पातः ॥
वायसानां समाजे तु शूनां नादस्तथैव च ।
अनिशं श्रूयते यत्र तत्रापि सुमहद्भयम् ॥
काकाः पुरोत्तमगृहेषु वस प्रदिष्टाः
सूर्योदये खलु शिवाहतमुक्तनादाः ।
गृध्राश्च मण्डलसमुत्पतिता भ्रमन्ति
प्राप्तं भयं जनपदस्य निवेदयन्ति ॥
मुञ्चन्ति नागा रुधिरं कराग्रैर्लोमानि दीप्यन्ति तुरङ्गमाणाम् ।
दीप्यन्ति खड्गाश्च विकोशमुक्ता भयानि राज्ञः प्रतिवेदयन्ति" ॥

औशनसे—"गोमायुर्वाशिते यत्र यूपं वाऽपि प्ररोहति ।
दृश्यन्ते मक्षिका नीलास्तत्र विद्यान्महद्भयम् ॥
वाजिवारणमुख्यानामकस्मान्मरणं भवेत् ।
इतरक्ष्मापतेस्तत्र विज्ञेया सत्वरा गतिः" ॥

बार्हस्पत्ये—

'रुवन्ति नागाः सुविमुक्तहस्ताः प्रकीर्णकेशास्तुरगा नदन्ति ।
समागता यत्र वदन्ति नार्यस्तदा भयं वेदविदो वदन्ति" ॥

वराहः--"पशुशस्त्रव्याहारे नृपमृत्युर्मुनिवचश्चेदम्"।

पराशरः—"धेनोरनुडुहां शुनां चान्ययोनिष्वाधानमन्योन्यं च स्त्रीणां परचक्रागमाय"।

गार्गीये—"संयुज्यन्ते विकारैश्चेद्वापीकूपजलाशयाः।
दीर्घादिव कुलादीनि तदा स्वामिवधो भवेत्॥
अभावे स्वामिनस्तत्र दोषो राजानमृच्छति।
अयत्नं यत्र दूष्येत तद्देशानां विपर्ययः॥

बार्हस्पत्ये —"अताड्यमानाः पटहा निःस्वनन्ति मुहुर्मुहुः।
शस्त्राणि वाहिनीनां च ज्वलन्त्यद्भुतदर्शने॥
कुलजं लक्षणोपेतं विद्वांसञ्च पुरोहितम्।
दीक्षयित्वा नृपो होमाञ्छान्तिकर्म च कारयेत्"॥
मयूरचित्रे-"यत्र प्रसूयते कन्या द्वे धेनुञ्चावरोहति।
मानुषाः क्षोभमायान्ति क्षयवृद्धिश्च शस्यते॥
तत्र साधारणी शान्तिः कर्त्तव्या गर्गभाषिता॥
अदन्ताश्च सदन्ताश्च प्रथमं चोपरि द्विजाः।
जायन्ते मानुषा यत्र तत्र ब्रूयुरमानुषाः॥
गावः फलन्ति शीर्यन्ते वारणा वाजिनस्तथा।
जलशक्रध्वजं चैव पताकाः संपतन्ति च॥
ज्वलन्ति चात्र वै कुर्यादिन्द्रहोमं विशेषतः॥

इन्द्राय स्वाहा। इन्द्र इदं शमयतु स्वाहा। शतक्रतवे स्वाहा। पत—दिन्द्रम्—इति द्वे आहूती उपरि सर्पिषा सावित्र्या जुहुयात्।
हुतान्ते दक्षिणां दद्याद्धेनुं हेमाम्बराण्यथ।
धान्यं रत्नं च दातव्यं सर्वदा शुभमिच्छता॥
अपहारे हिरण्यस्य प्रदाहे भवनस्य च।
शालामण्डपदाहे च दाहे देवकुलस्य च॥
देशदाहेऽथ देवानां नृत्ये हसितकम्पयोः।

याने धूमायने स्वेदे क्रीडने ज्वलनेऽपि च ॥
रक्तधाराश्रुतौ चैव दाहे चाहतवाससः ।
कुटुम्बस्य क्षये विद्वानिदं कर्म समारभेत् ॥
दक्षिणां त्रिविधां दद्यात्स्वर्णं ताम्रं च रूप्यकम्" ॥

ततश्चाग्नेयस्थालीपाकं श्रपयित्वा अग्नये स्वाहा । अग्निरिदं शमयतु स्वाहा । भूताधिपतये स्वाहा । अग्निर्मूर्द्धानम्--इति द्वे आहूती सावित्र्या त्रिरुपरिष्टादाज्येन जुहुयात् ।

तथा—"लाङ्गलस्य भगेद्भेदो निर्जले च जलोदयः ।
जलाधारे जलाभावो जलवृष्टिरकालजा ॥
भेकस्याकालनिध्वानं गृहात्कर्कटिका पतेत् ।
क्रौञ्चभृङ्गौ तथा भूमावुड्डिका गृह एव वा ॥
स्विद्यते घृतकुम्भश्च पयस्तैलघटस्तथा ।
दृषद्वत्यौ च शीर्येते स्थूणा स्विद्यति रोहति ॥
ज्वलत्यसृक् स्रवत्येव शाखायष्टिश्च भिद्यते ।
हस्तिनो भिद्यते दन्तो हस्तिनी चैव माद्यति ॥
गवां शृङ्गाणि भिद्यन्ते हस्ती माद्यत्यकालतः ।
गावः प्रसुवते भाद्रे हस्तिनी कर्कटेऽपि वा ॥
बालः फलति वृक्षो वा फलं बध्नाति चाप्यसौ ।
रुदन्ति वृक्षा भयतो वारुणं साधयेच्चरुम् ॥
वरुणाय स्वाहा । वरुण इदं शमयतु स्वाहा । अद्भ्यः स्वाहा ॥
उदुत्तमं वेति ऋचा सावित्र्या च घृताहुतीः ।
यथार्हं दक्षिणां दद्यात्ततः शान्तिः प्रपद्यते" ॥

तथा च—"कुमुदोत्पलपत्रञ्च नदी स्रोतसि जायते ।
कृत्तवृक्षाश्च यूपाय क्लेद मुञ्चन्ति चाक्षताः ॥
अताडिताः पतन्त्येते छिन्नभिन्नप्ररोहणाः ।
पूयशोणितगन्धाश्च देशविद्रवकारणम् ॥

जनक्षयकराश्चैव राजामात्यस्य विभ्रमः ।
पुरोहितवधार्थं च शान्तिराङ्गिरसी मता ॥
वानस्पत्येन मन्त्रेण ब्रह्मचारी जितेन्द्रियः ।
त्रिरात्रोपोषितो भूत्वा हविष्याशी पुरोहितः ॥
उदुम्बराणां समिधां सहस्रं जुहुयाच्छुचिः ।
अष्टोत्तरं द्विजेभ्यश्च भूर्देया भूरि दक्षिणा ॥
क्षीरशान्तिश्च कर्त्तव्या परमान्नं च भोजयेत् ॥"

अथ **नाभसभौममिश्रकम्** । तत्र **पराशरः**:—

"खद्योतैः परिविध्यते दिनकरः सन्ध्यागतो मण्डलै
रक्तैः कृष्णमहेन्द्रचापसदृशैः खे पूरयद्भिर्यदा ।
गावो यत्र सपूयशोणितमुरोदिग्धा भवेयुः क्वचित्
विद्यात्तत्र विमर्षणं परबलैर्भेदं स्वराष्ट्रस्य वा ॥"

**वार्हस्पत्ये**—"चैत्यद्रुमानां रुधिरप्रसेकाः कवन्धरूपाश्च घना भवन्ति ।
रक्ता च सन्ध्या रुधिरप्रदिग्धा भयानि राज्ञः परिवेदयन्ति ॥"

वृहद्यात्रायां वराहः –

"मृगपतिरासभवाजिगजानां पिवति मिश्रो न चिराद् भयदाता ।
विबुधपतिध्वजतोरणखातैः फलमिदमेव करोति नृपाणाम् ॥"

**औशनसे**—"वृष्टिविद्युत्स्वने व्यभ्रे चरस्थिरविवर्जिते ।
दिवोल्कायां च पीड्यन्ते जना नृपतिभिः सह ॥
सन्ध्याद्वयेऽभिदीप्तिर्धूमोत्पत्तिश्च काननेऽनग्नौ ।
छिद्राभावे भूमेर्दरणं कम्पश्च शान्तकरिगर्जः ॥
अनैशानि तमांसि स्युराशाधूमाः सपांशवः ।
आनग्नेयो यत्र धूमस्तत्र विद्यान्महद् भयम् ॥"

**वार्हस्पत्ये** "आनर्त्तवं पुष्पफलमकाले दुर्दिनं महत् ।
सधूमाश्च दिशो यत्र विद्याद् भयमुपस्थितम् ॥"

मयूरचित्रे---"गोधा च नकुलश्चैव सर्पो वनपशुस्तथा ।
विशन्ति भवने यत्र युध्यन्ति वृषभास्तथा ॥
बालाश्चैव विनश्यन्ति वृष्टिः सिन्दूरवर्णवत् ।
कारयेत्तत्र याम्यन्तु स्थालीपाकं समाहितः ॥
स्वर्णं च रजतं कांस्यं ताम्रं दद्याच्च दक्षिणाम् ॥"

यमाय स्वाहा । यम इदं शमयतु स्वाहा । वैवस्वताय स्वाहा । यमो धारयते पृथ्वीम्--इति द्वे आहूती हुत्वा सावित्र्या त्रिरुपरिष्टादाज्येन जुहुयात् ।

अथ दिव्यनाभसभौममिश्रकम् । तत्र पराशरः—

"विगततमसस्तोयप्रख्याः प्रशान्तमृगा दिशो
गगनमपि सौम्यर्क्षं वान्तः शिवा मृदवोऽनिलाः ।
विमलहविषा जाताः स्निग्धा गृहे विसृतत्विषः
प्रशमरतयो नष्टातङ्का भवन्त्यवनीश्वराः ॥"

वार्हस्पत्ये—इन्द्राशनिः पतति यत्र भवेत् स्फुलिङ्गो
भूः कम्पते दिनकरस्य करप्रशान्तिः ।
मांसं समापतति राशिकृतं तु यत्र
तत्रापि राजभयमापतितं वदन्ति ॥
अग्न्याभासाः प्रदोषाः प्रतिभयजनना दीप्यमाना दिशश्च
मध्याह्ने चान्तरिक्षग्रहणमुपचितं गृध्रसंघैः प्रकीर्णम् ।
निर्घाताः पांशुवर्षं सततमपि तथा भूप्रचालस्तु विज्ञै—
रादेश्या वै स्वराष्ट्रे नृपतिभयकरा राष्ट्रनाशाय चैव ॥
वनानि यत्र धूम्यन्ते दिशः सर्वाः समाकुलाः ।
चन्द्रसूर्यौ न राजेते प्रभ्रष्टौ वीतरश्मिकौ ॥
प्रमृष्टग्रहनक्षत्रा दिशः सर्वाः समाकुलाः ।
सन्ध्या चोभयथा दीप्ता तत्र विद्यान्महद् भयम् ॥

अत्रानुक्तविशेषशान्तिषु मिश्रकाद्भुतेषु प्रभूतकनकान्नगोदानादिका सामान्या शान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

**मयूरचित्रे**—"लोहितं कपिलं पीतं जलं यत्र विलोक्यते।
गन्धर्वनगरं वाऽपि रक्तं वा यदि दृश्यते॥
प्राक्सन्ध्यायां सदण्डाभा दृश्यते नागयष्टिका।
कालमण्डलकन्यार्कं उल्कायुद्धं नभस्तले॥
रात्रौ शक्रायुध चैव चन्द्रमाश्चाप्यपर्वणि।
छर्दते रुधिरं वाऽपि प्रतिमा ब्रूवते वचः॥
माषोदनं दधि घृतं मुञ्चत्यार्त्तरवं तथा।
शीर्यन्ते शान्तिमायान्ति रुधिरञ्च वमन्त्यथ॥
दह्यन्ते च तप्यन्ते नमन्ति शिविकादिषु।
अयुक्तान्यभिभाषन्ते पतन्ति च जलाशये॥
प्रतिमा यत्र तत्रापि परचक्रागमो भवेत्।
राजामात्यजनच्छेद. शान्तिः पैतामही तथा॥
औदुम्बराणां समिधां सहस्रं जुहुयाच्छुचिः।
अष्टोत्तरमुपोष्यैव त्रिरात्रन्तत्र मन्त्रवित्॥
ऐन्द्रै रुद्रैश्च मन्त्रैश्च सोपहारैस्समन्ततः।
देवालयेषु तूर्येण गन्धमाल्यादिभिस्तथा॥
स्वस्तिवाच्य द्विजान् कृत्वा गोसहस्रं प्रदापयेत्॥"

**बार्हस्पत्ये**—"ऋवन्तश्च विपर्यस्ता भयस्यैव निदर्शनम्।"

**पराशरः**—"अतिमात्रशीतोष्णविपर्ययो महते भयाय।"

**मात्स्ये**—"शीतोष्णताविपर्यासमतीव रिपुजं भयम्।"

**बार्हस्पत्ये**—"यदा शीते भवेदुष्भामुष्णं शीतमतीव च।
अनारोग्यं भयञ्चैव प्रजानामभिनिर्दिशेत्॥"

**औशनसे**—"यदा शीतं भवेदुष्णमुष्णं शीतमतीव च।
परतो नवमासाद्विद्याद्देशेषु च वै भयम्॥"

**बार्हस्पत्ये**—"आनर्त्तवं पुष्पफलमकाले दुर्दिनं महत्।
सधमाश्च दिशो यत्र विद्याद्भयमुपस्थितम्॥"

अत्र शान्तिर्मत्स्यपुराणविष्णुधर्मोत्तरयोः—

"सूर्येन्दुपर्जन्यसमीरणानां यागः स्मृतो वृष्टिविकारकाले।
धान्यञ्च गोकाञ्चनदक्षिणाश्च देयास्ततो नाशमुपैति पापम् ॥"

मयूरचित्रे—"ऋतूनाञ्च विपर्यासे रौद्रीं शान्तिं समाचरेत्।
रुद्रः संपूजितः सम्यग्जगतः शुभकृद् भवेत् ॥"

आषाढमासिकरोहिणीचन्द्रयोगे वटकणिकायाम्—

आषाढबहुलपक्षे शिशिरकरो रोहिणीसमायुक्तः।
यदि तपति गगनममलं प्रसन्नतापः सहस्रांशुः ॥
सलिलगुरुभारजलधरतडिल्लतालोलरञ्जितदिगन्तः।
अतिबहलबालचातकजलदैश्च विमिश्रमाकाशम् ॥
क्षितितनयरविजरहितः स्फटिकनिभश्चन्द्रमा निरुत्पातः।
मरुतश्च पूर्वपूर्वोत्तरोत्तराः शान्तमृगविहगाः ॥"

पराशरः "रोहिणीयोगे पुनः प्रदक्षिणो मृदुर्मारुतः स्नेहवन्ति चाभ्राणि विद्युच्छक्रचापालंकृतानि स्वादुसुरभिविमलशिशिरतावृद्धिश्चाम्भसां वृष्टिक्षेमसुभिक्षाय। यावन्तो दिवसान् निमित्तप्रादुर्भावानुबन्धस्तावद्वर्षाणि सुभिक्षक्षेमम्। आसप्तरात्राद्बिलवासिनां बिलेभ्यो निष्क्रामणं स्त्रीपुरुषबालानां प्रमोदः पक्षिणां पुष्कललक्ष्मीक्षीरवृक्षसेचनम्। तरूणामच्छिद्रस्निग्धपत्रता पुरपौरहिता सूर्याचन्द्रमसोः परिवेषणं तद्विपत्तये।"

वराहसंहितायाम्—

"पूर्वोद्भूतैः शस्यसम्पत्तिरब्दे राग्नेयाशासंभूतैरग्निकोपः।
याम्ये शस्यं क्षीयते नैरृतेऽर्घं पश्चाज्जातैः शोभना वृष्टिरब्दे ॥
वायव्योत्थैर्वायुवृष्टिः क्वचिच्च पुष्टा वृष्टिः सौम्यकाष्ठासमुत्थैः।
पुष्टं शस्यं स्थाणुदिक्संप्रवृद्धैर्वायुश्चैवं दिक्षु धत्ते फलानि ॥
उल्कानिपातास्तडितोऽशनिश्च दिग्दाहनिर्घातमहीप्रकम्पाः।
नादा मृगाणां सपतत्रिणाञ्च ग्राह्या यथैवाम्बुधरास्तथैव ॥

नामाङ्कितैस्तैरुदगादिकुम्भैः प्रदक्षिणं श्रावणमासपूर्वैः ।
पूर्णैः स मासः सलिलस्य दाता स्रुतैरवृष्टिः परिकल्प्यमूनैः ॥
अन्यैश्च कुम्भैर्नृपनामचिह्नैर्देशाङ्कितैश्चाप्यपरैस्तथैव ।
भग्नैः स्रुतैर्न्यूनजलैः सुपूर्णैर्भाव्यानि वाच्यानि यथानुरूपम् ॥
गोप्रवेशसमये वृषोऽग्रतो याति कृष्णपशुरेव वा पुरः । ।
भूरिवारि शवले तु मध्यमं नो सितेऽम्बुपरिकल्पनाऽपरैः ॥"

नामाङ्कितैरिति--रोहिणीप्रवेशसमये उदक्पूर्वदक्षिणपश्चिमासु दिक्ष्वव्रणाश्चत्वारो जलपूर्णकुम्भा रोहिणीसमाप्ति यावत्स्थापनीयाः । तत उत्तरकुम्भे संपूर्णजले तिष्ठति सति श्रावणे सुवृष्टिः । शुष्के जलेऽनावृष्टिः । मध्येऽनुपाताद्वृष्टिज्ञानं कर्त्तव्यमेव पूर्वादिकुम्भैर्भाद्रादिषु क्रमेण वृष्टिर्ज्ञातव्येति ।

पराशरः "अथास्तमयवेलायां पुरद्वारमभिगम्य निमित्तान्युपलक्षयेत् । तत्र गोगजाश्वरथप्रथमप्रवेशेषु विजयो वानरखरोष्ट्रनकुलमार्जाराश्वप्रवेशे विद्रवो नेत्राङ्गहीनेष्वशनिभयम् ।

नवोद्गीतविधातृणां वहिर्नद्याः पुराद्बहिः ।
वालानां क्रीडनं यत्र तत्र नास्ति व्यतिक्रमः ॥
दिव्यान्तरिक्षभौमानामुत्पातानां समुद्भवे । ।
रोहिण्यां चन्द्रयुक्तायां भवेत्तीव्रतरं फलम् ।

अथाषाढिकस्वात्याषाढासु चन्द्रयोगे वटकणिकायाम्—

यद्रोहिणीयोगफलं तदेव स्वातावषाढासहिते च चन्द्रे ।
आषाढशुक्ले निखिलं विचिन्त्य योऽस्मिन् विशेषस्तमहं प्रवक्ष्ये ॥
वृष्टेस्त्रिभागे प्रथमेऽतिवृष्टिस्तद्वद् द्वितीये तु सकीटसर्पाः ।
वृष्टिस्तु मध्यापरभागवृष्टे सर्वाणि शस्यानि प्रयान्ति वृद्धिम् ॥
भागे द्वितीये तिलमुद्गमाषा ग्रैष्मं तृतीये तिलशारदानि ॥"

पराशरः—"स्वातियुक्ते चन्द्रमसि घनस्निग्धस्तनितविद्युन्मालिभिरम्भोदैर्नभस उत्सादनं सुभिक्षक्षेमाय । तथैव सर्ववातप्रादुर्भावेऽपि । उल्कानिर्घा-

तकम्पोपघातैस्तद्विपर्ययः। तत्राहुः प्रथमभागे वर्षे क्षेमम्। द्वितीये शस्य-सरीसृपादिवृद्धिः। मध्ये प्रावृट्कालाप्तवर्षणम्। तृतीये व्याधिभयम्। अन्येषु सकलाहोरात्रवर्षणं च सर्वप्रावृट्संपत्तये। अथ रजन्या पूर्वभागेऽभि-वृष्टे शस्यम्। द्वितीये शिम्बिधान्यम्। तृतीये ग्रैष्मसम्पत्तये। चतुर्थभागे सर्वरसस्य विनाशायेति।"

बृहत्संहितायां वराहः—

सप्तम्यां स्वातियोगे यदि तपति हिमं माघमासान्धकारे
वायुर्वा चण्डवेगः सजलजलधरो गर्जते वाऽप्यजस्रम्।
विद्युन्मालाकुलं वा यदि भवति नभो नष्टचन्द्रार्कतारं
विज्ञेया प्रावृडेषा मुदितजनपदा सर्वशस्यैरुपेता॥
तथैव फाल्गुने चैत्रे वैशाखे मासि वाऽपि च।
स्वातेर्योगं विजानीयादाषाढे च विशेषतः।"

**बार्हस्पत्ये**— "यांश्चोवाचाङ्गिराः पूर्वं यांश्च वेदोशना कविः।
तानहं संप्रवक्ष्यामि उत्पातान् विविधानिह॥
विरुद्ध - योनिगमन - मन्यसत्त्व - प्रभूतयः।
हस्तपादाक्षि-शिरसामधिकानां प्रदर्शनम्॥
अवाक्छिरोंऽघ्रिसंयोगे गतिहीनञ्च चेष्टितम्।
विरुद्धानाञ्च सत्त्वानामन्योन्य मेलनं भवेत्॥
प्रतिस्रोतवहा नद्य इषवः प्रतिलोमगाः।
दन्तभङ्गःस्तवकर्णश्च वरवारणवाजिनाम्॥
छत्रभङ्गः प्रधानस्य इन्द्रवायुद्भ्रमो निशि।
मांसतैलविपाकाश्च चैत्यतोयपरिस्रवाः॥
शक्रध्वजपताकानां भङ्गः क्रव्यादसेवनम्।
विडालोलूकयोर्युद्धं नृपप्रासादसन्निधौ॥
पांशुना व्यावृतं व्योम रजसा तमसाऽपि वा।
लोहिताग्निप्रतीकाशं दीप्ता द्विजमृगास्तथा॥
वातवेगोऽस्तसन्ध्यासु स्फुरन्नद्योऽपसव्यगाः।
मण्डलानि समन्ताच्च सर्वतो मृगपक्षिणाम्॥

क्रव्यादराहसंघाश्च व्याकुलाः सर्वतो दिशम् ।
त्रिरात्रञ्च परं वृष्टिः प्रनष्टेन्दुदिवाकराः ॥
अनृतौ संप्रदृश्येत घोरस्तनितदीर्घता ।
वज्रादयो वा दात्यूहपुत्राः शकुनयस्तथा ॥
मण्डलाभ्यन्तरस्थाश्च भवन्ति रविचन्द्रयोः ।
आकाशे वा प्रदृश्यन्ते प्रकम्पन्ति च पर्वताः ॥
दृश्यते दिवसे वाऽपि त्वभीक्ष्णं तारका तथा ।
वर्धनं च विडालानां क्षीरवृक्षे निषेव्यते ॥
स्वरैर्दीर्घैरुलूकैश्च रसद्भिः सह विग्रहः ॥
सिंहासनानि छत्राणि भृङ्गारातपनास्तथा ।
कम्पन्त्यकस्माद्भिद्यन्ते संसर्पन्त्यारटन्ति च ।
राज्ञामघकरं सर्वमेतदुत्पातलक्षणम् ॥
सन्ध्या सदण्डपरिवेषा रजोऽर्कपरिघादयः ।
मण्डलानां समूहाश्च दिक्षु भीता रणप्रदाः ॥
क्रव्यादा वानरा द्वारि विस्फुरन्त्यारटन्ति च ।
तुण्डैश्च वायसा भूमिं कुट्टयन्तो रटन्ति च ॥
म्लायते माल्यमत्यर्थं गन्धाः कुणपगन्धिनः ।
वस्त्रेषु भक्ष्यभोज्यं च भवत्युत्पातलक्षणम् ॥
क्षौद्रं दधि च पूयञ्च प्रस्रवन्त्यर्चिता द्रुमाः ।
सारमेयाः श्मशानेषु भाषन्ते विभवन्ति च ॥
एतदौत्पातिकं ग्रामे यस्मिन् वा दृश्यते पुरे ।
तस्मिन् ग्रामे पुरे वाऽपि विद्यादरिभयं महत् ॥
अश्वत्थोदुम्बर-प्लक्षन्यग्रोध - कुसुमोद्भवः ।
श्वेतलोहितपीतानि कृष्णाणीन्द्रायुधानि च ।
एवं वर्णगुणानाञ्च पतनं देववेश्मनाम् ।
ब्राह्मणक्षत्रियविशां विनाशो राजसंवृतः ॥
भक्ष्ये भवन्त्यभक्ष्याणि तद्भयं सुमहद्भवेत् ।
घृतक्षीरजलस्रावे घृतक्षीराम्भसः क्षयः ॥

सुरास्रावे मिथो भेदो रुधिरादुष्णविन्दवः ।
गोवृषाणाञ्च रुधिरस्रुतेर्गोब्राह्मण--क्षयः ।।
फलेऽफलं यदा पश्येत्पुष्पे पुष्पसमावृत्तम् ।
गर्भाः स्रवन्ति नारीणां युवराजवधोऽपि च ।।
एणान् गजांश्च सर्पान् वा मण्डूका अर्थवाचकाः ।
मण्डूकी ग्रसते यत्र तत्र राजा च हन्यते ।।
उन्मत्तानां पशूनाञ्च चेष्टितं विकृतञ्च यत्
स्त्रियश्च यत्प्रभाषन्ते तत्र नास्ति व्यतिक्रमः ।।
पूर्वं वदति देवेषु पश्चाच्चरति मानुषे ।
नाचोदिता वा गृह्णन्ति सत्ये ह्येषा सरस्वती ।।
उत्पाताः सर्व एवैते कदाचिद्राजमृत्यवे ।
ज्ञेया देशविनाशाय राहोरागमवाचकाः ।।
कीलाम्बुधि-परिवेष-ग्रहाणामुदयाय च ।
स्वचक्रपरचक्रेभ्यो भयं वा समुपस्थितम् ।।
राष्ट्रे सेनापतौ यत्र पुरे वाऽथ पुरोधसि ।
अमात्ये वाहने कोशे नृपतौ वा फलन्ति ते ।।
एतान् समुत्थितान् ज्ञात्वा राजा सबलबाहनः ।
प्रणिपत्य गुरुं ब्रूयाद्भगवंस्त्वभयोऽस्तु मे ।।
भयमुत्पातजं सर्वं ब्रूहि किं करवाणि ते ।
इत्युक्त्वा श्रद्दधानेन राज्ञा वाञ्छितमिच्छता ।।
निमित्तानि समालोच्य कृत्वा जपसमाहितः ।
महाशान्तिं प्रयुञ्जीत सर्वोपद्रवनाशिनीम् ।।
सर्वरोगप्रशमनीं सर्वापद्विनिवारिणीम् ।
रौद्रीं कुर्यान्महाशान्तिं श्रद्धया बहुदक्षिणाम् ।।"

कङ्काद्यद्भुते आथर्वणाद्भुते –

"काकोलूकवका गृध्रा हंसाः श्येनाः कपोतकाः ।
गृहे रथे ध्वजे वाऽपि पतन्त्येतेऽप्यकारणात् ।।

उत्पन्ना मधुवल्मीकवरटाच्छत्रिका तथा ।
उत्पाट्यतेऽयथाकाले तद्विद्याददद्भुतं महत् ॥
मानुषाणां पतेद्गेहे काकी द्वारि कटायते ।
स्थूणा प्ररोहते यत्र चाद्भुतञ्च महद्भयम् ॥
अशिरा जायते जन्तुः द्वित्र्यनेकशिरास्तथा ।
सदन्ताश्चैव जायन्ते जातमात्रा हसन्ति च ॥
अजा गावो महिष्यश्च दुह्यमाना स्रवेदसृक् ।
सूर्याद्भुत विजानीयात्पूजयित्वा दिवाकरम् ॥
मध्वाज्यदधिसंयुक्ताः समिधस्त्वर्कसम्भवाः ।
यद्राजान---प्रभृतिभिर्जुहुयादाज्यमेव च ॥
धेनुः सुवर्णं वस्त्रञ्च दद्याद्धोत्रे च दक्षिणाम् ।
सर्वे दोषाः प्रणश्यन्ति ततस्सम्पद्यते शुभम् ॥
सिंहासनं रथं छत्रं चामरं ध्वजमेव च ।
अकस्माद्भङ्गमाप्नोति विना वातादिदूषणैः ॥
अनारोहणको राजा पतेत् सिंहासनादपि ।
वाहना यत्र उद्यन्ते भूमौ विशति कोकिलः ॥
चन्द्राद्भुतं विजानीयात् स्ववारेण प्रपूजयेत् ।
पूर्वोक्तेन विधानेन पलाशसमिधो घृतम् ॥
धेनुं सुवर्णं वस्त्रञ्च दद्याद्विप्राय दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततस्सम्पद्यते शुभम् ॥
व्रीहीणान्तण्डुलानाञ्च स्फोटनञ्चोत्पतन्ति च ।
अनग्निज्वलनञ्चैव गृहे तूषाप्रसर्पणम् ॥
मासाष्टप्रसवे स्त्रीणामद्भुतं भौमजं स्मृतम् ।
पूर्वोक्तमन्त्रसूक्ताभ्यां मधूकसमिधो घृतम् ॥
अनडुत्काञ्चनं वस्त्रं दद्याद्विप्राय दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततस्सम्पद्यते शुभम् ॥
स्त्रीगर्भपतने वाऽपि महिषीमानुषीगवाम् ।
यमलानि प्रसूयन्ते सिंहादित्येऽप्यथापि गौः ॥

शरीरं स्फुरते वाममकस्माज्जायते कृशः ।
अजा गौर्महिषी मेषी धेनुश्च स्रवते पयः ॥
आत्मजैवात्मनि पिवेद् गौः स्वभावाच्च तृप्यति ।
महिष्यां शुक्लवत्साश्च जायन्ते ये विवर्णकाः ॥
बुधाद्भुतं विजानीयात् स्ववारेण प्रपूजयेत् ।
दर्शोऽस्य दर्शीति वदन् पूर्वोक्तविधया बुधः ॥
गावो वस्त्रं सुवर्णञ्च दद्याद्विप्राय दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततस्सम्पद्यते शुभम् ॥
रुधिरं पतते भूमौ वत्स आरोहते गृहम् ।
गौर्वोपस्करते यत्र नर्दते स्फुटतेऽथ वा ॥
दिवा वृक्षाश्च हन्यन्ते रात्रौ हन्ति गृहन्तथा ।
अमानुषान्मण्डूकान् वा सर्पान् प्रसवते स्त्रियः ॥
बार्हस्पत्याद्भुतञ्चैतत्तेन वारेण वा पुनः ।
आहुतिसूक्तैर्यज्ञाङ्गैर्जुहुयाच्च घृतान्वितैः ॥
वस्त्रं सुवर्णं धेनुञ्च दद्याद्विप्राय दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततः सम्पद्यते शुभम् ॥
रथेन्द्रध्वजवैकृत्ये भङ्गे तत्पतनेऽपि वा ।
कूपमुद्गिरते वाऽपि गर्जते शोषते तथा ॥
स्वयञ्चैवोत्थिताः कुम्भा धूमायन्ते ज्वलन्ति च ।
शुक्लपक्षे चोदयते भार्गवोऽस्तमितोऽथवा ॥
शुक्राद्भुतं विजानीयात्तेन वारेण वा पुनः ।
प्लक्षोद्भवानां समिधां होमः पूर्वविधानतः ॥
वस्त्रं सुवर्णं धेनुञ्च दद्याद्विप्राय दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततः सम्पद्यते शुभम् ॥
मृगगोधावराहाश्च व्याघ्रा ऋक्षा वकास्तथा ।
गजा गवयमहिषा ये चान्ये वनचारिणः ॥
द्वारे प्रविष्टा निष्क्रामन्त्यद्भुतं सुमहद्भयम् ।
देवतार्चाविकारेषु शून्यगेहोत्थितं वचः ॥

शनैश्चराद्भुतञ्चैतत् तेन वारेण वा पुनः।
पूर्वोक्तेन विधानेन समिधोऽश्वत्थजा घृतम्॥
होतव्यञ्च सुवर्णञ्च वस्त्रन्दद्याच्च दक्षिणाम्।
सर्वे पापाः प्रणश्यन्ति ततः सम्पद्यते शुभम्॥

चण्डवाता भूमिकम्पा निर्घाताः पांशुवृष्टयः।
शक्रश्च पतते भूमौ रात्राविन्द्रधनुस्तथा॥
भूधराणां प्रकम्पस्तु देवतापतनेऽपि वा।
राजद्वारे पुरद्वारे भैरवञ्च नदेच्छिवा॥
शवोऽप्युत्थाय निपतेद्विकारोऽन्यश्च दृश्यते॥

अन्ये वृक्षाश्च दृश्यन्ते नानात्वं फलपुष्पयोः।
अपुष्पाः पुष्पयुक्ताश्चाश्वानड्वाहश्च पुष्पिताः।
दिवोल्कादर्शनन्तारा अद्भुतं समहद्भवेत्॥
राह्वद्भुतं विजानीयाद्रविवारेण वा पुनः।
पूर्वोक्तेन विधानेन स्वर्णकुंभजलैस्तथा॥
रात्रौ धेनुं सुवर्णञ्च दद्याद्विप्राय दक्षिणाम्।
सर्वे दोषाः प्रणश्यन्ति ततः सम्पद्यते शुभम्॥
रुधिरादि स्रवेद् वृक्षो भङ्गे प्रपतनेऽपि वा।
काञ्जिकोद्गिरतेऽकस्मान्नर्दते सज्ज्यतेऽथ वा।

भद्रासनं च शयनमकस्माद् भिद्यतेऽपि वा।
राजद्वारे पुरद्वारे केतुर्वा रुवते भृशम्॥
केत्वद्भुतं विजानीयाद्रविवारेण पूजयेत्।
कुशान् केतुगणे हुत्वा दधिमधुघृतान्वितान्॥
कृष्णा गावः सुवर्णञ्च वस्त्रन्दद्याच्च दक्षिणाम्।
सर्वे दोषाः प्रणश्यन्ति ततः सम्पद्यते शुभम्॥

ब्राह्मणा वेदसम्पन्ना ब्रह्मकर्मसमन्विताः।
उपोष्य रात्रिमेकान्तु कर्म कुर्युर्यथाविधि॥

इति मिश्रकाद्भुतम्।

इति महामहोपाध्यायश्रीमाधवकृतः

अद्भुतदर्पणः

★ सम्पूर्णः ★

इति विद्यावारिधिपण्डितश्रीरामचन्द्रझा-श्रीधर्मनाथझा

सम्पादितः

अद्भुतदर्पणः समाप्तः ।

● शमिति ●